# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| May, 1933. | १८५५ शकीये वैशाखे<br>१६श-वर्षस्य १म-संख्या | Vol. XVI. No 1. |
|---|---|---|

## उपनिषत्कथा

[ निबन्धकः—महामहोपाध्यायः श्रीदुर्गाचरण-सांख्यवेदान्ततीर्थः ]

( छान्दोग्ये पञ्चमप्रपाठके )

अस्ति तावच्छान्दोग्योपनिषदि प्राणसंवादो नाम कश्चिल्लोकवृत्तानुयायी रमणीयतरः प्रबन्धभागः। स च श्रोत्रसुखावहतया नितरामुदारार्थपरतया च भावावबोधचतुराणामतीव कौतुकसम्पदमावहति। तत्र च शरीरिणामुपकरणतामुपगतानां प्राणानामेकैकश उपासनं तत्तद्गुणगणानुगतमुपन्यस्तम्, तत्फलमपि यथायथमनुपदमेव प्रदर्शितम्। तत्र वागादिविषयेषु सत्स्वपि गुणविशेषानुगतेषूपासनेषु "हंसो यथा क्षीरमथाम्बुमिश्रम्" इत्युक्तरीत्या मुख्यप्राणोपासनमेवोररीकृत्य वक्तव्यमारभ्यते।

हस्तमस्तकादिनिकायविशिष्टेऽस्मिन् स्थूलदेहे किल प्राग् वागादिकरणान्तराणामाविर्भावात् प्राणापानादिवृत्तिमतः सकलकरणस्थितिहेतोर्मुख्यप्राणस्याविर्भावो भवतीति प्राणस्य श्रेष्ठत्वं निर्विवादमेव; प्राणस्य प्राथमिकत्वेन ज्येष्ठत्वमपि निर्विचिकित्समेव; तथा वागादीनां

करणानां स्थितिर्हि प्राणाधीनेत्यत्रापि न किञ्चिदिव विवादास्पदमस्तीति। ततश्च श्रुतिर्यथोक्तयुक्तिमनुसृत्य प्राणोपासनमभिदधती "यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद, ज्येष्ठश्च ह वै श्रेष्ठश्च भवति। प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" इत्याह।

अत्र च प्रथमं ज्येष्ठश्रेष्ठत्वगुणवत्त्वया प्राणस्य विज्ञानविधिमभिधाय "तं यथा यथोपासते, तथैव ( फलं ) भवति" इति न्यायमुन्नीय स ज्येष्ठश्च श्रेष्ठश्च भवति इति तत्फलं निरदिक्षत्।

विधिर्हि विधेयमावेदयन्नपि यावद् विनेयानामाभिमुख्यं नोत्पादयति, न तावत् कृतकृत्यतामुपगच्छति, अत एव विधेयस्य गुणख्यापनं महिमानुकीर्त्तनमनुपदमेव व्यपेक्षते। इयं हि शैली सर्वेषु विधिशास्त्रेषु सर्वैस्तीर्थकरैरनुमन्यते परिपूज्यते च साग्रहम्। इयमपि श्रुतिस्तामेव सुधीसम्मतां चिरन्तनीं शैलीं सोत्साहं मानयन्तो प्राणप्रशंसनमावेदयितुं भूमिकामारचयन्ती प्रथमं तावदाह --

"अथ ह प्राणा अहंश्रेयसि व्यूदिरे—अहं श्रेयानस्मि, अहं श्रेयानस्मीति।"

यथेह लौकिकव्यवहाराधिकारे वर्तमानाः स्वं स्वं गुणोत्कर्षमनन्यसाधारणं मन्यमाना मानवा अन्योन्यं स्पर्धन्ते,—तथैवामी शरीरपरिगताः प्राणा अपि यथास्वमधिकारमनुनिष्पादयन्तः स्वं स्वं महिमानमनन्यसाधारणतया सर्वतः प्रशस्यं मन्यमानाः करणवर्गेषु 'अहमस्मि सर्वतः श्रेयान्-अहमस्मि सर्वतः श्रेयान्" इति कृत्वा कलहं चक्रुः। एवमुत्सूत्रमुत्तरोत्तरं परिवर्धमाने कलहे स्वयञ्च तत्त्वमवधारयितुमपारयन्तः परमपरितोषं जग्मुः। अथैवं विवदमानाः प्राणा अपेतदोषपक्षं विचारदक्षं कञ्चिन्मध्यस्थमनुसन्दधानाः प्रजापतिं पितरं स्मृतिपथमनयन्। एवं कृताध्यवसायाः "ते ह प्राणाः प्रजापतिं पितरमेत्योचुः—भगवन्, को नः श्रेष्ठ इति?" एवमाभाष्यमाणः प्रजापतिर्जानन्नपि विप्रियवादपरिजिहीर्षयेव कण्ठतः किमप्यनभिधाय तानेव स्वरूपनिर्द्धारणार्थमुपादिशत् —

"तान् होवाच—यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत, स वः श्रेष्ठ इति।"

भोः प्राणाः, यूयमेकैकशः शरीराद् बहिर्निर्गच्छत, यस्य निर्गमनात् परं शरीरमिदं पापिष्ठतरमिव—शरीरं हि स्वभावादेव

"स्थानाद्बीजादुपष्टम्भान्निस्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः ॥"

इत्युक्तदिशा पापिष्ठमेव, ततोऽपि अधिकं पापिष्ठमिव परिलक्ष्येत, स खलु युष्माकं मध्ये श्रेष्ठः, इति शरीर एव सुकरः स्वरूपग्रहः, इत्युक्त्वा मुखमुद्रामकरोत् ।

अथैवं प्रजापतिना समादिष्टाः प्राणास्तदेव निर्णयवर्त्मान्ववर्त्तन्त । तत्र प्रथमं तावत्— "सा ह वागुच्चक्राम, सा संवत्सरं प्रोष्य पर्य्येत्योवाच [ भोः प्राणाः, यूयं ] कथमशकत ऋते मज्जीवितुम् इति ।"

वागिन्द्रियेणैवमभिहिता इतरे प्राणाः शरीरस्य तादवस्थ्यमावेदयन्तस्तां वाचमूचुः शरीरेऽस्मिन् तव स्थितिमन्तरेणापि सर्वेषामस्माकं यथापूर्वमेव सर्वे व्यापारा निरवर्तन्त, केवलं वाग्वैकल्यमात्रं विशेष आसीत् । तथाहि - "यथा कलाः (मूकाः) अवदन्तः, प्राणन्तः प्राणेन, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसा [ जीवन्ति, ] एवमिति" मूकवद् वयमजीवामेत्यर्थः । एवमाकर्ण्य स्वस्य श्रेष्ठत्वविरहमवधार्य्य शरीरमध्ये "प्रविवेश ह वाक् ।"

अथैवं वाचः प्राधान्यप्रत्यये कार्यतो नितरामपनीते सति, चक्षुःश्रोत्रादयोऽपि प्राणाः क्रमेण शरीरान्निरगच्छन्, संवत्सरानन्तरं प्रत्यागत्य यथापूर्वं शरीरस्थितिं चावगत्य पुनः शरीरं प्राविशन् । अथातः परं प्राणस्य प्रस्थानावसरः समुपस्थितः । "अथ ह प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून् संखिदेत्, एवमितरान् प्राणान् समखिदत् ।"

अश्वानां गतिचातुर्यपरीक्षणाय अश्वारोहिणो हि कीलेष्वश्वपादौ रज्ज्वा निबध्य तत्पृष्ठमारुह्य सङ्केतयन्ति ; तत्र तत्सङ्केतमात्रेणैव सुहयः सर्वं कीलजातमुत्पाटयन् प्रस्थातुमुद्यतो भवति । यथायं दृष्टान्तः, तथा मुख्यप्राणस्यापि समुत्क्रमणोद्यमवेलायां वागादीनि सर्वाणीन्द्रियाणि स्वातन्त्र्येण स्थातुमपारयन्तस्तद्गमनानुविधायीनि बभूवुः ।

अथैवमात्मनोऽस्वातन्त्र्यं च प्राणपरतन्त्रतां च सम्यगध्यवस्य तानि सर्वाणि इन्द्रियाणि सनिर्बन्धं "तं ( मुख्यं प्राणं ) हाभिसमेत्योचुः—भगवन्, एधि, त्वं नः श्रेष्ठोऽसि, मोत्क्रमीरिति ।"

अथैवं वागादीनामनुनयं प्रतिपालयन् लब्धावसरः प्राणः स्वमहिमानुरूपाय बलेरुपहरणायेतराणीन्द्रियाणि समादिदेश । मुख्यप्राणेनैवमादिष्टानि तानीन्द्रियाणि तदनुग्रहमात्मकल्याणकारणतया निश्चित्य स्वं स्वं महिमानं तत्सेवार्थमुपन्यस्य भृत्यवत् तदनुविधायीनि भूत्वा निराबाधमावासमलभन्तेति ।

---

# वैदिकी आख्यायिका

[ निबन्धकः—श्रीउपेन्द्रनाथ-विद्याभूषणशास्त्री ]

१ । अथ मन्त्रद्रष्ट्र्या ब्रह्मवादिन्या अपालायाः कथा ।

पुरा किल महर्षेरत्रेस्तनुजा विदुषी श्रीमत्यपाला कारणेन केनचन त्वग्-दोषदुष्टा भर्त्रा परित्यक्ता जनकाश्रमे वसन्ती त्वग्दोषपरिहाराय सुचिरम् इन्द्रम् अधिकृत्य तपस्तेपे । अथ कदाचिद् असौ "सोमरस एव महेन्द्रस्य प्रेष्ठः, ततस्तम् एव प्रदास्यामि देवेशाय" इति मनसा निश्चित्य स्रोतस्वत्यास्तटम् अगमत् । तत्र च स्नात्वा प्रत्यागच्छन्ती पथि सोमम् अपि लेभे । ततः परं प्रीता तम् आदाय पितुराश्रमं प्रतियान्ती मार्ग एव तृषार्त्ता कियन्तम् अपि सोमम् आदत् । अथ तद्भक्षणे दंष्ट्राघर्षणजं शब्दं ग्राव्णां सोमाभिषवध्वनिं मत्वा तदानीम् एव तत्र समागमत् सोमपायी देवेन्द्रः । आगत्य च ताम् अपृच्छत् स्वरधिपः—"अभिषुण्वन्ति किम् अत्र ग्रावाणः बाले ?" इति । सा च प्रत्यूचे—"अभिषेकागता कन्या तृषापीडिता सोमम् आलोक्य भक्षयति तम्, तद्भक्षणजन्यध्वनिरेवायं

न तु ग्राव्णां सोमाभिषवध्वनिरेषः" इति। एवं प्रत्युक्तः परावर्तत देवेन्द्रः। तं च गच्छन्तम् आलोक्य पुनरब्रवीत् तापसी महर्षितनया अपाला—किमिति निवर्तसे त्वं महाभाग? प्रतिगृहम् एव प्रतिगच्छसि त्वं सोमरसपानाय। तत्रापि सम्प्रति मद्दंष्ट्राभ्याम् अभिषुतं पिब सोमम्, भक्षय च धानादीन्" इति। एवम् अनाद्रियमाणा सा तापसी पुनरप्युवाच—"नावगच्छामि त्वाम् अत्राभ्यागतं मदुपास्यं भगवन्तं देवेन्द्रं तत् क्षम्यताम् अज्ञानापराधो दास्या मोहाभिभूताया वराक्या अपालायाः" इत्युक्त्वा सा दिव्यदृष्ट्या मन्त्रसूक्तेन सोमम् आहूय ऋग्भिस्तिसृभिः देवेन्द्राय न्यवेदयत्। तत इन्द्रस्तां कामयित्वा तस्या आस्य एव दंष्ट्राभिषुतम् अपात् सोमम् आपरितोषम्। अथ पीते सोमे "त्वग्दोषादेव परित्यक्ता भर्त्रा एषा दासी सङ्गता देवेन्द्रेण सम्प्रति" इति कथितवतीम् अपालाम् इन्द्रो व्याजहार—"किं कामयसे साध्वि? पूरयामि ते मनोरथम्" इति। अथ देवेन्द्रेण तथोक्ता ब्रह्मवादिनी साध्वी वरम् अचीकमत अपाला। "पितुर्मे शिरो रोमवर्जितम्, ऊषरं तस्य क्षेत्रं फलादिरहितञ्च। तद् यदि प्रसन्नोऽसि मे देवराज, तदा कुरु पूर्णकेशपाशं मे पितुः शिरः, उद्भिज्जादिप्रफुल्लं च सम्पादय तस्य क्षेत्रम्" इति। ततः साध्वीम् आपालां सर्वथा स्वार्थपरिशून्याम् आलोक्य परं प्रीतो देवेन्द्रो महर्षेरत्रेः शिरस्थं खलतिम् अपहाय तस्य क्षेत्रं च फलादियुक्तं कृत्वा तपसश्च तस्याः पूर्णफलाय त्वग्दोषपरिहाराय स्वकीये रथच्छिद्रे शकटस्य युगस्य च छिद्रे वारत्रयम् एतां निश्चकर्ष येन सा सर्वतो निर्दोषा सञ्जाता। ततो देवेन्द्रस्ताम् अपालां सूर्यसदृशत्वचम् अकरोत्। कथेयं शाट्यायनब्राह्मणे स्पष्टम् उक्तम्।

तथा चोक्तं महर्षिशौनकविरचितायां बृहद्देवतायाम्—

अपालाऽत्रिसुता त्वासीत् कन्या त्वग्दोषिणी पुरा।
ताम् इन्द्रश्चकमे दृष्ट्वा विजने पितुराश्रमे ॥१॥
तपसा बुबुधे सा तु सर्वम् इन्द्रचिकीर्षितम्।
उदकुम्भं समादाय अपाम् अर्थे जगाम सा ॥२॥

दृष्ट्वा सोमम् अपाम् अन्ते तुष्टावर्चा वने तु तम् ।
सा सुषाव मुखे सोमं पपाविन्द्रश्च तन्मुखात् ॥३॥
अपूपांश्चैव सक्तूंश्च भक्षयित्वा स तद्‌गृहात् ।
ऋग्भिस्तुष्टाव सा चैनं जगादैनं तृचेन तु ।
सुलोमाम् अनवद्याङ्गीं कुरु मां शक्र ! सुत्वचम् ॥४॥
तस्यास्तद्‌वचनं श्रुत्वा प्रीतस्तेन पुरन्दरः ।
रथच्छिद्रेण ताम् इन्द्रः शकटस्य युगस्य च ।
प्रक्षिप्य निश्चकर्ष त्रिः सुत्वक् सा तु ततोऽभवत ॥५॥
इतिहासम् इदं सूक्तम् आहतुर्यास्क-भागुरी ।
कन्येति शौनकस्त्वैन्द्रं पान्तम् इत्युत्तरे च ये ॥८॥

(ऋग्वेदे अष्टमे मण्डले एकनवतितमसूक्ते ।)

२ । अथ मन्त्रद्रष्ट्र्या ब्रह्मवादिन्याः पारशव्या घोषायाः कथा ।

ऋग्वेदे दशममण्डले एकोनचत्वारिंशं चत्वारिंशञ्च सूक्तद्वयम्, तत्र घोषा नाम काक्षीवती पारशवी ऋषिः। अश्विनौ देवता। तस्याः पुत्रः घोषेयः सुहस्त्यश्च ऋषिः । तथा चोक्तं बृहद्देवतायाम्—

आसीत् काक्षीवती घोषा पापरोगेण दुर्भगा ।
उवास षष्टिं वर्षाणि पितुरेव गृहे पुरा ॥१॥
आतस्थे महतीं चिन्तां न पुत्रो न पतिर्मम ।
जरां प्राप्ता मुधा तस्मात् प्रपद्येऽहं शुभस्पती ॥२॥
यथैतौ मामकस्तात आराध्यावाप यौवनम् ।
आयुरारोग्यम् ऐश्वर्य्यं सर्वभूतहने विषम् ॥३॥
रूपवत्तां च सौभाग्यम् अहं तस्य सुता यदि ।
ममापि मन्त्राः प्रादुःष्युर्यैः स्तोष्येते मयाऽश्विनौ ॥४॥
चिन्तयन्तीति सूक्ते द्वे यो वां परिददर्श सा ।
स्तुतौ तावश्विनौ देवौ सुभगां चक्रतुश्च तौ ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यं च सुतं मुनिम् ॥५॥

आङ्गिरसस्य दीर्घतमसः शूद्रीतनुजस्य कक्षीवतः पारशवी तनुजा घोषा मन्त्रद्रष्ट्री ब्रह्मवादिनी देवभिषजोर्यमयोरश्विनोः सूक्ताभ्यां स्तोत्रेण कुष्ठ-रोगान्मुक्ता पतिपुत्रवती बभूव। अभूत् तस्यास्तनुजो महर्षिः सुहस्त्योऽपि मन्त्रद्रष्टा ऋषिरेव।

---

## वररुचेरात्मवृत्तान्तः

[ निबन्धकः—श्रीउपेन्द्रनाथ विद्याभूषणशास्त्री ]

आसीन् पुरा कौशाम्ब्यां सोमदत्तो नाम विप्रः कश्चन, यश्च पश्चात् अग्निशिख इति प्रथितिं गतः। वसुदत्ता नाम रमणी-शिरोमणिः पत्नी बभूव तस्य भूसुरस्य। तस्माद् द्विजरत्नात् उद्भवम् अहं तस्यां नारीललामभूतायां जनन्यां मदीयायाम्। अथ दारुणप्रतिकूलदैवात् शैशव एव मे पञ्चत्वम् अगमत् कुलशेखरो मम जनकः। एकैव मे जननी माम् अवर्द्धयत् कृच्छ्रेण महता। ततः कदाचित् पथिकौ विप्रौ नो गृहम् अभ्यागतौ। तिष्ठतोश्च तयोः सहसा बभूव मनोहारी मुरजध्वनिः। तेन च शब्देन स्मृतभर्तृचरणा मज्जननी माम् अवोचत्—"वत्स, एष ते पितुः सखा नृत्यति नटो भवानन्दो नाम।" तदाकर्ण्य ताम् अवदम् अहं मातरम्, "अम्ब, व्रजानि द्रष्टुम् अहम् एतत्। आलोक्य च सर्वं स्वपाटवं दर्शयिष्यामि" इति। एतद् आकर्ण्य परं विस्मयं गतौ विप्रौ तावतिथी। तदालोक्य प्रोक्तं मे जनन्या, "वत्सौ, नात्र कार्य्यः कोऽपि विस्मयः। अलम् एष शिशुः सकृदपि श्रुतं सर्वं हृदि धारयितुम्" इति।

अथ समुत्सुकाभ्याम् एताभ्यां मम सकाशे पठितं सर्वं प्रातिशाख्यम्, अहम् अपि पश्यतोस्तयोः सर्वं यथाश्रुतम् अपठम् अविकलम्। ततस्ताभ्याम्

अभ्यागताभ्यां सह गत्वा तत्र नाट्यं यथायथम् आलोक्य गृहं प्रत्यागत्य च तत् सर्वं मातुर्दर्शितम्। अथ व्याडिर्नाम तयोरन्यतरो मां श्रुतधरं निश्चित्य मन्मात्रे प्रणम्य कथाम् इमाम् आख्यत्।

"अम्ब, वैतालाख्ये नगरे देवस्वामी करम्भकश्च इति भ्रातरौ विप्रकुलजौ परस्परम् अतिप्रणयिनौ बभूवतुः। तयोरेकतरस्य तनुजोऽयम् इन्द्रदत्तो नाम, अपरस्य नन्दनश्चाहं व्याडिर्नाम समुत्पन्नौ। कियतापि कालेन परलोकं गतो मे जनकः, तच्छोकादेव चास्य पिता महापथं प्रस्थितः। ततश्चावयोर्जननीभ्यां नितरां शोकार्ताभ्याम् अचिरेणाप्ता पतिगतिः।

अथ सति धनेऽपि निराश्रयौ विद्याकाङ्क्षया द्वावावां स्वामिकुमारं प्रार्थयितुं दक्षिणापथं गतौ महति तपसि स्थितौ। अथ स प्रभुः स्वप्नं दिदेश, "अस्ति नन्दभूपतिनाधिष्ठितं पाटलिपुत्रं नाम सुविशालं नगरम्। तत्र वर्षो नाम वर्तते कश्चित् नानाशास्त्रतत्त्वज्ञो द्विजः। तस्मात् कृत्स्नाम् आप्स्यथस्तदीयां विद्याम्। तत् तत्र गम्यताम् अविलम्बितं युवाभ्याम्" इति।

अथावां प्रस्थितौ तत्पुरम्। पृच्छतोश्च तत्रावयोः "कश्चित् अत्र वसति वर्षनामा मूर्खो द्विजः" इति तत्रत्या जना अवदन्। आवाञ्च दोलाचलचित्तौ एव गत्वा तस्य गृहं हतच्छायम् अतिदुरवस्थम् अपश्याव। तत्र समाधिस्थं तं वर्षम् आलोक्य तत्-पत्नीं धूसरक्षामकलेवरां विशीर्ण-मलिनाम्बरां गुणवतीं साध्वीं रूपिणीम् इव दुर्गतिम् उपागतौ। उपेत्य च सप्रणामम् आवाभ्यां स्ववृत्तान्तो जनवादश्च तस्यै विहितातिथ्यायै निवेदितौ। सा तु "पुत्रौ युवाम्, कात्र व्रीडा, तत् श्रूयताम्" इति कथां वक्ष्यमाणाम् अवर्णयत् आवाभ्याम्।

अभूत् अस्मिन् नगरे शङ्करस्वामिनामा सर्वशास्त्रविशारदो विश्रुतो द्विजोत्तमः। मम भर्ता तदनुज उपवर्षश्च तस्य तनुजौ बभूवतुः। एष मे पतिर्मूर्खो दरिद्रश्च। तदनुजो मदीयो देवरस्तु तद्-विपरीतः। उपवर्षेण च स्वभार्या गृहपोषणे नियोजिता। प्रावृषि योषितः सगुडं जुगुप्सितं

पिष्टकं रचयित्वा ददाति मूर्खाय द्विजाय। एवम् आचरन्तीनां शीते ग्रीष्मे च न क्लेशः कोऽपि स्यात् इति रीतिः चिरम् अत्र प्रचलति। परं दत्तम् एतत् सर्वं न प्रतिगृह्णन्ति कुत्सितत्वात् तदाचारस्य। मम देवरगृहिणी तत् पिष्टकं सदक्षिणम् अर्पितवती मद्भर्त्रे दरिद्राय पतिज्यायसे। स च प्रतिगृह्य तत् गृहम् आयात एव मया भृशं निर्भर्त्सितो मूर्खभावकृतमन्युना परितप्तः सद्य एव स्वामिकुमारस्य पादमूलं प्रतस्थे। तेन च तपसाऽऽराधितेन सर्वा एव विद्या अस्मै प्रदत्ताः। आदिष्टश्च सकृच्छ्रु तधरं प्राप्य विद्या एताः प्रकाश्याः' इति मद्भर्ता सहर्षो गृहं प्रत्यागतः सर्वम् एव वृत्तान्तम् आख्याय मह्यम्, ततः प्रभृति केवलम् अविरतम् ध्यायन् जपंश्च यापयति कालम्। तद् यदि युवां कश्चित् श्रुतधरम् आनयेतं बालं वा युवानं वा तदा सर्वार्थसिद्धिर्युवयोः भविष्यति निःसंशयम्' इति। श्रुत्वैतत् आवाभ्याम् अस्यै सुवर्णशतं समर्प्य ततः पुरात् निष्क्रान्तौ पृथ्वीं पर्यटन्तौ क्वचिदपि श्रुतधरम् एकम् अलब्धवन्तौ तव गृहम् अद्य प्राप्तौ। प्राप्तश्च तवायम् अम्ब बालः श्रुतधरः। एनं देहि, गच्छामो वयं विद्यासिद्धये।"

इत्येवं व्याडिवचनं समाकर्ण्य मदम्बा सादरम् अवोचत्—"सर्वम् एतत् सङ्गच्छते, वत्स। नात्र मे कश्चित् प्रत्ययाभावः। जातमात्र एव एतस्मिन् मम शिशौ गगनात् उदचरद् वाग् अशरीरिणी 'अयम् एकः श्रुतधरः समुत्पन्नो वर्षात् प्राप्स्यति सर्वा विद्याः, व्याकरणं चास्य लोके गमिष्यति पूर्णां प्रतिष्ठाम्। नाम्ना चायं वररुचिः, यद् यद् उत्कृष्टं भवेत् तत् तद् अस्मै रोचिष्यते" इति। तस्मात् शिशौ विवृद्धेऽस्मिन् सततं चिन्तयामि, क्वासौ वर्षाभिधानो महापण्डित उपाध्यायो विद्यते? अद्यैव युष्मन्मुखात् सर्वं ज्ञात्वा महान् समजनि मे परितोषः प्रसन्नं दैवम् इति। तद् नयतम् एनम्। भ्राता युवयोरेष मे बालः" इति।

अथ मम मातुर्वचनेन परं प्रीतौ व्याडीन्द्रदत्तौ क्षणम् इव तां रात्रिम् अनयताम्। ततो व्याडिना उत्सवार्थं मम जनन्यै निजं धनं दत्त्वा वेदाधिकरणार्थम् अहम् उपनीतः। ततो मात्रा कथञ्चित् निरुद्धबाष्पया

अभ्यनुज्ञातं माम् आदाय तरसा नगर्यास्तस्याः प्रस्थितौ तौ भ्रातरौ विद्यार्थिनौ। क्रमेण वयम् आगता गुरोर्वर्षस्य गृहम्। सोऽपि मां स्वामिनः कुमारस्य प्रसादम् इव मूर्त्तम् अमन्यत।

अथापरेद्युः शुचौ देशे समासीन उपाध्यायः समावेश्य तस्याग्रतो नः प्रथमम् ओङ्कारम् अदात्। ततश्च सर्वे वेदा उपस्थिताः। मया सकृच्छ्रुतं, व्याडिना द्विः श्रुतम्, इन्द्रदत्तेन त्रिः श्रुतं सर्वम् अगृह्यत गुरु-शिक्षितम्। एवञ्च वेदध्वनिम् अपूर्वम् अस्माकम् आकर्ण्य समन्तात् सविस्मयो विप्रवर्गः "किम् एतत्" इति वर्षम् अभ्यागत्य स्तुतिभिः प्रणतिभिश्च अभ्यपूजयन् गुरुदेवम्। केवलम् उपवर्षम् अन्तरेण सर्व एव नागरजनो विततमहोत्सवस्तदाऽऽसीत। नृपतिरपि नन्दस्तम् अस्मद् गुरुदेवं पार्वती-सूनुवरप्रभावविलसितं आकर्ण्य सपरितोषम् उपेत्य वसुराशिभिः टङ्कारि-ध्वनिभिश्च मनोहारिभिः अपूपुरत् गुरुदेवनिकेतनम्।

---

## सुभाषितानि

१। गन्तृच्छायां परित्यज्याऽऽगामिनी छाया ग्रहीतव्या।

२। काकोऽपि रटतु घटीयन्त्रं च प्रवर्तताम्।

३। अहो साधुतरे संग्रामे चापस्य ज्याभङ्गः।

४। कस्य वा गच्छतः स्खलनं न सम्भवति।

५। यद्यस्ति नर्तकीनां वैशद्यं किमपि गीतविद्यायाम्।
तन् किल विदग्धलोकः कथयति कनकस्य सौरभं जातम्॥

६। नद्यां तीर्णायां नाविकमवमन्यते।

७। अन्तर्गुम्फितगरलं बहिरपि पुण्ड्रेक्षुशरतो मधुरम्।
कथमिव सत्यं मन्ये खलवचनं गगनकुसुमगन्धनिभम्॥

८। तथैव सा लौकिकी गाथा वृद्धवारविलासिनी वानरी भवतीति।

---

# न्यायदर्शनम्

[ निबन्धकः—श्रीतारानाथ-न्यायतर्कतीर्थः ]

यस्याः कृपाकणामात्रं निखिलः शास्त्रविस्तरः ।
तामहं वाङ्मयीं विद्यां प्रपद्ये शरणं मुहुः ॥

अपारेऽस्मिन् विश्वपारावारे कति नाम वस्तुजातानि समुद्भवन्ति विलसन्ति विलीयन्ते च हन्त बुद्बुदवृन्दानीव प्रतिमुहूर्त्तम्। स्थावर-जङ्गमादिभेदभिन्नेषु तेषु जीवमात्रस्यैवेयं स्वाभाविकी वृत्तिर्यत् ते नियतं सुखमेव कामयन्ते, दुःखञ्च परिजिहीर्षन्ति, नाधिगच्छन्ति पुनस्तादृशं कमपि पन्थानं येन स्वाभिलषितं यथार्थसिद्धिसमालिङ्गनैः कृतार्थतामापद्येत ।

सत्यपि तादृक्पथनिर्देशकारिणि प्रवाहाविच्छेदचिरन्तने विश्वपितुरेव परमानुग्रहप्रकाशभूते वेदशास्त्रे पाषण्डनास्तिकादीनां विरुद्धव्याख्यानादिभिः कुतर्कजटिलयुक्तिजालैश्च समाच्छन्नतया तदीययथार्थतत्त्वानाम् अध्यात्म-तत्त्वज्ञानं विना विशिष्टविचारप्रतिभामन्तरेण वा सम्यग् बोद्धुमशक्यतया यथामति प्रवर्तमानानां जीवानां दुःखतरङ्गपरम्पराभिघातविनिवृत्तिरशक्यै-वेति विवेचयन्तः परमकारुणिकाः साधनासिद्धनिखिलतत्त्वदर्शनास्तत्रभवन्तः कपिलाक्षपादकणादपतञ्जलिवेदव्यासजैमिनीतिविश्रुतनामधेया महर्षयः साङ्ख्य-न्यायवैशेषिकपातञ्जलवेदान्तपूर्वमीमांसाभिधानमास्तिकदर्शनषट्कं प्रणीत-वन्तः, यस्य महिम्नेयं पुण्या भारतभूमिः समग्रजगति परां गौरवसरणि-मध्यास्ते।

देशकालप्रतिपाद्याद्यवस्थानुसारेण तेषां स्वस्वशास्त्रे सत्यपि प्रस्थान-भेदे पाषण्डादिमतनिरासपुरःसरं हेयोपादेयतत्त्वव्यवस्थापनया परमपुरुषार्थ-प्रतिपादनविधौ नास्त्येव तत्र कोऽपि विसंवादः। प्रागुक्तेषु दर्शनेषु न्याय-शास्त्रमेव ममाद्यतनप्रबन्धविषयः। न्यायशास्त्रमिदमतीव प्राचीनं दर्शनम्।

इदं खलु महर्षिभिर्गोतमपादैः सूत्राकारेण प्रकाशमात्रमापादितं न तु प्रणीतम्, यतो वेदविद्येव न्यायविद्यापि विश्वकर्तुरेव परमानुग्रहदत्ता सम्पदित्यपि कैश्चित् पुराणोपनिषदादिभिः प्रतिपाद्यते। तथाहि श्रीमद्भागवते—

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथैव च।

एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्रतः ॥ ३।१२।४४।

अत्र "दह्रतः" हृदयाकाशात् इति श्रीधरस्वामी। आन्वीक्षिकी च न्यायविद्या। तथाहि वात्स्यायनः—"प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्तते इति आन्वीक्षिकी न्यायविद्या न्यायशास्त्रम्" इति। सुबालोपनिषदि च द्वितीयखण्डे "तस्यैतस्य महतो भूतस्य निश्वसितमेवैतदृग्वेद" इत्यादिश्रुतौ विराडात्मनो भगवत एव निश्वसितत्वेन न्यायशास्त्रस्याप्युल्लेखो दृश्यते।

न्यायसूत्रकारो महर्षिरक्षपादः कदा कं देशं जन्मना समलङ्कृतवानिति सूक्ष्मतया विनिर्णये ऐतिहासिका एव परं प्रमाणम्, वयन्तु स्थूलतया केवलमिदमेव प्रतिपादयितुं शक्नुमो यत् सप्तविंशतितमे चतुर्युगपरिवर्त्ते प्रभासतीर्थे महर्षिरेष प्रादुर्भूत इति। तथाहि वायुपुराणस्य पूर्वखण्डे त्रयोविंशाध्याये ब्रह्ममहेश्वरसंवादे—

सप्तविंशतिमे प्राप्ते परिवर्त्ते क्रमागते।

जातूकर्ण्यो यदा व्यासो भविष्यति तपोधनः ॥

तदाऽप्यहं भविष्यामि सोमशर्मा द्विजोत्तमः।

प्रभासतीर्थमासाद्य योगात्मा लोकविश्रुतः ॥

तत्रापि मम ते पुत्रा ( शिष्या ) भविष्यन्ति तपोधनाः।

अक्षपादः कणादश्च उलूको वत्स एव च ॥

इति महेश्वरोक्तिः।

अक्षपादमहर्षेर्गोतम इति गौतम इति वा नामान्तरं चिरप्रसिद्धम्, गोतमशब्दात् स्वार्थे अण्प्रत्ययेन गौतमशब्दनिष्पत्त्या तदुभयोरभेदं भावयन्तोऽपि वयं कतमो गौतमोऽसावक्षपादापरनामा न्यायसूत्रकार इत्यत्र

महतीं सन्देहदोलामेवाधिरूढाः, यतः केचिन्मत्स्यपुराणवर्णितमुशिजमहर्षेः पुत्रं "दीर्घतम" इत्यभिधानमन्यगौतमं न्यायसूत्रकारं वदन्ति, केचिच्च शतपथब्राह्मणवर्णितं राहूगणगौतममेनं निर्द्दिशन्ति, केचिदपि श्वेतवाराहकल्पे ब्रह्मणो मानसः पुत्रो गौतमः प्रादुर्भूतः, स एव न्यायसूत्रकार इति व्याचक्षते, वयन्तु यथाशक्ति तत्तद्विप्रतिवादपर्य्यालोचनया जनकवंशपुरोहितमहल्यापतिं राहूगणगौतममेव न्यायसूत्रकारं सम्भावयामः। अलमेभिर्देशकालव्यक्तिनामादिगवेषणबाहुल्यैः, यतः शास्त्रगौरवं प्रति तत्तदवधारणापेक्षया प्रतिपाद्यविषयोपयोगानामेव सम्यक् प्रयोजकतया तदालोचनप्रवृत्तेरेव सुतरामौचित्यं प्रतिभाति, अतः साम्प्रतं प्रकृते परमपुरुषार्थे न्यायशास्त्रस्यास्योपयोगं प्रति किञ्चिदालोचयितुं प्रयत्नः क्रियते।

सुखं नाम जगति सर्वेषां काम्यमपि न परमपुरुषार्थः, तस्य नियतं दुःखानुषङ्गितया दुःखरूपत्वेन हेयत्वात्, किन्तु दुःखात्यन्तनिवृत्तिरूपो मोक्ष एव सः, तस्यैवाधिगमे साक्षात् परम्परया वा येषां तत्वज्ञानमपेक्ष्यते तानेव पदार्थान् संक्षेपतः षोडशधा प्रदर्शयन्महर्षिः प्रमाणप्रमेयेत्यादि प्रथमं सूत्रं प्रणीतवान्, तत्र च यथार्थज्ञानमात्रं प्रति प्रमाणस्यापेक्षिततया प्रथमतस्तदुपन्यासः। ततश्च तज्ज्ञेयतया द्वितीयतः प्रमेयस्य। यद्यपि प्रमाणेन यानि ज्ञायन्ते तानि सर्वाण्येव प्रमेयाणीति, नव्यन्याये च सर्वपदार्थसाधारणतयैव प्रमेयत्वं सुप्रसिद्धम्, तथाप्यत्र येषां तत्त्वज्ञानं साक्षान्मोक्षाय, मिथ्याज्ञानञ्च संसाराय प्रभवति तानेव द्वादश "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" इति सूत्रेण प्रमेयतया परिभाषितवान्, संशयादयश्च प्रमेयेष्वन्तर्भवन्तोऽपि कथं पृथङ्निरूपिता इति भाष्यवार्त्तिकतात्पर्य्यकृद्भिः सविस्तरमभिहितम्, संक्षिप्ततमस्त्वयमभिप्रायो बोध्यः—मोक्षस्य साक्षादुपयोगिज्ञानविषयतया परिभाषितेषु प्रमेयेष्वात्मा तावन्न तत्त्वतो लौकिकप्रत्यक्षगम्यः, अपि तु श्रवणमननादिक्रमेणैव साक्षात्कर्त्तव्यः, तत्र मननप्रधानमिदं न्यायशास्त्रम्, तथाच न्यायकुसुमाञ्जलावुदयनः—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥

इति। अत्र मननस्य विशेषतः प्रदर्शनीयतया संशयादिनिग्रहस्थानान्तानां पदार्थानाञ्च तदङ्गत्वेन तेषामपि न्यायप्रस्थाने प्राधान्यमिति पृथक्कृतया निर्देशः।

शास्त्रेऽस्मिन् षोडशया पदार्थानामुद्देशके प्रमाणप्रमेयेत्यादिप्रथमसूत्रे "आत्मशरीरे"त्यादिप्रमेयनिरूपणसूत्रे च ईश्वरस्यानुल्लेखात् केचिदेवं पूर्वपक्षयन्ति यत्—मोक्षं प्रति ईश्वरस्य किं न विद्यते किञ्चिदप्युपयोगित्वम् अथवा निरीश्वरतावादी तत्र भवानक्षपादः? कथमन्यथा पदार्थोद्देश-विभागादौ तस्य नामापि नोल्लिखितमिति। अत्रेदमवधातव्यम्—न खल्वेष महर्षिर्निरीश्वरतावादी, "ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" (४।१।१९) इति सूत्रे स्पष्टमेवैतेन कर्मफलव्यवस्थापकतया ईश्वरस्याङ्गीकारात्। तथापि यदुद्देशसूत्रे प्रमेयसूत्रे च तस्यानुल्लेखस्तत्रैवं युक्तिमुत्पश्यामः—अधिगन्तव्यो मोक्षः, अधिगन्ता जीवात्मा, स च शरीरादीनि यानि हेयत्वेन तत्त्वतो बुद्ध्वा विरक्तस्तानि परिहाय मोक्षमधिगन्तुं शक्नुयात् तानि च दश, समुदयेनैतानि द्वादश मोक्षाधिगमे साक्षादुपयोगीनि प्रमेयतया परिभाषितवतो महर्षेस्तत्र तत्साहचर्येण ईश्वरस्योल्लेखे किमपि प्रयोजनमेव भवितुं नार्हति, एवञ्च तेषां प्रमेयाणां तत्त्वज्ञाने जननीये साक्षाद् वा परम्परया वा प्रमाणसहायतया येषां संशयादीनामुपयोगस्तान्येव समुदितानि षोडश पदार्थतया समुद्दिष्टवतो मुनेरीश्वरोल्लेखस्य तत्र कथमवसरः? न ह्यस्मादृशा-मनुयोगभिया शास्त्रकृतां स्वस्वप्रस्थानक्रमहानं कदापि सम्भवतीति। अत्रावसरक्रमेणैतदपि वक्तव्यं यद् गोतमसूत्रभाष्यादीन्येव न केवलमेतत्-प्रबन्धविषयः, अपि त्वेतदविरोधिप्रस्थानं नव्यन्यायशास्त्रमपि, द्वयोरपि न्यायत्वेन चिरं विद्वज्जनपरिगृहीतत्वात्। इत्थञ्चाध्यात्मतत्त्वेष्विव लौकिकेष्वपि विषयेषु प्रतिपदं न्यायशास्त्रस्य महानुपयोगः, यस्य कस्यापि शास्त्रस्य तत्त्वावबोधे सम्यग् जननीये कुतार्किकाणां निरासे स्वपक्षस्थापनो-

प्रयोगिदृढतरयुक्तिविन्यासे वा यादृशी बुद्धिप्रतिभा समपेक्ष्यते तत्र न्यायशास्त्रस्य महानुपयोग इत्यत्र नास्ति कोऽपि विसंवादः। आलोड्यमानेऽपि द्राक्षादौ रसनायोगमन्तरेणेव समालोच्यमानेऽपि शास्त्रार्थसार्थे न्यायप्रतिभायोगमन्तरेण न जायते माधुर्योपलब्धिः। अत एवोक्तं भगवता मनुना—

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥

इति। भाष्यकारेण च भगवता वात्स्यायनेन सुष्ठूक्तम्—"सेयमान्वीक्षिकी... प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्" इत्यादि।

ये तावदत्र दुरूहविचारचातुरीप्रभृतीनां सद्भावेन नितान्तदुष्प्रवेशतामाकलय्य दूरत एवेदं परिहर्त्तव्यं मन्यन्ते,—प्रबन्धावसाने तान् प्रति सविनयमिदं निवेदनं यत्—परमोपयोगिनीयं न्यायविद्या कण्टकक्षतिभिया कमलिनीव काठिन्यभिया नार्हति परिहरणीयतां मनीषावताम्।

"आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्" इत्यलं पल्लवितेन।

———

# गुणाः पूजास्थानं गुणिषु

[ निबन्धकः—के. ए. रामलिङ्ग-शास्त्री ]

तपः-स्वाध्याय-निरतं वाल्मीकिर्नारदं मुनिम्।
को न्वस्मिन् सांप्रतं लोके गुणवानिति पृष्टवान्॥
उत्कर्षाधायको धर्म आत्मनिष्ठो गुणः स्मृतः।
'गुणोद्द्योतन-दीपानां सतां न परमुज्ज्वलम्।
यावन्मलिनमप्येषां कर्म दृष्टेः प्रसाधनम्॥
गुणः कृशोऽपि प्रथते पृथुरप्यपचीयते।
प्राप्य साधु-खलौ चन्द्रः पक्षाविव सितासितौ॥'

'प्रबन्धानां प्रबन्धॄणामपि कीर्ति-प्रतिष्ठयोः ।
मूलं विषयभूतस्य नेतुर्गुण-निरूपणम् ॥'
'यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिका-मोदः शपथेन विभाव्यते ॥'
'रघूणामन्वयं वक्ष्ये तनु-वाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥'
रघु-वंशस्य करणे कालिदासो महाकविः ।
रघूणां गुण-सङ्घस्य श्रवणं हेतुमब्रवीत् ॥
वैवस्वतमनोर्वंशे दिलीपः शुद्धिमत्तमः ।
जातः सद्गुण-सम्पन्न इन्दुः क्षीरनिधाविव ॥
'तं वेधा विदधे नूनं महाभूत-समाधिना ।
तथा हि सर्वे तस्याऽऽसन् परार्थैकफला गुणाः ॥
ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघा-विपर्ययः ।
गुणा गुणानुबन्धित्वात् तस्य स-प्रसवा इव ॥'
श्रीहर्षो वर्णयामास नल-भूपं 'गुणाद्भुतम्' ।
यशः-पटमुवायाऽस्य भटानां 'चातुरी-तुरी' ॥
'रणेऽसि-वेम्नः' साह्येन गुणैः शुक्लैर्दिशां बहुम् ॥
'यदि त्रिलोकी'ति पद्येऽवर्णयद् गुण-मण्डलम् ॥

तथा च, गुणिषु विद्यमाना विद्योतमाना वा गुणा एव पूजा-प्रयोजकाः । 'गुण'-शब्दार्थस्तु बहुविधः—सन्धि-विग्रहादयः षड् गुणा इति नीति-कोविदाः, केचित् सत्त्वरजस्तमांसि त्रयो गुणा इति, पाकविद्यायाम् उल्बणाऽनुल्बणसमतात्मकं गुणत्रितयम् इति, वस्त्र-वयन-विद्यायाम्—गुणाः तन्तवः इति, अन्ये च—शौर्य-धैर्य-गाम्भीर्यौज्ज्वल्य-लावण्यादयो गुणा इति निगदन्ति ; अपरे च—यत्राऽऽकृतिस्तत्र गुणा वसन्तीति ; इतरे च—

'अहिंसा सत्यमस्तेयं शौचमिन्द्रिय-निग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥' (याज्ञ-स्मृ. गृ. ध. १२२.)

इति ईरयन्ति ; नव-रत्नायमाना एते गुणाः—अहिंसादयः, 'ब्राह्मणाद्याचण्डालं धर्म-साधनम्' इति विज्ञानेश्वरीय-व्याख्या विज्ञापयति ।

गुणवन्तो हि विरलाः दोषवन्तस्त्वनन्तकाः ; ब्रह्मणो निदेशेन शतकोटि-प्रविस्तरं श्रीमद् रामायणम् उपदेष्टुं वाल्मीकेराश्रमम् अश्रमं प्रविष्टो नारद-महर्षिः,—सामान्यतो विशेषतश्च प्राचेतसेन पृष्टस्य प्रश्नस्य प्रतिवचन-प्रारम्भसमये—

'बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने ! वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः ॥'

इति प्रतिज्ञाय, 'इक्ष्वाकु-वंश-प्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ।
बुद्धिमान नीति-मान वाग्मी श्रीमाञ्छत्रु-निबर्हणः ।
विपुलांसो महाबाहुः कम्बु-ग्रीवो महा-हनुः ।
महोरस्को महेष्वासो गूढ-जत्रुररिन्दमः ।
...　　...　　...　　...
स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः ।
समुद्र इव गाम्भीर्ये, धैर्येण हिमवानिव ॥
विष्णुना सदृशो वीर्ये, सोमवत् प्रियदर्शनः ॥
कालाग्निसदृशः क्रोधे, क्षमया पृथिवी-समः ।
धनदेन समस्त्यागे, सत्ये धर्म इवाऽपरः ॥'
...　　...　　...　　...

इत्यादिना महता प्रघट्टकेन रामभद्र-गुण-रत्नमहोदधिं योजयामास ।

'राघवत्वेऽभवत् सीता, रुक्मिणी कृष्ण-जन्मनि ।
अन्येषु चाऽवतारेषु विष्णोर्देहानपायिनी ॥'

इति श्रीविष्णुपुराणवचनात् ।

'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म-संस्थापनार्थाय संभवामि युगे युगे ॥'

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !
अभ्युत्थानम् अधर्मस्य, तदाऽऽत्मानं सृजाम्यहम् ॥'

इति च भगवत्प्रतिज्ञया दुष्टनिग्रह-शिष्ट-परिपालनार्थम् अवतीर्णम्, अनन्त-कल्याणगुणगण-मण्डन-मण्डितम्, आत्मारामं रामं यदा नु खलु अप्रतिरथो दशरथः प्रकृतिप्रिय-काम्यया यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः, ननु तदानीमेव पूर्वदत्तवरा कैकेयी देवी,—'विवासनं च रामस्य भरतस्याऽभिषेचनं' वरम् एनम् अयाचत। स सत्यवचनविलोप-भयात् त्वरितमेव महीपतिः पद्म-पत्र-विशालाक्षं रामभद्रं स-खेदं विवासयामास। 'मातृ-देवो भव, पितृ-देवो भव' इति वेदचोदितं धर्मं सत्यापयन्निव रामोऽपि विपिनं जगाम। 'ज्येष्ठः भ्राता पितृसमः' इति अभियुक्तोक्तिम् आद्रियमाणो लक्ष्मणोऽपि, सौभ्रात्रम् अभिदर्शयन् गहनं गाहमानम्, आजानुबाहुं रामम् अनुजगाम ; 'रामस्य दयिता भार्या नित्यं प्राण-समा हिता' सिद्धौषधिरिव, देवमायेव निर्मिता सर्व-लक्षण-सम्पन्ना नारीणाम् उत्तमा, उद्भूता यज्ञिय-कुण्डात् जनक-महाराजस्य नन्दिनी 'सीताप्यनुगता रामं शशिनं रोहिणी यथा' इत्याद्यां कथाम् अखिल-पुरुषार्थप्रदायिनीं पावनीम् —

'पठन् द्विजो वागृषभत्वम् ईयात्, स्यात् क्षत्रियो भूमि-पतित्वम् ईयात्।
वणिग्जनः पण्य-फलत्वम् ईयात्, जनश्च शूद्रोऽपि महत्त्वम् ईयात् ॥

इति फलश्रुति-पर्यन्ताम् उपादिशन्नारदः श्लोकानां शतेन। अतः, श्रीमद्रामायणेतिहास-कथा नायिका-नायकप्रकाण्डयोः सीतारामयोः सच्चरित्र-चर्चयैव सर्वेषाम् आत्मगुणानाम् आदर्शतलेनेव आननाद्यवयवसौष्ठवस्य अभिव्यक्तिर्दृढं भविष्यतीति मन्यामहे।

'गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः।
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ रघु स. १०, ५ ॥

गुणि-निष्ठ-गुणाभिधानमेव स्तुतिः, इति दर्शनकाराः प्रणिगदन्ति। गुणशाली जनः स्त्री वा भवतु, पुमान् वा भवतु, तत्र न कापि विवक्षा कर्तव्या ; यतो महाकविः कालिदासः—

'तथापि शस्त्र-व्यवहार-निष्ठुरे विपक्ष-भावे चिरमस्य तस्थुषः।

तुतोष वीर्यातिशयेन वृत्रहा, पदं हि सर्वत्र गुणैर्निधीयते॥' (रघु ४।६२)

इति सूक्तेन रघोर्वीर्यातिशयं बलाधिष्ठानदेवो देवेन्द्रोऽपि प्रशंसन् भृशम् अप्रीयत इति वर्णयामास। अत्र किञ्चिदवधेयम्—स्वयं वीर एव वीरं जानाति; कथं शत्रु-विषये प्रीतिरिन्द्रस्य प्रादुरभवद् इति चेत्, यतो गुणाः शौर्य-धैर्य-गाम्भीर्याप्रधृष्यत्वादयः शत्रूनपि आवर्जयन्ति; यतश्च सर्वत्र=शत्रु-मित्रोदासीनेषु, पदम्=अङ्घ्रिः, गुणैः पूर्वोक्तैः, निधीयते=निक्षिप्यते; गुणैः सर्वत्र सङ्क्रम्यते इत्यर्थ इति। गुरुदक्षिणा-याचनार्थमागतस्य कौत्सस्य मनोरथ-परिपूरणेन वदान्यता रघोर्वर्णिता; कौत्सस्य च यावदादेयं तावता सन्तृप्तता—

'जनस्य साकेत-निवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।

गुरु-प्रदेयाधिक-निस्पृहोऽर्थी नृपोऽर्थि-कामादधिक-प्रदश्च॥'

इति कवि-व्याहारेण विशदीक्रियते।

'गुणि-गण-गणनारम्भे न पतति कठिनी ससम्भ्रमं यस्य।

तेनाऽम्बा यदि सुतिनी, वद वन्ध्या कीदृशी भवति?॥'

इति नीतिपद्यमपि सद्भिर्लोकोत्तर-गुणवत्तमत्वपरिगणनं सत्कारनिदानं कुमाराणामिति प्रकटीकरोति।

"प्रवर्तते तस्य विशेष-शालिनी गुणानुरोधेन विना न सत्क्रिया'॥

इति भारविः वर्णयामास दुर्योधनानुशासनम्।

किञ्च,

'कौशेयं कृमिजं सुवर्णमुपलाद् दूर्वाऽपि गोरोमतः,

पङ्कात् तामरसं, शशाङ्क उदधेरिन्दीवरं गोमयात्।

काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना,

प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना?॥'

इत्यमुष्मिन् सुभाषिते परिशील्यमाने प्रशस्तानां वस्तूनां स्वकीयैर्गुणैः सर्वादरणीयता प्रकाशिता भवति। अपि च,

'गुणिषु न च लिङ्गं न च वयः'

पूजास्थानम् इति पदं प्रत्येकम् अभिसम्बध्यते। गुणवत्सु समुपलभ्यमानं लिङ्गम्=वेष-भूषाभाषादिकं न पूजास्पदम्; वार्धक्यादिकं वयोऽवस्थानमपि न पूजास्थानम्, किं तर्हि? गुणा एव आजानसिद्धाः सत्कार-भाजनं सर्वत्र इति भवभूति-महाकविः सीता-विषयकारुन्धतीदेव्या अनुताप-प्रकाशकेन अमुना अनर्घेण पद्येन प्रकाशयामास—

'शिशुर्वा शिष्या वा यदसि मम तत् तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं ( विश्वासं ) द्रढयति।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः॥'

इति। अतः शैशवात् प्रभृति सद्गुणसम्पादने छात्रैर्यतितव्यम् इति शम्॥

---

## विद्या-प्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्ट-वास्तव्यः श्रीगुरुपदशर्महालदारः ]

कर्म सामान्यतो द्विविधम्—अर्थकर्म गुणकर्म चेति। तत्रात्मगतापूर्वजनकं कर्माऽर्थकर्म, संस्कारजनकं कर्म गुणकर्मेति विशेषः। एतत् सर्वं मनसि निधाय मीमांसका आहुः—अर्थकर्मगुणकर्मभेदेन पुनरपि विधिर्द्विविध इति। अर्थकर्म त्रिविधं नित्यं नैमित्तिकं काम्यं चेति। कर्मणो नित्यत्वसाधकमष्टधा भवति—

"नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्।
उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात्॥
फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्त्तितम्।

इति शङ्खस्मृतेः। तदेव नित्यार्थकर्म 'सायं प्रातर्जुहोती'ति। अत्र सायं-

प्रातःकालावच्छिन्नस्य जीवनस्याग्निहोत्रनिमित्ततया श्रवणात्। नित्यकर्मणोऽकरणे प्रत्यवायो दुर्वारः। यदकरणे प्रत्यवायस्तन्नित्यमिति श्रवणात्। अत्र जाबालभविष्यपुराणे—

"क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते।
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते॥
नित्यक्रियां तथैवान्ये ह्यनुषङ्गफलां श्रुतिम्॥"

इति। यच्च "फलं विनाऽप्यनुष्ठानं नित्यानामिष्यते स्फुटम्' इति भविष्यपुराणीयं तत्तु पापक्षयानुषङ्गिकफलातिरिक्तफलपरमेव। तथा च यमः—

"सन्ध्यामुपासते ये तु नियतं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥"

इति। न च तस्य फलवत्त्वेऽपि काम्यत्वापत्तिः फलकामनापूर्वकानुष्ठानाभावात्। न चात्मगतापूर्वजनकत्वेनार्थकर्मणः काम्यत्वशङ्का कार्या। उपात्तदुरितक्षयादीनामेवात्रात्मगतापूर्वत्वात्।

नैमित्तिकार्थकर्म 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेदि'ति निमित्तनिश्चयवदधिकारिकर्त्तव्यम्।

"निमित्तमात्रम् आश्रित्य यो धर्मः संप्रवर्त्तते।
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा॥"

इत्येवमादिस्मृतेः। काम्यत्वं नाम फलाभिलाषसम्पृक्तत्वम्।

'यत् किञ्चित् फलमुद्दिश्य यज्ञदानजपादिकम्।
क्रियते कायिकं यच्च तत् काम्यं परिकीर्त्तितम्॥'

इत्येवमादिस्मृतेः। अतो यद्यत्कर्मणि कामनैव प्रवृत्तिप्रयोजिका तत्तत् काम्यार्थकर्म भवति। तस्य त्रैविध्यमाचक्षते मीमांसकाः केवलैहिकफलकं केवलामुष्मिकफलकं फलसाधारणत्वादैहिकामुष्मिकफलकं चेति। तत्राद्यं कारीरी वृष्टिकामिनामिहलोकभोग्यत्वात्। द्वितीयं दर्शपौर्णमासादिकं कालान्तरभाविस्वर्गकामिनामिहलोकभोग्यत्वाभावात्। अन्त्यमुभयसाधारण-

फलकं 'वायव्यं श्वेतच्छागलमालभेत भूतिकामः' इति। तत्र भूत्यादिफलं लौकिकं लौकिकादलौकिकं फलं चोत्पद्यते।

गुणकर्मविधिस्त्रिविधः—अदृष्टार्थो दृष्टार्थ उभयार्थश्चेति। उत्तरौ तु द्विविधौ प्रतिपत्तिरूपावप्रतिपत्तिरूपौ चेति। प्रतिपत्तिश्च त्रिविधा—प्रधानोत्तरकाला प्रधानसमकाला प्रधानपूर्वकाला चेति। तत्राद्या इडा-भक्षणादिका, द्वितीया होमादिका, तृतीया तु यथा 'शकृत् संविध्यति लोहितं निरस्यती'ति। शकृत्संवेधनलोहितनिरसनव्यापारे प्रधानपूर्वकाला प्रतिपत्तिरिति शाब्दबोधो विस्पष्टः। मतान्तरे तु गुणकर्मविधिश्चतुर्विध उत्पत्त्याप्तिविकृतिसंस्कृतिभेदाद् भवति। तत्रोत्पत्तिसंस्कारविधि'रग्नीनादधीते'ति। आप्तिसंस्कारविधिः 'स्वाध्यायोऽध्येतव्य' इति। विकृतिविषयको विधिर्यथा 'व्रीहीनवहन्ती'ति। संस्कृतिविषयको विधिर्यथा 'व्रीहीन् प्रोक्षती'ति।

दृष्टिविशेषेण पुनर्विधिस्त्रिविधोऽपूर्वविधि नियमविधिः परिसंख्या-विधिश्चेति। तत्र यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः। स च चतुर्विधः—कर्मविधिर्गुणविधिर्विनियोगविधिः प्रयोगविधिश्चेति। तत्र कर्मविधिर्गुणविधिश्च प्रागेव व्याख्यातः। विनि-योगविधिं प्रयोगविधिं चोर्ध्वं वक्ष्यामः। यत्रोभयोः प्राप्तावेको नियम्यते स नियमविधिर्यथा 'व्रीहीनवहन्ती'त्यादिश्रुतौ। अत्र नियमोऽवहननस्या-योगव्यवच्छेदः। उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परि-संख्याविधिः। तदुक्तं भट्टपादैः—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥

इति। परिसंख्याविधिर्यथा 'पञ्च पञ्चनखा भक्ष्या' इति। अत्र सर्वेषां पञ्च-नखानां भक्षणे प्राप्ते पञ्चैव पञ्चनखा भक्ष्या न त्वन्ये इति नियम्यते। तदेव पञ्चपञ्चनखातिरिक्ताभक्षणं विधीयत इति तात्पर्यम्। सा च द्विविधा—श्रौती लाक्षणिकी चेति। तत्र 'अत्र ह्येवावपन्ती'ति श्रौती परि

संख्या। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। 'पञ्च पञ्चनखा भक्ष्या' इति तु लाक्षणिकी। इतरनिवृत्तिवाचकपदाभावात्। अत एषा त्रिदूषणा। दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति। तत्र श्रुतहानिः शब्दप्रतिपन्नार्थस्य परित्यागः। अश्रुतकल्पना खलु शब्दाप्रतीतार्थस्य कल्पना। प्राप्तबाधस्तु प्रमाणविशेषेण कर्त्तव्यतया प्रतीतस्य बाधः। तदुक्तम्—

श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदूषणा॥ इति।

पुनरपि विधिः प्रधानाङ्गत्वभेदाद् द्विविधः। स एव पूर्वं विभक्तविभागेन सामान्यत उक्तः। इदानीं विप्रपरिव्राजकन्यायेन सविशेषमुच्यते, विधिरुत्पत्तिविनियोगाधिकारप्रयोगभेदाच्चतुर्विध इति। तत्र कर्मणो यत् स्वरूपं तन्मात्रस्य ज्ञापको यो विधिः स उत्पत्तिविधिः। कथमुत्पत्तिरिति चेत्? कर्मणः प्रवृत्तिविषयताप्रयोजकप्राथमिकप्रतीतेः। सा च कर्मणो नाममात्रनिर्देशेन द्रव्यदेवताविशिष्टकर्मनिर्देशेन च सम्भवति। "यागस्य द्वे रूपे द्रव्यं देवता च" इति श्रवणात्। अतः कश्चिदुत्पत्तिविधिः कर्ममात्रोत्पादकः कश्चिद् द्रव्यविशिष्टकर्मोत्पादकः कश्चित्तु देवताविशिष्टकर्मोत्पादक एव। सर्वेषामेव तेषां कर्मस्वरूपमात्रज्ञापकत्वं विस्पष्टम्।

उत्पत्तिविधिर्द्विविधः—क्रत्वर्थः पुरुषार्थश्चेति। तत्र यदा कश्चिद् भावनाविशेषः कथंभावपूरणार्थं विधीयते तदा स क्रत्वर्थः। यस्मिन् कृते तु पदार्थे पुरुषस्य प्रीतिः स्वर्गादिलक्षणोपजायते स दर्शपूर्णमासादिः पुरुषार्थः। तदेव 'यस्मिन् प्रीति'रित्यादिसूत्रस्य टुप्टीकायां भट्टपादैरुक्तम्—"क्रत्वर्थपुरुषार्थयोर्द्वयोरपि साध्यसाधनसम्बन्धो वैदिकः, किन्तु पुरुषार्थे करणमिच्छातो न नियोगतः, क्रत्वर्थे त्वनिच्छातो नियोगत" इति। अतो हि क्रत्वर्थ उत्पत्तिविधिर्यथा 'सोमेन यजेते'ति। पुरुषार्थ उत्पत्तिविधिस्तु यथा 'अग्निहोत्रं जुहोती'ति। इहैव विधौ कर्मणः करणत्वेनान्वयः। अग्निहोत्रहोमेनेष्टं भावयेदित्याशयः।

अङ्गप्रधानसम्बन्धज्ञापको विधिर्विनियोगविधिः। यथा 'पयसा जुहोती'ति। स च विधिस्तृतीयाविभक्त्या प्रतिपन्नभावस्य पय-आदे-रग्निहोत्रं जुहोतीति विहितं होमसम्बन्धं बोधयति पयसा होमं भावयेदिति। स चापि द्विविधः क्रत्वर्थः पुरुषार्थश्चेति ।

विनियोगविधेरङ्गत्वबोधकानि षट् प्रमाणानि श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि सन्ति। तत्र पयसा जुहुयादित्यत्राग्निहोत्रवाक्य-प्राप्तं होमं जुहोतीत्यनेनोद्दिश्य तत्करणत्वेन तृतीयाश्रुत्या पयो विधीयत इति प्रमाणेन पयसोऽङ्गत्वम्।

लिङ्गादिभ्यः श्रुतिर्बलीयसी। सा च स्वार्थप्रतिपादने पदान्तराकाङ्क्षा-रहितो रवविशेषः। तदुक्तम्—

'अभिधातुं पदेऽन्यस्मिन्निरपेक्षरवः श्रुतिः'

इति। सा च त्रिविधा—विधात्री अभिधात्री विनियोक्त्री चेति। तत्राद्या लिङादियुक्ता प्रवर्तयित्री। लिङादीनां शब्दान्तरनैरपेक्ष्येण प्रवर्तनारूप-स्वार्थप्रतिपादनद्वारा प्रवर्तकत्वात्। अभिधया या स्वार्थं प्रतिपादयति साभिधात्री यथा व्रीह्यादिश्रुतिः। तस्या अपि स्वस्वार्थबोधने शब्दान्तर-नैरपेक्ष्यं विस्पष्टम्। व्रीह्यादीत्यादिपदेन मुख्यार्थपरा याः प्रातिपदिका धातवो वा प्रकृतिरूपाः सन्ति ततः प्रत्ययानां विधिपदेन विनियोगपदेन चोक्तत्वात्। शब्दान्तरापेक्षां विना प्रधानेषु यस्या अङ्गसम्बन्धः प्रतीयते सैव विनियोक्त्री।

विनियोक्त्री श्रुतिस्त्रिधा—विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपा चेति। तत्र विभक्तिश्रुत्या अङ्गत्वं यथा 'व्रीहिभिर्यजेते'ति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम्। 'व्रीहीन् प्रोक्षती'ति प्रोक्षणस्य व्रीह्यङ्गत्वं तु द्वितीया-श्रुत्या। तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम्, तस्य तेन विनाप्युपपत्तेः। किन्तु अपूर्वसाधनत्वप्रयुक्तम्। एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः। मीमांसाशास्त्रमेकाभिधानरूपामेकपदरूपां च विनियोक्त्रीं श्रुतिमुदाहरति—'पशुना यजेते'ति। पशुनेत्यत्रैकपदश्रुत्या ह्येकत्वपुंस्त्वयोः पशुद्रव्याङ्गत्व-

मेकाभिधानश्रुत्या च कारकाङ्गत्वं च भवति। यजेतेत्यत्राप्याख्याताभिहित-संख्याया एकाभिधानश्रुत्या भावनाङ्गत्वमेकपदश्रुत्या च यागाङ्गत्वं च भवति। तदुक्तम् 'यजेतेत्याख्याताभिहितसंख्याया भावनाङ्गत्वं समानाभिधानश्रुतेरेक-पदश्रुत्या च यागाङ्गत्वमि'ति।

भावना हि 'भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः'। एतदुक्तं भवति—उत्पद्यमानस्योत्पत्त्यनुकूल उत्पादयितुः प्रयोजकस्य व्यापार-विशेषो भावनेति। सैव द्विधा शाब्दी भावना आर्थी भावना चेति। तयोः शब्दभावनार्थभावनयोर्मध्ये पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापार-विशेषः शाब्दी भावना। सा च लिङंशेनोच्यते। लिङ्श्रवणेऽयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः। आर्थी भावना तु स्वर्गादिरूपफलेच्छाजनितक्रियाविषयव्यापारः पुरुषप्रयत्नरूपः। सैव सर्ववाक्येषु कारकविशिष्टरूपेण वाक्यार्थ आख्यातसामान्यस्य व्यापार-वाचित्वात्। तदुक्तं तद्भूताधिकरणे—

भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता॥

इति। किं भावयेत् केन भावयेत् कथं भावयेदित्यपेक्षायां मीमांसाशास्त्रमार्थी-भावनाया अंशत्रयमभिनयति—साध्यं साधनम् इतिकर्तव्यता चेति। तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति, साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति, इतिकर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यत्वेन चान्वेति।

लिङ्गं नाम शब्दसामर्थ्यम्। तत्रैव वृद्धसम्मतिः—'सामर्थ्यं सर्व-शब्दानां लिङ्गमित्यभिधीयते' इति। सामर्थ्यं खलु रूढमुख्यार्थाभिधान-सामर्थ्यं न तु यौगिकार्थप्रकाशनसामर्थ्यम्। न च सामर्थ्यं गौणार्थप्रकाशन-शक्तिरेव। तदुक्तं मीमांसकप्रवरैः पार्थसारथिमिश्रैः—

गौणे सदपि सामर्थ्यं न प्रमाणान्तरं विना।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्॥

तात्पर्यं च स्वतो मुख्ये गौणार्थपरता पुनः ।
प्रमाणान्तरविज्ञेया तदभावेऽत्र सिध्यति ।। इति ।

जैमिनिदर्शनस्य तृतीयाध्यायस्थितद्वितीयपादे सिद्धान्तसूत्रं च—अर्थाभिधान-सामर्थ्यान्मन्त्रेषु शेषभाव इत्यादि ।

तच्च लिङ्गं द्विविधम्—अर्थगतं शब्दगतं चेति । तत्राद्यं यथा—'स्रुवेणावद्यती'ति । शब्दगतं तु लिङ्गम् अर्थप्रकाशनसामर्थ्यं यथा—'अग्नये जुष्टं निर्वपामी'ति । यस्य मन्त्रस्य यत् प्रकाशनसामर्थ्यं तस्य तदङ्गत्व-मिति लिङ्गाद् विनियोगादिर्द्रष्टव्यः । तदिदं लिङ्गं वाक्यादिभ्यो बलवत् ।

पदान्तरसमभिव्याहारो वाक्यम् । समभिव्याहारश्च साध्यत्वादिवाचक-द्वितीयाद्यभावेऽपि । वस्तुतः शेषशेषिवाचकपदयोः सहोच्चारणम् । तदुदा-हरणं च—'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती'ति । अत्र पर्णताजुह्वोः समभिव्याहारादेव पर्णताया जुह्वङ्गत्वम् । इहैव वाक्यान्तर्गतं प्रकृतिविकृतिलक्षणं वक्तव्यम् । यत्र सकलाङ्गोपदेशः सा प्रकृतिर्यथा दर्शपूर्णमासादिः । तत्प्रकरणे सकलाङ्गपाठात् । यत्र तु न सकलाङ्गोप-देशः सा विकृतिर्यथा सौर्यादिः । तत्र कतिपयाङ्गानामतिदेशेन प्राप्त-त्वात् । अतिदेशो नाम—

'प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु ।
धर्मोऽतिदिश्यते येन सोऽतिदेश इति स्मृतः ।।'

इति । यद्वा—

'अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसंहतेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशः स उच्यते ।।'

इति । अनारभ्य विधिः सामान्यविधिः । तदिदं वाक्यं प्रकरणा-दिभ्यो बलवत् । अतः 'इन्द्राग्नी इदं हवि' रित्यादेरेकवाक्यत्वाद् दर्शाङ्गत्वं न तु प्रकरणाद् दर्शपूर्णमासाङ्गत्वम् ।

उभयाकाङ्क्षा प्रकरणं यथा प्रयाजादिषु 'समिधो यजती'ति । ननु, यद्युभयाकाङ्क्षा प्रकरणं तर्हि येष्वङ्गवाक्येषु फलं श्रूयते तेषां तदङ्गत्व-

प्रकरणात् कथं भवति ? फलवत्त्वेन चाङ्गानां प्रयोजनाकाङ्क्षाराहित्यादिति चेत् ? न। तत्रापि तत्तदङ्गविशिष्टप्रधानस्यैव तत्फलजनकत्वमन्यथा प्रधानाभावे तत्तदङ्गानुष्ठानेऽपि तत्फलं स्यादिति। उभयेतिकरणाद् अन्यतराकाङ्क्षायाः प्रकरणत्वं न स्यादिति शास्त्रेऽपि प्रतिपादितम्। तदेव दर्शपौर्णमासाभ्यां स्वर्गं भावयेदिति स्वर्गभावनाया अनिवृत्तौ पठितस्यापि अवगोरणाभावस्य न प्रकरणाद्दर्शपौर्णमासाङ्गत्वं "यो ब्राह्मणायावगुरेत् तं शतेन यातयेदि"त्यादिवाक्येन फलवत्त्वाभिधानाद् दर्शपौर्णमासौ प्रति तस्याकाङ्क्षाविरहात्। एवं प्रकृतिवद्विकृतिरित्यतिदेशेन विकृतियागीयफलभावनायाः कथमित्याकाङ्क्षोपशमात् तदीयापूर्वाङ्गानामाकाङ्क्षासत्त्वेऽपि न प्रकरणादङ्गत्वम्, परं तु सान्निध्यरूपस्थानादेवेति सिध्यति।

उभयाकाङ्क्षा प्रकरणम्। तच्च द्विविधं—महाप्रकरणमवान्तरप्रकरणं चेति। तत्र मुख्यभावनासंबन्धि प्रकरणं महाप्रकरणमङ्गभावनासंबन्धि प्रकरणमवान्तरप्रकरणमिति विशेषः। मुख्यभावना खलु यागेन स्वर्गं भावयेदिति फलभावना। तत्सम्बन्धि प्रकरणं च तत्सम्बन्धिनी उभयाकाङ्क्षा। ततश्च प्रयाजादीनां दर्शपौर्णमासाङ्गत्वम्। एतच्च प्रकृतावेव, उभयाकाङ्क्षायाः सम्भवात्। न तु विकृतौ, तत्र प्रकृतिवद् विकृतिः कर्तव्येत्यतिदेशेन कथं-भावाकाङ्क्षाया उपशमेनापूर्वाङ्गानामप्युभयाकाङ्क्षया विनियोगासम्भवात्। तस्मादपूर्वाङ्गानां स्थानादेव विकृत्यर्थत्वमिति। अङ्गभावना खलु अङ्गविधिबोधितभावना प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्येवमादिरूपा भवति। तत्सम्बन्धि प्रकरणं च तत्सम्बन्धिनी उभयाकाङ्क्षा। तेनैवावान्तरप्रकरणेन चाभिक्रमणादीनां प्रयाजाद्यङ्गत्वम्। तच्च सन्दंशेनैव ज्ञायते। लोहकण्टकविद्धलोहशलाकाद्वयरूपः सन्दंशः। स एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितः। अभिक्रमणे ह्येकस्य प्रयाजरूपस्याङ्गस्यानुवादेन विधीयमानयोः प्रयाजाङ्गयोरन्तराले यथाऽनुष्ठीयते।

प्रकरणं स्थानादिभ्यो बलवत्।

स्थानं नाम समानदेशत्वम्। केचित्तु स्थानं सन्निधिरित्याहुः। यथा 'सान्नाय्यपात्रसन्निधौ शुन्धध्वमि'ति मन्त्रपाठात् सन्निधानात् सान्नाय्यपात्र-प्रोक्षणाङ्गत्वम्। तच्च स्थानं द्विविधं पाठसादेश्यमनुष्ठानसादेश्यं चेति। अन्त्यमपि द्विविधं यथासंख्यपाठः यथासन्निधिपाठश्चेति। स्थानं समाख्यातः प्रबलम्।

समाख्या नाम यौगिकी संज्ञा। तस्या अवयवशक्तिलभ्यत्वाद् नाधुनिकदेवदत्तादिसंज्ञानां ततः परिग्रहः। सा च द्विविधा—वैदिकी लौकिकी चेति। तत्र 'होतृचमस' इति समाख्या वैदिकी, लौकिकी तु 'आध्वर्य-वमि'ति। एवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि। तेषामेकत्र समावेशे पूर्वपूर्वस्य प्राबल्यमुत्तरोत्तरस्य तु दौर्बल्यं बोध्यम्। एतत् सर्वमुपसंहृत्य विधिस्वरूपे तत्रभवता गदाधरभट्टाचार्येणाभिहितम्—

"श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि।
सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या॥" इति।

---

# वायुपरिवर्तनम्*

## प्रथमः परिच्छेदः

"हरिधन—भो हरिधन—वत्स, अपि नामोपशान्तस्ते ज्वरः।"

कम्पमानश्च हरिधनः प्रावरणाभ्यन्तरात् प्रत्युवाच, "हुँ उपशान्तः! अत्यन्तायैवोपशममेष्यति।"

माताऽवदत्, "शान्तं पापम्! प्रतिहतममङ्गलम्! षष्ठ्या वत्सः। षष्ठ्या दासः। किमीदृशं वाक्यमुच्चारणीयं ते वत्स?"

हरिधनस्य कम्पः पूर्वतोऽपि वृद्धिमिवाभजत्।

---

* स्वर्गत-प्रभातकुमारमुखोपाध्यायस्य वङ्गभाषामयस्याख्यानस्यानुवादः।

अपि बलवच्छैत्यमनुभूयते, वत्स ?

हुँ हुँ हुँ हुँ ।

अपि शिरसि वेदनानुभूयते ?

शिरस्तावद् स्रंसते—स्रंसते ।

न खलु मयेदानीं शय्या स्प्रष्टुं शक्यते जपादीनामिदानीमप्यनिष्पत्तेः । अपि वधूं प्रेषयेयं, सा हि शिरस्ते पाणिपल्लवेन परामृशेत् ।

यत् किमपि क्रियताम् । हुँ हुँ हुँ हुँ ।

एतत्त्वतीव विस्मयास्पदं यद् विनिष्क्रान्तायामेव मातरि निववृते हरिधनस्य कम्पः, कातरवचनान्यपि पुनर्नाश्रूयन्त । आदौ तावन्मुखं ततश्चास्थिमात्रसारस्य हस्तस्यैकस्याग्रं प्रावरणाद् बहिर्निःसृतम् । अपावृतेन वातायनपथेन लब्धप्रवेशोऽपराह्णातपः शय्यायाः प्रदेशमेकं प्रोद्भासितवान् आबद्धभ्रूकुटिर्हरिधनस्तत्रैवाप्रसन्नां दृष्टिं निक्षिपंस्तस्थौ ।

स खल्वेक एव पुत्रो विधवाया अस्याः । द्वात्रिंशद्वर्षदेशीयोऽयं परं श्मश्रुगुम्फादय इदानीमपि सम्यग् न समुद्गताः । म्यालेरियाज्वरेण समाक्रान्तस्यास्य द्वित्राणि वर्षाणि व्यतीतानि । यदा च स्वस्थस्तिष्ठति केवलं भोजनक्रीडादिकं करोति तदा विंशतिवर्षतोऽधिकमस्य वय इति नैव सम्भावयितुं शक्यते । शरीरमस्य दग्धकाष्ठकल्पम्, चक्षुषी कोटरगते, उदरं स्फीतम्, पादौ च क्षीणक्षीणौ ।

ग्रामोऽयं बलरामपुराभिधानः । पूर्वमेतेषामार्थिकी परिस्थितिः पल्लीदृष्ट्या समीचीनैवासीत् । हरिधनस्य पिता स्वबुद्धिबलेन प्रभूतं भूमिहिरण्यादिकं समार्जयत् । मृन्मयं कुटीरं भङ्क्त्वेष्टिकामयं प्राङ्गणादिशोभितं भवनं निर्मापितवान् । ज्ञातिभ्रातुस्तस्य भैरव-चट्टोपाध्यायस्य वैवाहिकः ( ज्येष्ठ-कन्यायाः श्वशुरः ) कस्मिंश्चिद् राजसदसि नियुक्त आसीत् । भारतेश्वर्य्या जुबिल्युत्सवावसरे प्रभुणा साकमसौ निगूढमाङ्गलभूमिमगच्छत् । बहुलीभूतायामस्यां वार्तायां वंशीधरो भैरवमव्यवहार्य्यं विधाय ग्रामे सङ्घस्यैकस्य प्रधानपुरुषः सञ्जातः । न केवलं भैरवचट्टोपाध्यायं जातिच्युतं विधायासौ

निववृते, तं प्रतिवादिनं विधाय राजद्वारे बहून् व्यवहारानपि प्रवर्तितवान्। प्रथमतः कतिचिद्वर्षाणि वंशीधरो दोर्दण्डप्रतापेन समाजशासनं व्यवहारपरिचालनं च व्यदधात्, तत ऊर्द्ध्वं पुनः पर्यहीयतास्य बलम्। यावद् भैरव-चट्टोपाध्यायस्य पुत्रेण नरेन्द्र-चट्टोपाध्यायेनाधिगतं सहकारिधर्माधिकरणिकपदं तावदेव न सममन्यन्त ग्रामीणा वंशीधरपक्षे साक्ष्यं प्रदातुम्। एकैकशश्च तत्पक्षं परित्यज्य भैरवचन्द्रगृह्यतां स्वीचक्रुः। वंशीधरस्तु समाक्रान्तः व्यवहारव्याधिना, ततोऽपि कतिचिद्वर्षाणि व्यवहारं प्रवर्त्यान्ततश्च प्रस्थितः परलोकम्। अत एव दरिद्रोऽद्य हरिधनः। पैतृकसम्पदः स्वल्पं यत् किमप्यवाशिष्यत तावतैव कथमपि कल्पयति वृत्तिम्, पोष्याश्च तस्याल्पा इति निस्तारः। गृहे मातरं पत्नीं पितृष्वसारं पैतृष्वसेयं च वर्जयित्वाऽपरः कोऽपि नास्ति। अद्यावधि सन्तानस्तस्य न सञ्जातः।

बहिरलिन्दे पत्न्याः पदध्वनिं श्रुत्वैव पुनरपि प्रावरणेन प्रावृतवान् मुखं हरिधनः। पत्नी नाम सरला, वयोऽष्टादश वर्षाणि, वर्णः श्यामः, मुखन्तु निरवद्यम्। समागत्य सरला समुपाविशत् शय्यापार्श्वे। ततश्च शनैः शनैरपसार्य प्रावरणं पत्युर्वदनमण्डलात्, ललाटे हस्तं विन्यस्य, प्रावोचत्, इदानीं गात्रं तु न तादृक् तप्तम्।

हरिधनेन वदनं विकृतं विधायोक्तम्, न हि न हि! कथं वा गात्रं सन्तप्येत? सर्वथा तुषारमेव सञ्जातम्। इत्युक्त्वासौ हुँ हुँ इति कातर-ध्वनिममुञ्चत्। हा पितः—हन्त मातः इति विलपंश्च पुनः पुनः शय्यायां पार्श्वविवर्तनं व्यधात्।

दर्शय तावन्मस्तकं—ललाटं पाणिना परामृशामि—इत्युक्त्वाऽस्पृशदसौ हरिधनस्य ललाटतटम्। हरिधनः प्रसभमपसार्य तस्याः पाणिपल्लवमुवाच, तिष्ठतु तावत्, अलमेतावत्या कृपया। यस्य गात्रं तावत् तुषारशीतलं कथं नाम शिरोवेदना तस्य सञ्जायेत?

गात्रं न सम्यक् तप्तमिति वचनादेव क्रुद्धो मे पतिरित्यवाबुध्यत सरला। अतः कतिचिन्निमेषांस्तूष्णीमेवावातिष्ठत। ततश्च पुनरपि हरि-

धनस्य ललाटे पाणिं सन्न्यस्योक्तवती सत्यमेव दहन्तीव गात्राणि। चिरं खलु चुल्लीसमीपेऽवस्थायाऽऽगताहमिति कृत्वा पाणिर्मे तप्त एवासीदिति तदानीं नैवालमासं सम्यक्तया बोद्धुमिति।

हरिधनो वेगेन शरीरं सञ्चाल्य पाणिं तस्याः सुदूरमुत्सार्योवाच— "अपेहि अपेहि, अलमुपचारेण। ननु ब्रवीमि इतोऽपसर अन्यथावमानिता स्याः" इत्युक्त्वा स परिवृत्याशेत।

कियतश्चित् कालादनन्तरमपश्यत् सा खलूपविष्टा क्रन्दतीति, उवाच च "किमित्यत्रैवावतिष्ठसे ?" इति।

अश्रूणि प्रमृज्यावदत् सरला, "किमिति मह्यं क्रुद्धोऽसि। किं मया-कृतम् ?" इति।

हरिधनो मुखं विकृत्योवाच, " 'किमिति मह्यं क्रुद्धोऽसि, किं मया कृतम् ?' किं वा न कृतम् ?"

अनिमिषिताभ्यां लोचनाभ्यां ददर्श पत्युर्मुखं सरला। "यस्यास्तावत् पतिर्ज्वरेण तातप्यते सा गच्छति निमन्त्रणरक्षार्थं—विनोदार्थम् ?"

धीरमुवाच सरला, "वयमेव स्वजनाः। खुल्लतातपत्नी स्वयमागत्य न्यमन्त्रयत। अस्माभिश्चेन्नागंस्यत किं शोभनमभविष्यत् ?"

" 'स्वजनाः !' मम पित्रा येऽव्यवहार्या विहितास्तेषां गृहे गच्छसि भोजनाय ? किमिति ? गृहे किमपि ग्रसितुं न लभसे ? एतावती तवोदरकण्डूतिः !"

"सरला क्रन्दनोद्यताऽवदत्, "अहो ! कीदृशानि मधुरवचनानि त्वया शिक्षितानि ? किं तावद्भोजनं न लभन्ते इति जना गच्छन्ति बन्धुभवनानि निमन्त्रिता भोजनाय ? यच्च तातेन तेऽव्यवहार्या विहितास्तत्रोच्यते— इदानीं ते नैवाव्यवहार्य्याः, साम्प्रतं तावत् सर्व एव तैः साकं व्यवहरन्ति, वयं पुनर्ज्ञातयः सन्तः—"

हरिधनेन दीप्तकण्ठेनोक्तम् "ज्ञातिशत्रुरेव परमः शत्रुः—कि न ज्ञायत एतत् ? अपि गणयन्ति तेऽस्मान् बहुमन्यन्ते वा ? ईदृशस्य ज्ञातेर्वदने

पञ्चकृत्व उपानत्प्रहारं करोमि, या चाशक्नुवती लोभं संवरीतुं भोजनाय समुपगच्छति तेषां गृहं तस्याश्च जिह्वाया पञ्चकृत्वः सम्मार्जनीप्रहारमहं करोमि।"

ततश्च सरला नेत्रे निवेश्याञ्चलं गृहाद्विनिर्गता।

( सावशेषम् )

---

# रसमञ्जरी

एकदा माधवस्य सतीर्थ्या माधवमूचुः, माधव, श्रीमद्भगवद्गीतायाः प्रणेतारमधिकृत्य प्रवृत्त इदानीं महान् वादः। कुरुक्षेत्रे भगवता श्रीकृष्णेन परमार्थत एवार्ज्जुनाय गीताप्रतिपादितं वस्तुजातमुपदिष्टम् इत्याधुनिका न श्रद्दधते, अत एव च केन प्रणीता श्रीमद्भगवद्गीता इति विचारयन्ति। भवताऽत्र किं वा मन्यत इति ज्ञातुमतीव कौतूहलाक्रान्ता वयम्। अतः स्वीयमतप्रकटनेनास्माननुग्राह्यपक्षे स्थापयितुमर्हसीति।

माधवेनोक्तम्, स्वो हि धर्मो वङ्गीयानां परार्थपरता नाम। यद्यपि वङ्गीयेनैव विपश्चिद्वर्येण भगवद्गीता प्राणायि तथापि केनापि वङ्गीयेन तन्नाभ्युपगम्यते, न वा तत्प्रतिपादनाय प्रयास आस्थीयते। वङ्गीयेनैव भवभूतिना विरचितमुत्तररामचरितं परं वङ्गेष्वेवाधिगतजन्मभिस्तद्गतान् पाठान् विकृत्य तस्य वङ्गीयप्रणीतत्वसाधकानि चिह्नानि विलोपितानि। वङ्गीयेनैव कविप्रवरेण संग्रथितं भट्टिकाव्यम्, परमत्रापि वङ्गीयैरौदासीन्यमेवावलम्ब्यते। भो भोः स्वदेशवासिनः, कियच्चिरं वा सुषुप्तिसुखमेवमनुभाव्यम्, "उत्तिष्ठत जाग्रत" पुनरपि प्रकटयत स्वीयमनन्यसाधारणप्रभावं जगतां पुरतः।

विदितमेवैतत् सर्वेषां युष्माकं यद् यत्र यत्र हे-शब्दप्रयोगस्तत् सर्वं वङ्गीयप्रणीतम्। न हि ऋृते वङ्गीयेभ्यो देशान्तरीया हे-शब्दं प्रयुञ्जते।

यदि मम 'वचसि न विश्वासः योगेशचन्द्रमहोदयस्य प्रबन्धोऽवलोक्यताम्। भट्टिकाव्ये—"हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः" इति श्लोकार्धे देदीप्यते हे-शब्दः। तेन भट्टिकाव्यस्य वङ्गीयप्रणीतत्वं निःसन्देहमेव सिध्यति। उत्तररामचरितेऽपि—

हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम्।
रामस्य गात्रमसि दुर्वहगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ॥

इति सुप्रसिद्धे श्लोके हे-शब्दसद्भावाद् भवभूतेर्वङ्गीयत्वं स्पष्टमेव प्रतीयते। वङ्गीया पुनस्तथा रसस्वीकरणपटवो यथा हे-शब्दं निष्कास्य रे-शब्दं सन्निवेशितवन्तः। परन्तु सर्वत्रालङ्कारशास्त्रे हे शब्दमण्डित एवायं श्लोक उदाहरणत्वेनोपन्यस्तः।

श्रीमद्भगवद्गीतायामपि—

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥

इति प्रसिद्धतमे श्लोके हे-शब्दो वर्त्तते, तेन भगवद्गीताया वङ्गीयकविप्रणीतत्वे नास्ति लेशतोऽपि संशयावकाशः। किञ्च, हे सखेति संहिता वङ्गेतरदेशीयानां शिरःशूलमुत्पादयति। तथा च Rajwade-महोदयेनोक्तम्—

It is difficult to say whether हे सखेति (xi. 41) is an instance of wrong sandhi or wrong vocative, whether the author thought सख to be the vocative singular of सखि like राम or whether he dropped the इ of इति after सखे for the sake of the metre. The

latter conjecture is probably the right one, for we have प्रियः प्रियायार्हसि (xi. 4) where there is double sandhi viz. प्रियायाः+अर्हसि=प्रियाया अर्हसि=प्रियायार्हसि. We have also शक्यः+अहं=शक्य अहं in xi. 48 and 54. (Bhandarkar Commemoration Volume, पृः ३२७) अर्थात्, 'हे सखेति' इत्यत्र च्युतसंस्कृतिदोषः स्फुट एव। परमेतद्दुष्टसन्धेरुदाहरणं वा दुष्टसम्बोधनपदस्योदाहरणं वा, ग्रन्थकर्त्रा रामशब्दस्य सम्बोधने राम इव सखिशब्दस्य सम्बोधनेऽपि सखपदम् ऊहितं वा, छन्दोऽनुरोधेन इतिशब्दस्येकारस्य लोपो विहितो वा तद् दुःशकमेव निर्णेतुम। सम्भाव्यते च द्वैतीयीक एव कल्पः समीचीनः, प्रियः प्रियायार्हसि इत्युपलब्धेः तत्र च विसर्गलोपोत्तरं पुनः सवर्णदीर्घस्य दर्शनात्। शक्यः अहम् इतियोगेन शक्य अहमित्यस्याप्युपलम्भात्।" वस्तुतस्तु विकल्पद्वितयमपि निर्मूलम्। ग्रन्थकृतां मतेन सखिशब्दस्य सम्बोधने सखापदं निष्पद्यते, ततश्च सखा इति इति स्थिते आद्गुण इति सूत्रेण सखेति सिध्यति। एवं प्रियायाः अर्हसि इत्यत्र वङ्गीयैर्विसर्गः प्रायेण नोच्चार्यते इति प्रियाया अर्हसि इति स्थिते अकः सवर्णे दीर्घ इति प्रियायार्हसीति निष्पन्नम्। शक्यः अहम् इत्यत्रापि विसर्गस्य परित्यागात् शक्य अहम् इति सञ्जातम्। बहुषु स्थलेषु पदान्तगतः अकारः कथञ्चिल्लघुप्रयत्नतर ओकारवत् समुच्चार्यत इत्यत्र सवर्णदीर्घाभावः। एवं सर्वमेतच्छ्रीमद्भगवद्गीताया वङ्गीयप्रणीतत्वमेव विस्पष्टयति न पुनर्लेखकस्य व्याकरणशास्त्रानभिज्ञत्वं प्रमापयति।

एवं श्रीमद्भगवद्गीताया वङ्गीयप्रणीतत्वे प्रमाणपरम्परया संसाधिते इदानीं केन तावद्वङ्गीयेन विरचितेयम् इति विचारपदवीमवतरति। तत्र गीतामाहात्म्ये तावदुक्तम्—

गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः।
या स्वयं पद्मनाभस्य मुखपद्माद् विनिःसृता॥

श्लोकाच्चास्मात् गीताकर्तुर्नाम पद्मनाभ इति निःसंशयमेव प्रतीयते। एवं

गीताकर्ता कश्चन वङ्गीयो विद्वान्, तस्य च नाम पद्मनाभ इति। इदानीं Sherlock Holmes महोदयस्य शैलीमनुसृत्य वङ्गीयेषु कस्तावद् संस्कृतभाषानिष्णातः पद्मनाभः प्रादुर्भूत इति विचारे प्रथमत एव सुपद्म-व्याकरणस्य रचयितुः पद्मनाभदत्तस्य नाम प्रतीतिपथमारोहति। न हि वर्जयित्वा वङ्गदेशमन्यत्र दत्तेत्युपनामोपलभ्यते। तथाहि रमेशचन्द्रदत्त-महोदयस्य नाम कस्य वा भारतवर्षीयस्याविदितम्, स च वङ्गीय आसीदि-त्यपि निर्विवादम्। एवं चरकसंहितायाष्टीकाकर्त्तुश्चक्रपाणिदत्तस्य काशि-कायाश्च व्याख्यातुर्हरदत्तस्य वैयाकरणकुलशिरोरत्नायमानयोर्देवदत्तयज्ञदत्तयोः किं बहुना पञ्चतन्त्रे समुपवर्णितस्य मण्डूकराजस्य गङ्गदत्तस्यापि वङ्गीयत्वं सर्वथा सिद्धम् इति शिवम्।

---

## प्राप्तं पत्रम्

माननीयसंस्कृतसाहित्यपरिषत्पत्रिकासम्पादकमहोदयसमीपेषु।

महाभागाः,

साम्प्रतं किल सवेगं प्रसर्पति गवेषणमहावाते प्रत्नतत्त्वानुसन्धानमार्ग एव प्रथमत उपदेष्टव्यो वाचकेषु। तेन यत्र यत्र विषयमिममधिकृत्य किमप्युप-लभ्यते ततस्तन्निष्कृष्य परिषत्पत्रिकायामवश्यं प्रकाशनीयम्। अत एव मयाङ्गलभाषामयविश्वविश्रुतपाञ्चपत्रतो गवेषणगतमनर्घ्यमुपदेशजातं सानुवादं संप्रेष्यते कृपयाऽकालहीनं प्रकाश्यतां परिषत्पत्रिकायामिति।

भवदीयः—श्रीकमलाकान्तशर्मा।

If you would carry out research
  In furtherance of knowledge,
You scan the archives of a church
  A library or college ;

You stay at any country house
Where there is decent feeding,
And, while your host is shooting grouse,
Devote yourself to reading.

And if you are lucky you will find
Some document or other
Which proves that MILTON wasn't blind,
That BYRON loved his mother,
That BURKE committed fearful crimes,
Perjury, theft and arson,
That WORDSWORTH married seven times,
And SHELLEY was a parson.

I've been researching and I've found
A written attestation
Which, when I publish it, is bound
To make a great sensation
And furnish many men of note
With thoughts to lie awake on ;
It proves that WILLIAM SHAKESPEARE wrote
The works of FRANCIS BACON.

ज्ञानविस्तारार्थं तत्त्वगवेषणं कर्त्तुमिच्छसि चेद् देवालयस्य वा ग्रन्थागारस्य वा महापाठशालाया वा पत्रादिसंरक्षणस्थानानि सुनिपुणमन्विष्यन्ताम्। यत्र समीचीनमाहार्यजातमुपलभ्यते तथाविधे कस्मिंश्चन जनपदभवने वसतिं कल्पयन् यावच्च भवनस्वामी पशुपक्षिमृगान् हन्ति तावत् पाठकर्मणि विनियुञ्जीथा आत्मानम्।

भाग्यं चेत् ते प्रसन्नं नूनं त्वं किमपि प्राचीनं पत्रमुपलप्स्यसे यद्बलेन प्रभवेस्त्वं प्रमाणयितुं न खलु मिल्टन्महोदयः कदाप्युपगतवानन्धभावम्, वायरन्महोदयश्च सविशेषमेव भक्तिमानासीन्मातरि, वार्कमहोदयेन च कूटसाक्ष्यस्तेयगृहदहनादीनि भीषणानि पापजालान्यनुष्ठितानि, ओयार्डस्-

ओयार्थमहोदयेन च सप्तकृत्वो निर्वर्तितं दारकर्म, शेलीमहोदयश्च धर्मयाजक एवासीदिति।

अहमपि तावद् गवेषणकर्मणि व्यापृतः, मया चोपलब्धं किञ्चिल्लिखितं प्रमाणं यत् खलु प्रकाशितं ध्रुवमेव जनमनांसि भृशं संक्षोभयेत्, बहुभ्यश्च विश्रुततरेभ्यो विपश्चिद्भ्यो विनिद्ररजनीयापनार्थं चिन्ताविषयं प्रतिपादयेत्। लेखोऽयं विस्पष्टं प्रमाणयति वीलियम् शेक्सपीयारमहोदयेनैव फ्रान्सिस् बेकन्महोदयस्य पुस्तकानि विलिखितानीति।

---

## समालोचनम्

**An Introduction to the Comparative Philology of Indo-Aryan Languages** by R. V. Jahagirdar, M. A. (London). Published by Dr. N. G Sardesai, L. M. S., Oriental Book Agency, 15, Shukrawar, Poona. Price Rupees Three only.

संस्कृतप्राकृतादिभाषाणां तत्त्वपर्यालोचनस्योपोद्घातरूपेण पुस्तकमिदं प्राणायि जाहागीरदारमहाभागेन। प्रथमतस्तावद् भाषायाः समुत्पत्तिमभिवृद्धिं विपरिणामञ्चाधिकृत्य विचारः प्रवर्तितः, वृद्धिविपरिणामादौ च कारणानि प्रदर्शितानि। ततश्च साम्प्रतिकभाषातत्त्वसम्मतानि भाषागोत्राणि विनिर्दिष्टानि, वैदिकलौकिकभाषाभेदो मागध्यादिविभाषाश्चोपप्रदर्शिताः। ततश्च द्वितीये भागे भाषायाः पुष्टिप्रदर्शनमुखेन शब्दानामुत्पत्तिः प्रकृतिश्च विचारिता। तृतीये भागे आर्याणामभिजनस्य भारतवर्षागमनकालस्य च निर्धारणाय प्रयत्निम्। ततश्च पालिप्राकृतादिभाषाणां स्वरव्यञ्जनादीनां प्रकृतिः परिवर्तनादिकं च विचारितम्। ततश्च प्रकृतिप्रत्ययावधिकृत्य समासेन किञ्चिदुक्तम्। अन्ततश्च परिशिष्टत्रितये (Phonetic Laws), शब्दपरिवृत्तिविषयका नियमाः द्राविडार्यभाषयोरभिसम्बन्धः प्राचीनार्वाचीनकालयो र्भाषातत्त्वानुशीलनप्रकारश्च संक्षेपतः समुपनिबद्धः। अत्र

च बहुत्र केवलसंस्कृतभाषागतानामेव पदानां प्रदर्शनात् ग्रीकूलातिनादिपदोपनिबन्धनाभावाच्च आदिमार्य-(Indo-European)-भाषायाः प्रकृतिनिर्धारणे साम्प्रतिकभाषातत्त्वशास्त्रानुसारेण च संस्कृतभाषायाः स्वरव्यञ्जनादीनां स्वरूपादिपरिज्ञानेऽसौकर्यमेव स्याच्छात्राणाम्। Morphology प्रकरणस्य Phonetic Laws समाख्यस्य च प्रकरणस्यातिसंक्षिप्ततापि बोधसौकर्य्ये प्रतिबन्धिका।

यच्च १४७ पृष्ठे उक्तम्—Phonetic Laws work blindly तदप्यापाततो रमणीयम्। कामं शब्दपरिवर्तनसूत्राणां व्यतिक्रमा उपलभ्यन्ते, तथापि व्यतिक्रमा अपि ते न खलु यथेच्छमेव प्रवर्तन्ते परं कमपि नियममेवानुरुध्यन्ते। अत एव Scherer महोदयेनोक्तम्—The phonological changes which we can observe in documented linguistic history proceed according to fixed laws which suffer no disturbance save in accordance with other laws. Vernerमहोदयेनाप्युक्तम्—There must be a rule for every irregularity, the problem is to find it. विषयमिममधिकृत्य जाहागीरदारमहोदयेन ८-९ पृष्ठयोः समीचीनमेवोक्तम्। अत्र पुनरतिसंक्षेपेण कथनात् प्रतिपिपादयिषितस्यार्थस्य सम्यक्तया स्फूर्तिर्न भवति। ग्रीम्महोदयस्य सूत्राण्युत्सर्गरूपेण भेर्नार ग्रासमान्फर्डुनाटोभप्रभृतीनां च सूत्राण्यपवादरूपेण बोद्धव्यानि। अत एवोक्तमभियुक्तैः—"Sound laws are actually laws to us which we must obey while we etymologize. But in the evolution of language, a sound law is merely a single fact, like an analogical formation."

४३ पृष्ठे दृश्यते—Skt. nāman ( नामन् ), Lat. nómen, Gk. enoma इति .

एतच्च परां काष्ठां परिस्पृशति प्रमादस्य। प्रथमतस्तावत् संस्कृतशब्दे स्वरप्रदर्शकं चिह्नं न सन्निविष्टम्, लातिनूशब्दे दीर्घस्य ह्रस्वत्वं विहितं

प्रामादिकश्च स्वरसन्निवेशः प्रदर्शितः, ग्रीकूशब्दे प्राथमिकः स्वर ओकार एव न त्वेकारः, द्वैतीयीकश्च स्वरो दीर्घ एव न तु ह्रस्वः।

तस्मिन्नेव पृष्ठे संस्कृतसच्चतेशब्दस्य अनुरूपतया ग्रीक् epetai शब्दो विनिर्दिष्टः। एतदपि प्रामादिकम्। ग्रीकूशब्दस्य प्रारम्भे सकारस्यापभ्रंशो हकारो वर्तते। Hepetai इत्येव साधुः। अस्मिन्नेव पृष्ठे Gk. pleusomi इति वर्तते। अत्रापि pleusomai इत्येव विलेखनीयम्।

४० पृष्ठे Gk. Klutos,' Lat. (in-) -clitus इति मुद्रितम्। अत्रत्येन लातिनपदेन (in-)clutus इति भाव्यम्।

४१ पृष्ठे पादटीकायामुक्तम्—"Take the Skt. root *sad* (सद्) —to be seated. The weak stem of this root should be **Sasd*—on the analogy of *papt* (पप्त्)—from the root पत् to fall (as in the Vedic perfect). As a matter of fact we have not **Sasd* but *Sed. The explanation is this. The I.E. form would be *Sesd. *S in front of *d would change to *z. So the I.E. form would be *Sezd-. In Sanskrit the *z will be lost but not before it has lengthened the previous vowels, thus giving us the Skt. weak stem Sed-."

अत्र I.E. एकारस्य संस्कृतभाषायां कथं तद्रूपेणैव दीर्घत्वापत्तिर्न त्वकाररूपेणेति दुरवबोधमेव छात्रैः। एतदेव ग्रन्थकृता न विवृतम्। Not before it has lengthened the previous vowels इत्येतदप्यविचारितरमणीयम्। आदौ zकारस्य लोपः, तत एकारस्य दीर्घत्वमित्येव भाषातत्त्वविदां दर्शनम्। न जानीमः किमित्यत्रातिशयोक्तिरलङ्कारः समाश्रितो जाहागीरदारमहोदयेन।

३८ पृष्ठे "Skt. *patiḥ* (पतिः), Gk. *Pótis*; Lat. *Potis*; Lith. *pat* (*i*) *s*" इति मुद्रितम्।

अत्र प्रथमतस्तावत् केषाञ्चन शब्दानामादिम वर्णस्य बृहदक्षरेण

तदितरेषां पुनः क्षुद्राक्षरेण मुद्रणं दृष्टिपथमवतीर्णं स्मारयति कामपि किंवदन्तीम्। सा च यथा—आरब्यभाषायां हि हेद्वितयं वर्तते एकः क्षुद्रो हेकारः, अपरश्च महान् हेकारः। कस्यचन सुरत्राणस्य नाम तस्य मन्त्रिणा क्षुद्रहेकारेण विलिखितम्। ततश्च तस्य प्रसादवित्तेन पारिषदेन तदुपप्रदर्श्योक्तम्—"बादसाह्, खोदाबन्द, हुजुर, आपका नाम छोटा हेसे लिखा"। तच्छ्रुत्वा कोपस्य परां कोटिमधिरूढेन सम्राजाप्युक्तम्, सद्य एव लेखकापसदस्य शिरश्छेदो विधीयताम्।

ततश्च ग्रीक्भाषायां Pótis शब्दस्यानुपलम्भात् posis इत्यस्यैव च सहस्रशः प्रयोगसन्दर्शनादत्र posis इत्येव विलेखनीयम्, Potis इत्येतस्मात् पूर्वं तारकाचिह्नं वा निवेशनीयम्।

तस्मिन्नेव पृष्ठे "Skt. *bharāmi* ( भरामि )......Gk. *fero*" इति मुद्रितम्। अत्र pherō इत्येव पदं साधु। अपि न ज्ञायते जहांगीरदारमहोदयेन ग्रीकभाषायां यः फकार उपलभ्यते स हि स्पृष्टप्रयत्नकः, f पुनः विवृतप्रयत्नकम्? fero इत्यत्रापि ह्रस्वदीर्घयोर्विपर्यासः कृतः। प्रायेण सर्वत्रैव ग्रीकूलातिनावेस्तापदेष्वीदृशाः प्रमादाः परिलक्ष्यन्ते। दिङ्मात्रमिह प्रदर्शितम्। अनाघ्रातभाषातत्त्वगन्धानां सुकुमारमतीनां छात्राणां पाठ्यपुस्तकेष्वीदृशीनां गरीयसीनां प्रमादपरम्पराणां सद्भावेन निष्कृतिपथातीतेनैव पाप्मना लिप्यते ग्रन्थकार इति नो बुद्धिः। न च जानीमः कथं वा प्रादुर्भूता अत्रेमे प्रमादाः, यस्मिन् कस्मिन्नपि Philologyविषयके ग्रन्थे onoma-hepetaiप्रभृति साधुपदानि सुकराण्येव सन्द्रष्टुम्। यथा तथा वा भवतु, आशास्यते पुस्तकमिदमामूलान्तं निपुणं सन्दृश्य ग्रन्थान्ते प्रामादिकपदानां विस्पष्टतयाप्रदर्शनपुरःसरं साधुपदानि सन्निवेशयेज्जहांगीरदारमहोदयः, अन्यथा पुस्तकमिदं सर्वथाऽनुपयुक्तमेव च्छात्राणामिति शिवम्।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत्-प्रतिभा रवेः
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| June, 1933. | १८५५ शकीये जैष्ठे १६श-वर्षस्य २य-संख्या | Vol. XVI No. 2. |


## ज्योतिर्विदाभरणम्

[ निबन्धकः—श्रीबबुआमिश्रो ज्योतिषाचार्यः ]

ज्योतिर्विदां त्रिस्कन्धज्योतिःशास्त्रं जानतां विदुषाम् आभरणं भूषणमिति ग्रन्थनाम्नो व्युत्पत्त्या ग्रन्थप्रतिपाद्यविषयः संहितारूप एव ज्योतिषिकाणामाभरणं मन्यते ज्योतिर्विदाभरणमिति नामकरणकारिणा ग्रन्थकारेण।

वेदपुरुषस्य चक्षूरूपं ज्यौतिषशास्त्रं गणितहोरासंहितानामभिस्त्रिभिः खण्डैः स्कन्धाभिधानैर्विभक्तमिति त्रिष्वपि तेषु स्कन्धेषु निष्णातानामपि विदुषां विशेषतः संहितास्कन्धस्यैव सर्वोपयोगित्वाद् गणितहोरादिविविधभेदोक्तविषयाणां सर्वेषामपि संक्षेपतः प्रतिपादकत्वाच्च उपादेयत्वं मत्वा तस्यैव सम्यग् विवेचनमाभरणमिति। वस्तुतस्तु संहितास्कन्धस्यापि बहुभेदवत्त्वादतिविस्तृतत्वाच्च तत्सारभूतस्य सन्ततोपयोगिनः संहितान्तर्गतस्य जातसंस्कारविवाहयात्रादिमुहूर्त्तविचारस्यैव आभरणत्वं मन्यमानः कविरयं काव्यरूपं प्रायः काव्यवदेव छन्दोविन्यासादिना च ग्रन्थमिमं बुद्धिपूर्वकमेव दुर्बोधतरं चकारेति नात्र कश्चित् संशयलेशोऽपि।

अत्रोक्तेषु द्वाविंशत्यामध्यायेषु चतुर्विंशत्यधिकचतुर्दशशत-१४२४-मितेषु श्लोकेषु मुहूर्तोपयोगिनीर्नक्षत्रादिपरिभाषा उक्ता। मुहूर्तचिन्तामण्यादिमुहूर्त-ग्रन्थवद् गर्भाधानादिसंस्काराणां मुहूर्ता यात्रागृहप्रवेशादिमुहूर्ताश्च बहुत्रापि सयुक्तिवादं कुत्रचित् पराशरहारीतादीनां मुनीनाम् अन्येषां प्राचीनाचार्याणां च मतान्तरादिप्रतिपादनपुरःसरं प्रधानतो विवेचिताः सन्ति, मध्ये मध्ये वराहसंहितादिसंहितोक्तविषया मानवधर्मशास्त्राद्युक्तवैवाहिकविधिप्रतिषेधादि-विषयास्तिथिद्वैधादिधर्मशास्त्रोक्तविषयाश्च सर्वोपयोगिनो बहवोऽपि विवेचिताः। ज्योतिर्विदाभरणस्यास्य सम्यक् पर्यालोचनेन स्फुटमेव प्रतिपद्यते यदयं ग्रन्थकारः कविर्भूत्वाऽपि ज्यौतिषशास्त्रस्य त्रीनपि स्कन्धान् सम्यग् जानाति स्म। यद्यप्ययं ज्यौतिषशास्त्रमधिकृत्यैव प्रणीतो ग्रन्थः तथाप्यत्रोक्तानां द्वाविंशत्या अध्यायानां सम्यक् पर्यालोचनयाऽवगम्यते यदिह नीतिशास्त्रं धर्मशास्त्रं च संक्षेपतो वर्णितमस्ति।

एतद्ग्रन्थसम्बन्धे ज्यौतिषिकाणां मध्ये गुरुपरम्परातः प्रसिद्धा किंवदन्ती चेयमस्ति यदुज्जयिनीश्वराणां वीरविक्रमादित्यमहाराजानां सभायां नवरत्नेषु परिगणितयोर्महाकविकालिदास-ज्योतिर्विद्वराहमिहिरयो-रेकदा केनापि हेतुना विवादे जायमाने वराहमिहिरः "शास्त्रेषु नष्टाः कवयो भवन्ति" इति वचसा महाकविकालिदासं निनिन्द। तदुत्तरं कालिदासः—भवान् ज्योतिःशास्त्राभिज्ञतागौरवान्मामेवं वदतीति ज्यौतिष-शास्त्रस्यैवाहं तादृशं ग्रन्थं रचयिष्यामि यदर्थावबोधो भवतोऽपि सत्वरं न भविष्यतीति प्रतिज्ञाय ज्योतिर्विदाभरणनामकं ज्यौतिषसंहितास्कन्ध-सम्बन्धिनं काव्योपमं ग्रन्थं रचयामासेति। यदुक्तमेतद्ग्रन्थस्यैतिवृत्तं टीकाकृता भावरत्नेनापि—

"कस्मिंश्चित् समये नृपस्य सदसि श्रीविक्रमार्कस्य यो
विद्वद्भिः परिपूरिते च सुजनैरुक्तिं सदोषां जगौ।
दैवज्ञस्य ततो वराहमिहिरस्यानेन मूर्खीकृतो
न ज्ञोऽस्यामिति कालिदासकविना दुर्बोधशास्त्रं कृतम्॥"

श्रीविक्रमार्कसभायां कालिदासेन वराहमिहिरकृतशास्त्रे दूषणं दत्तं ततस्तेनासौ त्वं मूर्ख इति भाषितः, यतोऽस्मदुक्तौ त्वमज्ञोऽसि ज्योतिर्मार्गत्वात्। ततः कालिदासेनापि तन्मदापहरणाय इदं शास्त्रं कृतमिति।"

अथ तत्र विक्रमार्के नृपतौ पृथिवीं शासति ज्यौतिषशास्त्रे वराहमिहिराचार्याणां मतस्यैव सर्वमान्यत्वात् स्वस्य च कविशेखरीभूतत्वात् तन्मतानुकूलमेव ज्योतिर्विदाभरणमिदं कालिदासो रचयांबभूवेति ग्रन्थाद्युक्तश्लोकेन विदितं भवति।

अन्यासदुक्तिविहितोद्गमपक्षराशीन्<br>
व्यर्थानहं विरचयामि वरोक्तियुक्तैः।<br>
मत्वा वराहमिहिरादिमतैरनेकै-<br>
र्ज्योतिर्विदाभरणमप्यनसन्मतार्हम्॥

वरोक्तियुक्तैः सत्यवचनाश्रितैः अनेकैः वराहमिहिरादिमतैः अन्यासदुक्तिविहितोद्गमपक्षराशीन्, अन्याश्च ता असदुक्तयश्च ताभिर्विहितो निर्मायितोऽत एव उद्गमः प्रादुर्भूतो यः पक्षस्तस्य राशयो गणास्तान् व्यर्थान् मत्वा अनसन्मतार्हम् अनसन्मतं शुद्धमतं तस्मै अर्हम् योग्यमिति तथाभूतं ज्योतिर्विदाभरणं रचयामीति।

अथायं ज्योतिर्विदाभरणनामा ज्यौतिषग्रन्थः कालिदासकृत इति ज्यौतिषोक्तविषयेऽपि काव्यकलाकौशलं दर्शयितुं ग्रन्थनिर्माणसमयं विवेक्तुं च ग्रन्थादस्मात् कतिचित् पद्यान्युद्धृत्य सुधियां कवीनां ज्योतिर्विदां च पुरत उपस्थापयामि।

अथायने कीटमृगादिषट्के क्रमेण ते दक्षिणसौम्यसंज्ञे।<br>
तमीदिने सायनभागभास्वदुत्थे स्फुटे नाकसदामुभे स्तः॥

सायनभागभास्वदुत्थे सायनांशेन रविणा समुत्पन्ने कीटमृगादिषट्के—कर्कादिराशिषट्कं मकरादिराशिषट्कं च—क्रमेण दक्षिणसौम्यसंज्ञे अयने स्तः। सायनं कर्कादिराशिषट्कं दक्षिणायनं सायनं मकरादि-

राशिषट्कं च सौम्यायनमित्यर्थः। ते उभे दक्षिणोत्तरायणे नाकसदां देवानां तमीदिने रात्रिदिने स्तः।

अत्रायनांशाः के नामेति तदानयनमाह—

शाकः शराम्भोधियुगो ४४५ नितो हृतो
मानं खतर्कैरयनांशकाः स्मृताः ॥

शकाब्देभ्यः शराम्भोधियुगानि ४४५ विशोध्य शिष्टाः संख्याः खतर्कैः ६० भक्ता अयनांशा भवन्तीति।

अमाऽवसानं दिवसे रजन्या-
मन्तो यदि स्यात् सितपञ्चदश्याः।
तदोपरागो गणितादरम्यः
स्पष्टः शुभे कर्मणि चापि साध्यम् ॥

यदि चेत् दिवसेऽमावसानं अमावस्याया अन्तः स्यात् एवं रजन्यां सितपञ्चदश्याः पूर्णिमाया अन्तः स्यात्तदा गणितमार्गात् उपरागो ग्रहणं स्पष्टः। किंलक्षण उपरागः? शुभे कर्मणि अरम्यो निन्द्यः। अत एव च पुनः शुभे कर्मणि साध्यं शान्तिकर्म कर्त्तव्यम्। अथवा निमित्तार्थे सप्तमी शुभनिमित्तं तदवसरे दानं देयमित्यर्थः।

ऐन्द्रे त्रिभागे च गते भवेत्तयोः
शेषे ध्रुवेऽपक्रमसाम्यसम्भवः।
यद्येकरेखास्थितभेशचण्डगू
स्यातां तदाऽपक्रमचक्रबालके ॥

यदि एकरेखायां स्थितौ च तौ भेशचण्डगू च तौ सूर्यचन्द्रौ स्यातां तदाऽपक्रमचक्रबालके क्रान्तिचक्रे तयोश्चन्द्रार्कयोः अपक्रमसाम्यसंभवः क्रान्तिसाम्यसम्भवः स्यात्। कस्मिन् सति? ऐन्द्रे योगे त्रिभागे विंशतिघटीमिते इत्यर्थः। च पुनर्ध्रुवे योगे शेषे त्रिभागे गते। चत्वारिंशद्घटीत उपरीत्यर्थः। अत्र सूर्याचन्द्रमसोः सायनयोर्योगः षड्राशिमितो द्वादशराशिमितो वा विवक्षितस्तदेवं क्रान्तिसाम्यस्य संभवात्। रविचन्द्रयो-

योगकला अष्टशत्या ८०० भक्ता लब्धितुल्या विष्कम्भादयो योगा भवन्तीति। 'क्रान्त्योः साम्यं नो शुभं मङ्गलेषु' इति हेतोः सूर्यचन्द्रयोरेतत्क्रान्तिसाम्यकथनं श्रीकेशवार्कोक्त विवाहवृन्दावने ग्रन्थे सदृशमेवेति तदुपपत्तिभावनया द्वादशायनांशसामयिकं क्रान्तिसाम्यलक्षणं यतस्तत्रैव सायनयोश्चन्द्रार्कयोः षड्राशिसमो द्वादशराशिसमश्च योग ऐन्द्रयोगे तृतीयांशमिते ध्रुवे तृतीयांशमिते शेषे च भवतीति।

अथ राजसत्ताध्याये राजाभिषेकमुहूर्ताननेकैः प्रकारैर्विविच्य कलियुगे राजाभिषेकमुहूर्त्तं निर्णेतुं तत्र भाविनां नरपतिनां नामान्याह—

कलौ भविष्यन्त्यथ भारतावनौ
महीभुवो बाहुभुवोऽप्यनेकशः।
शकास्तथैषामभिषेचनादिकं
हितं सदोदीरीतकालसाधितम्॥

अथ कलौ युगे भारतभूमौ अनेकशो बाहुभुवः क्षत्रिया महीभुजो राजानो भविष्यन्ति। तथा शका म्लेच्छा राजानश्च भविष्यन्ति एषाम् उदीरितकालसाधितं पूर्वोक्तकालसाधितम् अभिषेचनादिकं हितं स्यात्।

धराधिभूर्भिल्लशकादिजातिज-
स्तदासनस्थोऽभिजनैर्नमस्कृतः।
स्तुतः स राजाऽधिजनैः प्रतिष्ठितो
न मन्त्रभेदाद्यभिषेचनोचितः॥

भिल्लशकादिजातिजो धराधिभूः राजा तदासनस्थः पूर्वोक्तासनस्थः अभिजनैर्योद्धृजनैः नमस्कृतः स्तुतश्च अधिजनैरधिकारप्राप्तैर्विप्रैः प्रतिष्ठितः मन्त्रभेदाद्यभिषेचनोचितो न स्यादिति।

निहन्ति यो भूतलमण्डले शकान्
सपञ्चकोट्यब्जदल ५५००००००० प्रमान् कलौ।
स राजपुत्रः शककारको भवेत्
नृपाधिराजो ह्युत शाककर्तृहा॥

उक्ताङ्कप्रमितान् शकान् तदाख्यराजान् कलौ युगे यो निहन्ति स राजपुत्रः शककारको नृपाधिराजश्चक्रवर्त्ती भवेत् । हि युक्तार्थे । उत पुनः शकानां म्लेच्छानां नाशकालः शाकः शाककर्त्तॄन् हन्तीति शाककर्त्तृहा सोऽपि शाककर्त्ता चक्रवर्त्ती भवेत् ।

युधिष्ठिरो विक्रमशालिवाहनौ
नराधिनाथो विजयाभिनन्दनः ।
इमेऽनु नागार्जुनमेदिनीविभु-
र्बली क्रमात् षट् शककारकाः कलौ ॥
युधिष्ठिराद्वेदयुगाम्बराग्नयः ३०४४
कलम्बविश्वे १३५ ऽभ्रखखाष्टभूमयः १८००० ।
ततोऽयुतं १०००० लक्षचतुष्टयं ४००००० क्रमाद्
धराद्वगष्टा ८२१ विति शाकवत्सराः ॥

युधिष्ठिरादय इमे कलौ युगे शककारका राजानः स्युः । युधिष्ठिरराज्यारम्भसमयात् ३०४४ कलिगतवत्सरपर्यन्तं युधिष्ठिरशाकः । ततः १३५ वर्षपर्यन्तं विक्रमशाकः । ततः १८००० वर्षपर्यन्तं शालिवाहनशाकः । ततश्च १०००० वर्षं यावद् विजयाभिनन्दनशाकः । ततो लक्षचतुष्टय ४००००० वर्षं यावत् नागार्जुनशाकः । तदनन्तरं ८२१ वर्षाणि बलिशाक इति । एवं कलियुगादितः ३०४४+१३५+१८०००+१००००+४०००००+८२१ वर्षाणां योगः=४३२००० एतावदेव कलियुगमानम् ।

युधिष्ठिरोऽभूद्भुवि हस्तिनापुरे
तथोज्जयिन्यां पुरि विक्रमाह्वयः ।
शालेयधाराभृति शालिवाहनः
सुचित्रकूटे विजयाभिनन्दनः ॥
नागार्जुनो रोहितके क्षितौ बलि-
र्भविष्यतीन्द्रो भृगुकच्छपत्तने ।

क्रृतप्रवृत्तिस्तदनन्तरं भवे-
त्तदा भविष्यन्त्यवनीभृतोऽर्कतः ॥

शालेयधाराभृति शालेरमोलेरनाम्नि गिरौ, रोहितके क्षितौ रोहितास-भूमाविति टीकाकार आह ।

यात्राप्रकरणे कस्मिन्नृतौ यात्रा कर्तव्या कस्मिंश्च न कर्तव्येति सामान्यत ऋतुशुद्धिं कथयति—

गतिर्नृणामृत्वनुकूलगामिनी
मुदि प्रधानेव सदैव भामिनी ।
सुशुद्धिगाशाश्रयसिद्धिकारिणी
समस्तयानोत्सवकार्यचेतसाम् ॥

समस्तयानोत्सवकार्ये चेतो येषां तेषां नृणां गतिर्गमनम् ऋत्वनुकूल-गामिनी सदैव मुदि हर्षनिमित्तं प्रधाना वरा स्यात् । किंभूता गतिः ? सुशुद्धिगा अतिशयशुद्धिं प्राप्ता चासौ आशा दिक् च तस्यामाश्रयो निवासो यस्या-स्तादृश्या सिद्धेः कारिणी । केव ? भामिनीव । वधूरप्येवंविधा भवति, ऋत्वनुकूलगामिनी ऋतुकालानुगमनशीला सती प्रधाना, सुशुद्धिगा ऋतु-स्नानानन्तरं शुद्धिं प्राप्ता, आशाश्रयस्य इच्छाधारकस्य भर्त्तुः सिद्धि-कारिणी ।

अथैवं वर्षासु तद्वर्णनव्याजेन प्रयाणनिषेधं करोति—

ईषत्तडिद्वासवतीमधिक्रियां
घनाम्बरामिन्द्रधनुःकटाक्षिणीम् ।
शिखिस्वनां वृत्तपयोधरां सुधीः
प्रावृड्वशामेत्य न यानमिच्छति ॥

सुधीः प्रावृड् वशां वर्षर्तुम् एत्य प्राप्य यानं प्रयाणं नेच्छति । किंभूतां प्रावृड्वशाम् ? ईषद् वारंवारं तडितां विद्युतां वासो यस्यां ताम् । पुनः अधिक्रियाम् अधिकाः क्रियाः कर्षणादिका बहूत्पन्नजन्तुहिंसादिरूपा वा यस्यां ताम् । घनाम्बराम् घना मेघा एव अम्बराणि वस्त्राणि यस्याः ताम् । इन्द्रधनुरेव

कटाक्षं तदुपेताम्। अत्र कर्मधारयादपि मत्वर्थीयः सर्वधनीतिवत्। शिखिस्वनां शिखिनां मयूराणां स्वनाः शब्दा यस्यां ताम्। वृत्तपयोधरां वृत्ताः सर्वत्र-प्रसरणशीलाः पयोधरा मेघा यस्यां ताम्। स्त्रीपक्षेऽपी विशेषणान्येतानि योज्यानि।

शरदृतौ तद्वर्णनद्वारा प्रयाणं कथयति—

शरद्गते मुक्तपयःपयोधरे
पयोनिधौ वर्षति शौक्तिकेयताम्।
तद्बिन्दवो वाऽथ विभूषयन्त्यतो
जगच्छरत् स्याद्गमनोचिता गुणात्॥

शरद्गते शरत्कालप्राप्ते मुक्तपयःपयोधरे मुक्तजले मेघे पयोनिधौ समुद्रे वर्षति सति तद्बिन्दवोऽपि तस्य मेघस्य जलकणा अपि जगद् विभू-षयन्ति। आधाराधेयोपचारात् जगज्जनानलङ्करोति। किं कृत्वा? शौक्ति-केयतां मुक्ताफलत्वमवाप्य समुद्रे। अतो हेतोर्गुणात् शरत् गमनोचिता प्रयाणयोग्या स्यात्।

केदारपात्रधृतशालिभिरिष्टगन्धैः
शुद्धाम्बरा विकचदम्बुजमञ्जुनेत्राः।
सिद्धैः पुरः शरदि हीव नु लक्ष्मेतत्
तद्यायिनो दिगबलाः समवाकिरन्ति॥

शरदि ऋतौ दिगबला दिग्वध्वस्तद्यायिनः तासु दिक्षु गमनशीलान् नरान् समवाकिरन्ति वर्धापयन्ति। कैः? केदारेति। केदाराः क्षेत्राणि त एव पात्राणि तेषु धृताः शालयो व्रीहयस्तैः कृत्वा। किंभूतैः? इष्टगन्धैर्मनोहरगन्धैः। किंभूता दिगबलाः? शुद्धाम्बराः शुद्धानि निर्मलानि अम्बराणि नभांसि यासु ताः। पुनः विकचन्ति विकस्वराणि च तानि अम्बुजानि कमलानि तान्येव मञ्जूनि नेत्राणि यासां ताः। यथा स्त्रियोऽपि दिग्यायिनं वर्धयन्ति केदारवत् पात्रे रौप्यादिभाजने धृतशालिभिः मनोहरगन्धैः। किंभूताः स्त्रियः? शुद्धाम्बराः, विकचदम्बुजवत् मञ्जूनि नेत्राणि यासां ताः। हि

युक्तार्थे नु वितर्के पुरोऽग्रे सिद्धेरभीष्टार्थस्य लक्ष्म चिह्नमिव। यतोऽग्रतः शुभशकुनं कार्यसिद्धिं कथयति।

वर्णनद्वारेण हेमन्तर्त्तौ प्रयाणमनिष्टं दर्शयति—

मन्दं महोऽन्तकदिशं व्रजतोऽङ्गभाजो
हेमन्तमत्तहिमसम्पदसह्यवृत्ताम्।
युक्तं भवेत्तिमिरनाशविधेरिवैनां
प्रोज्झ्येतियानमतिमानपरम्पराशम्॥

अङ्गभाजः प्राणिनो महस्तेजो मन्दमतीक्ष्णं भवेत्। किंभूतस्याङ्गभाजः? अन्तकदिशं समीपकाष्ठां व्रजतो गच्छतः। किंभूतामन्तकदिशम्? हेमन्तेन शीतकालेन मत्ता पुष्टा चासौ हिमसम्पच्च तयाऽसह्यं सोढुमशक्यं वृत्तं शीलं यस्यास्ताम्। कस्येव? तिमिरनाशविधेः सूर्यस्येव। यथा अन्तकदिशं दक्षिणाशां व्रजतस्तस्य महो मन्दं भवति। किंभूतं यानम्? अतिमानपरम्पराशम् अतिक्रान्तमाना परम्पराशा दिक् यस्मिंस्तत्। यथा सूर्योऽपि दक्षिणायने बृहत्पन्थानं त्यजतीति युक्तोऽयमर्थः। लघुप्रयाणेऽपि शीतपराभवत्वाद् बृहत्प्रयाणं सर्वथा निषिद्धमित्यर्थः।

वर्णनद्वारेण शिशिरर्तौ प्रयाणमाह—

आशाविनीतगमने शिशिरेऽभ्युपेया-
न्नीहारपेलवकलास्यसरोजशोभाः।
सर्वा वशा इव नरो गमनाभिलाषी
भाक्षीणभानुतनुतापपराः प्रियाशाः॥

आशया काङ्क्षया इच्छया वा विनीतं प्राप्तं गमनं यस्मिन् तस्मिन् आशाविनीतगमने शिशिरे नरः गमनाभिलाषी सन् सर्वाः प्रियाशा ईप्सितकाष्ठा अभ्युपेयाद् गच्छेत्। किंभूताः प्रियाशाः? नीहारेण हिमेन पेलवं श्लक्ष्णं कृशं कं जलं तस्मिन् लास्यानि देदीप्यमानानि सरोजानि कमलानि तेषां शोभा यासु ताः। पुनः किंभूताः प्रियाशाः? भाभिः प्रभाभिः क्षीणश्चासौ भानुः

सूयश्च तस्य तनुः सूक्ष्मश्वासौ तापश्च तेन परा उत्कृष्टाः। का इव? वशा इव। यथा नरः सर्वा वशा इयात्। किंभूता वशाः? प्रियाः-श्रेष्ठाः आशा इच्छा यासां ताः।

वर्णनद्वारा वसन्तर्त्तौ सर्वदिक्षु प्रयाणमाह—

प्रेत्यानिलो मलयमद्रिमृतौ विधत्ते
पान्थश्रमं त्रिगुणभावमपोहितुं किम्।
कर्त्तुं मधाविति पराभवमन्यसत्त्वं
शक्यं यियासुरखिलासु ककुप्सु तस्मिन्॥

अनिलो वायुर्मलयमद्रिं मलयाचलं प्रेत्य प्राप्य मधौ वसन्ते तस्मिन ऋतौ त्रिगुणभावं शीतमन्दसौरभाख्यं विधत्ते बिभर्त्ति। किं कर्त्तुम्? उत्प्रेक्षते—पान्थश्रमम् अपोहितुं निरसितुम। किंभूतोऽनिलः? अखिलासु ककुप्सु दिक्षु यियासुर्गमनेच्छुः। किं कर्त्तुम? शक्यं समर्थमपि अन्यसत्त्वं विरहिजने पराभवं कर्त्तुम्।

अथोष्णकाले वर्णनद्वारेण प्रयाणं निषेधति—

अवकीर्णरसासु दिक्षु कामं
गमनं मानव! वामलोचनासु।
दवथुव्यथितासु घर्मकाले
स्वशिवं वाञ्छसि चेदिव त्यज त्वम्॥

हे मानव चेद् यदि त्वं स्वशिवम् आत्मनो भद्रं वाञ्छसि तदा त्वं घर्मकाले ग्रीष्मकाले काममत्यर्थं गमनं प्रयाणं त्यज मुञ्च। कासु? दिक्षु। किंभूतासु? अवकीर्णरसासु अवकीर्णा अवध्वस्ता रसा भूमिर्यासु। पुनः दवथुना दाहेन व्यथितासु पीडितासु। कासु इव? वामलोचनासु इव। ग्रीष्मे एवं-विधासु स्त्रीषु गाढं गमनं त्याज्यमिति। अत्र श्लोकानामेतेषां श्लेषोक्तिमतां व्याख्यानानि कोषाद्युपन्यासेन बहुधा भवन्तीति कठिनकाव्योपमपदविन्या-सेन स्फुटमेवावगम्यते।

ग्रन्थोपसंहारे —

वर्षे श्रुतिस्मृतिविचारविवेकरम्ये
श्रीभारते खधृति १८० सम्मितदेशपीठे ।
मत्तोऽधुना कृतिरियं सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत् ॥

अशीत्यधिकशतसंख्यदेशानां पीठस्वरूपे, श्रुतिस्मृतिविचारविवेकरम्ये मत्तः कालिदासात् अधुना इयं कृतिः समासीत् जाता । कस्मिन् ? मालवेन्द्रे श्रीविक्रमार्कनृपराजवरे सति शुभे सति ।

शङ्कुः सुवाग् वररुचिर्मणिरङ्कुदत्तो
जिष्णुस्त्रिलोचनहरी घटखर्पराख्यः ।
अन्येऽपि सन्ति कवयोऽमरसिंहपूर्वा
यस्यैव विक्रमनृपस्य सभासदोऽमी ॥
सत्यो वराहमिहिरः श्रुतसेननामा
श्रीबादरायणमणित्थकुमारसिंहाः ।
श्रीविक्रमार्कनृपसंसदि सन्ति चैके
श्रीकालतन्त्रकवयस्त्वपरे मदाद्याः ॥
धन्वन्तरिक्षपणकामरसिंहशङ्कु-
　　वेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
　　रत्नानि वै वररुचिर्नव विक्रमस्य ॥
अष्टौ यस्य शतानि मण्डलधराधीशाः सभायां सदा
स्युः संसत्परिणाहकोटिसुभटाः सत्पण्डिताः षोडश ।
दैवज्ञा दशपण्मिताश्च भिषजो भट्टास्तथा दाढिनो
वेदज्ञा रसचन्द्रमा विजयते श्रीविक्रमः सोऽधिभूः ॥
यस्याष्टादशयोजनानि कटके पादातिकोटित्रयं
वाहानामयुतायुते च नवतेस्त्रिघ्ना कृति २४३०० हस्तिनाम् ।

नौकालक्षचतुष्टयं विजयिनी यस्य प्रयाणेऽभवत्
सोऽयं विक्रमभूपतिर्विजयते नान्यो धरित्रीधरः ॥
येनास्मिन् वसुधातले शकगणान् सर्वा दिशः सङ्गरे
हत्वा पञ्चनवप्रमान् ५५५५५५५५५ कलियुगे शाकप्रवृत्तिः कृता ।
श्रीमद्विक्रमभूभुजा प्रतिदिनं मुक्तामणि-स्वर्ण-गो-
सप्तीभाद्यपवर्जनेन विहितो धर्मः सुवर्णाननः ॥
उद्दामद्रविडद्रुमैकपरशुर्लाटाटवीपावको
वेल्लद्वङ्गभुजङ्गराजगरुडो गौडाब्धिकुम्भोद्भवः ।
गर्जद्गूर्जरराजसिन्धुरहरिर्धारान्धकारार्यमा
काम्बोजाम्बुजचन्द्रमा विजयते श्रीविक्रमार्को नृपः ॥
येनाप्युग्रमहीधराग्रविषये दुर्गाण्यरुह्यान्यहो
नीत्वा यानि नतीकृतास्तदधिपा दत्तानि तेषां पुनः ।
इन्द्राम्भोऽब्ध्यमरद्रुमस्मरसुरक्ष्माभृद्गुणेनाञ्जसा
श्रीमद्विक्रमभूभृताऽखिलजनाम्भोजेन्दुना मण्डले ॥

यद्राजधान्युज्जयिनी महापुरी
सदा महाकालमहेशयोगिनी ।
सदाश्रयिप्राण्यपवर्गदायिनी
श्रीविक्रमार्कोऽवनिपो जयत्यपि ॥

योरुम्मदेशाधिपतिं शकेश्वरं
जित्वा गृहीत्वोज्जयिनीं महाहवे ।
आनीय संभ्राम्य मुमोच यस्त्वहो
स विक्रमार्कः समसह्यविक्रमः ॥

तस्मिन् सदा विक्रममेदिनीशे
विराजमाने समनन्निकायाम् ।
सर्वप्रजामङ्गलसौख्यसम्पद्
बभूव सर्वत्र च वेदकर्म ॥

शङ्क्वादिपण्डितवराः कवयस्त्वनेके
ज्योतिर्विदः समभवंश्च वराहपूर्वाः।
श्रीविक्रमार्कनृपसंसदि मान्यबुद्धि-
स्तैरप्यहं नृपसखा किल कालिदासः ॥

काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं
पूर्वं ततो ननु कियच्छ्रुतिकर्मवादः।
ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव ॥

वर्षैः सिन्धुरदर्शनाम्बरगुणै ३०६८ र्याते कलौ सम्मिते
मासे माधवसंज्ञिके च विहितो ग्रन्थक्रियोपक्रमः।
नानाकालविधानशास्त्रगदितज्ञानं विलोक्यादरा-
दूर्जे ग्रन्थसमाप्तिरत्र विहिता ज्योतिर्विदां प्रीतये ॥

एतद्ग्रन्थनिर्माता कालिदासः कुमारसंभवरघुवंशादिमहाकाव्यनिर्माता कविकुलगुरुः कालिदास एवेत्यत्र कश्चित् संशय एव तावन्निराधारः——ज्योतिर्विदाभरणस्यास्य प्रत्येकस्यामध्यायसमाप्तौ 'इति श्रीकालिदासकृते ज्योतिर्विदाभरणे मानाध्यायः, संज्ञाध्यायः, पर्वाध्यायः इत्येवं लिखितत्वात् तट्टीकायां च "इति श्रीपौर्णिमीयगच्छाधिराजभट्टारकपुरन्दर-श्रीमहिमाप्रभसूरीश्वरचरणसरोरुहचकोरायमाण-भावरत्नविरचितायां कालिदासकृत-ज्योतिर्विदाभरणस्य सुखबोधिकायां मानाध्यायः, भद्राध्यायः, पर्वाध्याय इति स्पष्टीकृतत्वात्।

ग्रन्थोपसंहारे तु विक्रमादित्यराजसभावर्णनं कलियुगारम्भादष्टषट्खाग्नि ३०६८ मितगताब्देषु अर्थतो विक्रमसंवत्प्रवृत्तेश्चतुर्विंशतिवर्षानन्तरं मालवेन्द्रे श्रीविक्रमादित्यनृपतौ पृथिवीं शासति सति मया कालिदासेन ज्योतिर्विदाभरणनामा ग्रन्थोऽयं रचित इति कथनं च ग्रन्थकारस्य नितरामेव दृढीकरोति विक्रमसंवत्प्रवर्त्तकवीरविक्रमादित्यसभापण्डितस्य कालिदासस्य कृतिरियमिति।

अथ सत्स्वप्येतेषु प्रसिद्धैतिह्यानुकूलेषु प्रमाणेषु भाउदाजीनामकेन वैद्यराजेन कविकालिदाससमयनिरूपणार्थमस्यान्तिमाध्यायस्याङ्गलभाषायां कृतोऽनुवादोऽपि जगत्प्रसिद्धं कालिदासमेव प्रमाणीकरोति। तत्र ज्योतिर्विदा-भरणोक्त "शाकः शराम्भोधियुगो ४४५ नितो" इत्यादिनाऽयनांशानयनं विलोक्य स एव ४४५ शकाब्दस्तदनुकूलः ख्रीष्टीयपष्ठशताब्दी वा कालिदासस्य जन्मसमयः स्थिरीकृतः—See the Literary Remains of Dr. Bhaudāji pp. 10-13. "It is clear that the author of the Jyotirvidābharaṇa is sufficiently modern to have confounded Harṣa Vikramāditya of Ujjaini ; in the 6th century, with the founder of the Samvat Era."

अयं समयो वराहमिहिरसमयस्यासन्न एव, यतो वराहमिहिरेण सप्तविंशत्यधिकचतुःशत ४२७ समशकाब्दात् "पञ्चसिद्धान्तिकाख्ये" करणग्रन्थेऽहर्गण आनतः। ब्रह्मगुप्ताचार्यकृतखण्डखाद्यककरणटीकाकार आमराजदैवज्ञः "नवाधिकपञ्चशत ५०० शकाब्दे वराहमिहिराचार्यो दिवङ्गतस्तस्मिंश्च समयेऽयनांशाभाव आसन्न एव" इति लिखति। एवं चैतद्ग्रन्थायनांशसाधनोक्तः पञ्चचत्वारिंशदधिकचतुःशत ४४५ शकाब्द-समयो वराहमिहिरसमयस्यासन्न एवेति सत्यपि प्रामाण्यवति ग्रन्थोप-संहारोक्तेन "वर्षैः सिन्धुरदर्शनाम्बरगुणैं ३०६८ याते कलौ सम्मिते" इत्यनेन महानेव विसंवादो जायते।

एवमनेकेऽपि विषयाः परस्परविरोधिनस्तादृशा विद्यन्ते यदवलोकनेन स एव कविकुलगुरुः कालिदास एवास्य रचयितेति महदेव सन्देहास्पदम्। तत्रायनांशानयनं "शाकः शराम्भोधियुगो ४४५ नितो हृतो माने खतर्कै-६० रयनांशकाः स्मृताः।" इत्यनेन ग्रन्थकर्त्तुः ४४५ शकाब्दसामयिकत्वं तदर्वाचीनत्वं वा प्रमाणीकरोति परमष्टषट्खाग्निमितकलिगतवर्षेषु ग्रन्थोऽयं रचित इति ग्रन्थोपसंहारोक्तिः शकाब्दारम्भात् एकादशाधिकैकशत १११ वर्षैः पूर्वमेव ग्रन्थोऽयं रचित इति दृढीकरोति।

यद्यप्ययं ४४५ शकाब्दोऽयनांशप्रवृत्तिरूपः सर्वैराधुनिकैरपि मन्यते परमयनांशोपलब्धिर्भारतवर्षे चतुःपञ्चाशदधिकाष्टशत ८५४ शकाब्द-सामयिकेन मुञ्जालाचार्येणैव प्रथमं कृतेति प्रसिद्धम्। आर्यभटवराह-मिहिरब्रह्मगुप्तलल्लादयो ज्यौतिषाचार्या अयनांशचलनसम्बन्धे सन्दिहाना आसन्निति न ते कुत्राप्ययनांशसाधनं तच्चर्चां वा चक्रुरिति तत्र ज्योतिर्विदा-भरणरचयिता कालिदासः कविर्भूत्वाऽप्ययनांशसाधनं स्फुटमुक्तवानिति।

अथ "ऐन्द्रे त्रिभागे च गते भवेत्तयो" रित्यादिना द्वादशायनांश-सामयिकं क्रान्तिसाम्यलक्षणं केशवार्कोक्त "विवाहवृन्दावन" ग्रन्थसदृशमिति तत्सामयिकस्तत्परवर्त्ती वा ग्रन्थकारोऽयं भवितुमर्हति। चतुश्चत्वारिंशदधिक-चतुःशत ४४४ समे शकाब्देऽयनांशाभावः प्रतिवर्षमेका कलाऽयनांश-गतिश्च मुञ्जालानुसारिणी कल्पते चेत् द्वादशायनांशसमयः षष्ट्यधिकैका-दशशता ११६० सन्नतो भवतोति वस्तुतस्तदासन्नसमय एव केशवार्कस्येति तत्परवर्त्ती ज्योतिर्विदाभरणरचयिता कालिदासगणक इति प्रतीयते।

महाकविना कालिदासेन कस्मिन्नपि काव्ये नाटके वा पद्यबद्धं नात्म-नामापि कुत्रापि लिखितं परमत्र विक्रमार्कसभापण्डितानामनेकेषां नामानि स्वस्यापि नाम विक्रमसभासदस्यत्वं च "काव्यत्रयं सुमतिकृद्रघुवंशपूर्व-" मित्याद्युक्त्या कालिदासकृतानामनेकेषां ग्रन्थानां नामानि च लिखितानीत्यत्र च को हेतुः ?

अथ वराहमिहिरेण साकं विवादे जाते ज्यौतिषग्रन्थमिममकरोदित्यपि तावन्न स्वीकर्तुमर्हम्। वराहमिहिरादिज्यौतिषाचार्यमतानुकूलं ज्योतिर्विदा-भरणं रचयामीति ग्रन्थादावेव स्फुटमभिहितत्वात्।

महाकविकालिदासोक्तकाव्यनाटकानां प्रसादगुणोपलक्षिताभिरुक्तिभि-र्ज्योतिर्विदाभरणस्यातिकठिनोक्तेः सर्वथैव सादृश्याभावाच्च ज्योतिर्विदा-भरणकर्त्ता कालिदासगणकः कविकुलगुरुः कालिदासो न भवितुमर्हतीति च स्फुटमेव प्रतीयते।

अथैवं राजसत्ताध्याये कलेरारम्भाद् गतानां भाविनां च नरपतीनां

नामानि तैः प्रवृत्तानां शाकवर्षाणां च प्रमाणानि लिखितानि—यथा कलियुगारम्भाद् युधिष्ठिरशाकवर्षाणि ३०४४, ततो विक्रमशाकवर्षाणि १३५, ततः शालिवाहनशाकवर्षाणी १०००० त्यादिवचनानि भविष्यपुराणाद्युक्तिवन्निराधाराणि कालिदाससदृशानां महाकवीनां पक्षेऽसङ्गतान्यसम्भवानि चेति कालिदासस्य कृतित्वे महानेव संशयः।

यद्यप्ययं ग्रन्थः कालिदासकृतो नास्तीत्येव ग्रन्थपर्यालोचनया प्रतीयते तथाप्यत्रानेके तादृशा विषया अपूर्वा इतिहासोपयोगिनो विद्यन्ते यदनुरोधेनायं ग्रन्थोऽवश्यमेव विलोकनीयो विद्वद्भिः। अत्रत्ययात्राप्रकरणोक्तम् ऋतुवर्णनद्वारा यात्राया विधिनिषेधविधानं मुहूर्त्तग्रन्थोक्तमुनिमतानुकूलमपि साधारणविज्ञानविवेचनेनापि सामञ्जस्यं साधयतीति महानेव चमत्कारः।

सरसश्रुतिमधुरकाव्यांशविलोकनेन श्लेषोक्तिविवेचनेन चावश्यमेवास्य ग्रन्थस्य महत्त्वं विदितं भवति। औदार्यं चानेकप्राचीनविद्वद्वरवत् कालिदासगणकस्येदं विलोक्यते यन्महता परिश्रमेण सम्पादितं ग्रन्थजातं स्वस्मात् प्राचीनस्य कस्यचन महामहिम्नो विदुषो नाम्ना प्रकाशितं जगतीति।

अधुना तु बहवोऽपि विद्वांसोऽन्येन विवेचितं विषयजातं विरचितं ग्रन्थरत्नं च चौर्यवृत्त्या नीत्वा यत्किञ्चित् परिवर्त्त्य वा स्वनाम्ना प्रकाशयन्ति जगतीति धन्यास्ते प्राचीना अस्माभिः प्रणम्या एवेति शिवम्॥

———

# सुखानुभूतिः

[ निबन्धकः—श्रीशिवशङ्कर-शास्त्री ]

( क )

आपेक्षिकः खलु सुखिशब्दः। यदा कश्चिन्नरः सुखीत्यभिधीयते, तदा स येषामितरेषां तुलामारोप्यते तेभ्यः, साधारणजननिवहादात्मनो जीवितस्य समयान्तरमनोऽवस्थापेक्षया वा सुखितर इत्यवगम्यते। तथा हि यदा कश्चन जनः पर्याप्तो भवति तस्य प्रारिप्सितवस्तु लब्धुं तदा स सुखित इति कथ्यते। किञ्च तुलनया निर्णीतार्थेऽपि यदा नरः कश्चित् साधारणजनसमूहात् स्वास्थ्यवत्तरो धनवत्तरश्च भवति तदा स सुखीत्याख्यायते। अतिनिपुणं विचार्यमाणेऽपि सुखशब्दस्यार्थे, इदमेकं सुनिष्पन्नं भवति—यदा नरो दुःखापेक्षया सुखमधिकतरमनुभवति तदा स सुखभाक् इति भिगद्यते। इत्थं सुखस्य परिमाणं दुःखापेक्षया यथा यथा गरीयो भवति नरस्य, तथा तथा सोऽधिकतरसुखित इत्याख्यायते।

( ख )

इन्द्रियैर्विषयोपभोगो न जात्वलंभवति सनातनीं शान्तिं शाश्वतञ्च सुखं प्रदातुम्। स्मृतिश्चात्र यथा—

भोगासक्ताः प्रमुग्धाः सततधनपरा भ्राम्यमाणा यथेच्छं<br>दारापत्यादिरक्ता निजजनभरणे व्यग्रचित्ता विपण्णाः।<br>लप्स्येऽहं कुत्र दर्भं स्मरणमनुदिनं चिन्तया व्याकुलात्मा<br>हाहा लोका विमूढाः सुखरसविमुखाः केवला दुःखभाराः॥

भवामो वयं विषयोपभोगानन्देन विगतचेतना इव। नवतामुपयन्तु वा क्षणे क्षणे अस्माकमुपभोगविषयास्तथापि आशानुरूपं सुखं लब्धुमीशा न भवामः। इन्द्रियोपभोगजनितं सुखं न कदापि तात्त्विकं भवितुमर्हति।

२

इदन्तु सर्वथा क्षणिकम्। ज्ञेयश्चास्माभिर्यदिमे भावा भवेऽस्मिन क्षण-भङ्गुरा इति। किञ्च—

सम्पच्च विद्युदिव सा लोकलोचनखेदकृत्।
लोला क्वापि लयं याति या परानुपकारिणी ॥

अपरञ्च—ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।
सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥
क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥

( ग )

ऐन्द्रियिकमानन्दं पुनः पुनरुपभुञ्जानस्य तत्रासक्तिर्नैव तिष्ठति। इन्द्रियाणि च क्रमेण निर्जीवतां तथाऽवशतां यन्ति। तादृशं सुखं नोत्पद्यते सत्यपि सुखकारणे। यथा कस्यचित् यन्त्रस्यांशविशेषस्य पुनः पुनर्व्यवहारेण तद् यन्त्रं विकलतामुपैति तथा जीवदेहस्येन्द्रियाणामंशभूतानां निरन्तरमुद्रेकेण नचिरायैव तत्पाटवं ह्रासमेति, विषय-भोगजनितानन्दस्यासकृदुपभोगेन न तस्य विषयेषु तादृशी स्पृहा विद्यते, यादृशी प्रथमावस्थायामानन्दभोगस्यावर्त्तत। अतो दृश्यते नश्वरविषयोपभोगा-दाशानुरूपं सुखं न प्राप्यते। पार्थिवपदार्थानां सुखं न हि नैर्मल्यस्य परां कोटिमधिरोढुमर्हति। आशा हि न स्वल्पविषया।

उक्तञ्च—निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः।
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मास्पदं वाञ्छति
ब्रह्मा विष्णुपदं हरिर्हरपदं त्वाशावधिं को गतः ॥

सुखमप्याशावदनन्तपारम्। लोकेऽस्मिन् निर्मलं शाश्वतञ्च सुखं न कुत्रापि लभ्यते। मूढा मानवा मुधा तस्मै सुखाय क्षणस्थायिने स्पृहयन्ति। अधिगच्छन्ति न जातु ते सुखम्। न यान्ति वा तेषां मनोरथाः सिद्धिम्। उक्तञ्च शान्तिशतके—

जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥

किञ्च—गृहाण्याश्रित्य गावश्च क्षेत्राणि च धनानि च ।
दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ॥
एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः ।
रागद्वेषौ विवर्द्धेते अनित्यत्वमपश्यतः ॥
रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम् ।
मोहजाता रतिर्नाम समुपैति नराधिप ॥
कृतार्थं भोगिनं मत्वा सर्व्वे रतिपरायणाः ।
लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ॥
ततो लोभाभिभूतात्मा सङ्गाद्वर्द्धयते जनम् ।
पुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति ॥
स जानन्नपि चाकार्यमर्थार्थं सेवते जनः ।
बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते ॥
ततो मानेन सम्पन्नो रक्षन्नात्मपराजयम् ।
करोति येन भोगी स्यामिति तस्माद्विनश्यति ॥
तथा हि बुद्धियुक्तानां शाश्वतं ब्रह्मवादिनाम् ।
अनिच्छतां शुभं कर्म नराणां त्यजतां सुखम् ॥
स्नेहायतननाशाच्च धननाशाच्च पार्थिव ।
आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ॥
निर्वेदादात्मसम्बोधः सम्बोधाच्छास्त्रदर्शनम् ।
शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति ॥
दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शनात् ।
यो वै प्रियसुखे क्षीणस्तपः कर्त्तुं व्यवस्यति ॥
तपः सर्व्वगतं तात हीनस्यापि विधीयते ।
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रवर्त्तकम् ॥

( घ )

मानवजीवनं बाहुल्येन मायामयं वृथामनोरथपूर्णञ्च। बाह्यदृश्य-दर्शनेन कस्यचिद्वस्तुनः स्वरूपं निर्धारयितुं न शक्यते। विषयोपभोग-जनितस्यानन्दस्य मार्गे नैराश्यं बहुलीभवति। प्रीतिकरविषयोपभोगं प्रतीक्ष-माणं नरं मोघीभूताऽपि सुखेच्छापाततः सुखयत्येव। परन्त्वाशाबद्धं तस्य हृदयं न कदापि लब्धुमलं भवत्याशानुरूपसुखम्। अथवा साध्विदमुच्यते—

तडिन्मालालोलं प्रतिविरतिदत्तान्धतमसं
भवे सौख्यं हित्वा शमसुखसुधादेयमनघम्।
इति व्यक्तोद्गारं चटुलवचसः शून्यमनसो
वयं वीतव्रीडाः शुक इव पठामः परममी॥

विषयेषु स्पृहावतां जनानां यदा सर्वे प्रयत्ना विफला भवन्ति तदा तेषां मनांसि विषादस्य परां कोटिमधिरोहन्ति। पुनः पुनर्व्यर्थमनोरथास्ते शाश्वतसुखसन्धानपराः सद्गुरुं शरणं व्रजन्ति। श्रुतिश्चात्र यथा--

तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्। समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। अपि त्वाचार्यवान् पुरुषो वेद। तथा च --

जननमरणादिसंसारानलसन्तप्तो दीप्तशिरा जलराशिमिव उपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति॥

स गुरुः सञ्जातकृप एनमुपदिशति--

सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः।
दशार्द्धप्रविभक्तानां भूतानां बहुधा गतिः॥
सौवर्णं राजतञ्चापि यथाभाण्डं निषिच्यते।
तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः॥
नारीजाज्जायते किञ्चिन्नाकृत्वा सुखमेधते।
सुकृतैर्विन्दते सौख्यं प्राप्य देहक्षयं नरः॥
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम्।
कुरुते यादृशं कर्म तादृशं प्रतिपद्यते॥

निरन्तरञ्च मिश्रञ्च लभते कर्म पार्थिव ।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते ॥
कदाचित् सुकृतं तात कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥
ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते ।
सुकृतक्षयाद्दुष्कृतञ्च तद्विद्धि मनुजाधिप ॥
दमः क्षमा धृतिस्तेजः सन्तोषः सत्यवादिता ।
ह्रीरहिंसा व्यसनिता दाक्ष्यं चेति सुखावहाः ॥
दुष्कृते सुकृते चापि न जन्तुर्नियतो भवेत् ।
नित्यं मनःसमाधाने प्रयतेत विचक्षणः ॥
नायं परस्य सुकृतं दुष्कृतं चापि सेवते ।
करोति यादृशं कर्म तादृशं प्रतिपद्यते ॥
सुखदुःखे समाधाय पुमानन्येन गच्छति ।
अन्येनैव जनः सर्वः सङ्गतो यश्च पार्थिवः ॥ इति ।

( ङ )

इन्द्रियभोग्यवस्तूनामुपभोगेन दुर्लभमायुर्विनश्यति। अतः पुण्येन कर्मणा नर उत्कर्षार्थं प्रयतेत ।

अनित्यमिह मर्त्यानां जीवितं हि चलाचलम् ।

यो विचक्षणः सुखे वा दुःखे वा वर्त्तमानः शुभानि चिनोति, स तन्त्राणि पश्यति। संसारसागरे निमज्जन् मानवः सदा विविधेनोपायेनेमं भवार्णव-मुत्तरितुं यतेत। उक्तञ्च महर्षिणा पराशरेण—

सुखितो दुःखितो वापि नरो लोभं परित्यजेत् ।
अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम ।
असन्तोषोऽसुखायेति लोभादिन्द्रियसम्भ्रमः ।
ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता ॥

नष्टप्रज्ञो यदा तु स्यात्तदा न्यायं न पश्यति ।
तस्मात् सुखक्षये प्राप्ते पुमानुग्रं तपश्चरेत् ॥
यदिष्टं तत् सुखं प्राहुर्द्वेष्यं दुःखमिहेष्यते ।
कृताकृतस्य तपसः फलं पश्यस्व यादृशम् ॥

* * * *

अबुधा न प्रशंसन्ति मोक्षं सुखमनुत्तमम् ॥
यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः ।
तथा तथा सुखं प्राप्य प्रेत्य चेह च मोदते ॥
यन्तु प्रीतिपुराणेन चक्षुषा तात पश्यति ।
दीपोपमानि भूतानि यावदर्थान्न पश्यति ॥
सान्त्वेमान्नप्रदानेन प्रियवादेन चाप्युत ।
समदुःखसुखो भूत्वा न परत्र महीयते ॥

श्रुतिरप्याह—उत्तिष्ठत, जाग्रत प्राप्य वरान् निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया ।
दुर्गं पथस्तत् कवयो वदन्ति ॥

शाश्वतसुखस्य मार्गो हि विघ्नसङ्कुलः । तथा च भगवाञ्छङ्करो मुण्डकोपनिषदि—

'तत्रापरविद्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारोऽनादिरनन्तो दुःखस्वरूपत्वाद्धयातव्यः प्रत्येकं शरीरिभिः । सामस्त्येन नदीस्रोतोवदव्यवच्छेदरूपसम्बन्धस्तूपशमलक्षणो मोक्षः परविद्याविषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽद्वय' इति ।

( च )

'आत्मा सर्वव्यापको नित्यो दुःखनिवृत्तिरूपः सुखरूपश्चेति । आत्मस्वरूपो मोक्षः पुरुषार्थ एव । तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मात् अन्तरतरं यदयमात्मा' इति । 'यो वै भूमा तत् सुखं, एष एव परम

आनन्दः, विज्ञानम्, आनन्दम् ब्रह्म' इत्यादिभिः श्रुतिभिस्तस्य परमानन्दरूपत्वोपदेशात्। तस्य च नित्यत्वेऽपि लोके धर्मजन्यतत्तदन्तःकरणवृत्तिव्यङ्ग्यतया तदुत्पत्तिविनाशोपचारः। यद्यपि संसारदशायामविद्यावृतरूपत्वात् आत्मा परमानन्दरूपतया न प्रथते, तथापि तत्त्वविद्ययाऽविद्यानिवृत्तौ स्वप्रकाशतया स्वयमेव परमानन्दतया प्रकाशते इति न व्यञ्जकापेक्षा। 'यत् साक्षात् अपरोक्षाद् ब्रह्म, अयमात्मा सर्वान्तरः, सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म" इति श्रुतेः स्वप्रकाशज्ञानानन्दरूप एव आत्मा। अन्तःकरणादुपाधितादात्म्याध्यासेन च तद्वृत्तौ ज्ञानाध्यासात् 'जानामि' इति तदाश्रयत्वप्रतीतिः। धात्वर्थत्वमुत्पत्तिविनाशवत्त्वं चान्तःकरणवृत्तेरिव इति ज्ञप्तिरूपमुख्यज्ञानस्य सर्वाधिष्ठानत्वेन अन्याश्रयत्वाभावात् न द्वैतापत्तिः। तेन ज्ञानसुखात्मक आत्मा सत्यः तद्भिन्नं च सर्वं जगदसत्यमिति सिद्धम्। श्रुतिश्चात्र यथा—उत्थितः सन् सुखमहमस्वाप्समिति लोकान् वदति, तेन आनन्दं स्वालयं गतः आनन्दाद्याऽऽगत इति ज्ञायते आनन्दश्च ब्रह्म।' 'यथैव एष देवदत्तो यष्ट्यादिना काष्ठेनापि ताड्यमानो न याति न पलायते केवलमानन्दानुभवात् इतरानुभवाभावादिति। किञ्च— आनन्दः सुखम्। सुषुप्तौ आत्मरूपं ज्योतिरानन्दयते इति सुखमधिकृत्य उपनिषदः।

( छ )

'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ' इति सांख्यसूत्रम्, सुखोत्कर्षस्यापि क्षयित्वात् न कृतकृत्यता। अत्यन्तदुःखनिवृत्तिस्तु न तथा अपुनरावृत्तेः। सुखे दुःखस्यावश्यम्भावात्, यदि सुखे सति दुःखमवश्यम्भवेत्, कस्तर्हि सुखमभिलषेत् तस्माद्दुःखबहुलत्वात् सुखस्य दुःखनिवृत्तिरेव पुरुषार्थः। स्रगादीनामर्जने क्षयादौ च दुःखमिति स्वसंवेदनमेव प्रमाणमिति। रागिणां सुखम्, वीतरागाणां दुःखाभाव इति च सांख्यसूत्रे अनिरुद्धभट्टपादाः। तथाहि महर्षिः कपिलः—'तदपि दुःखशबलमिति दुःखपक्षे निक्षिपन्ते विवेचकाः'।

विज्ञानभिक्षुनाऽप्युक्तम्—

सुखाशया बहिः पश्यन् देही हीन्द्रियरन्ध्रकैः।
वातायनैर्गृहीत्वान्तः सुखं वेत्ति न बाह्यदृक् ॥
दुःखलभ्यान् दुःखमयान परिणामेऽतिदुःखदान्।
विषयोत्थान् सुखाभासान् धिक् स्वात्मसुखबोधकान ॥
प्रियदर्शनतो बुद्धेः सुखं लोकेषु दृश्यते।
अतोऽनुमेयं परमप्रियदृष्ट्या परं सुखम् ॥
प्रीतिरन्यत्र चानित्या विवेकाद्यैः सुखादिषु।
आत्मप्रीतिस्तु नित्याऽतो नित्यानन्दः पुमान् यतः ॥
आत्मार्थत्वेन सर्वत्र प्रीतिरात्मा स्वतः प्रियः।
इति शश्वच्छ्रुतिः प्राह आत्मदृष्टिविधित्सया।
आत्मनः प्रियतां बुद्धिर्यदि पश्येत समाहिता।
सर्वातिशायिनीं तर्हि सुखाब्धौ किं न मज्जति ॥
अतोऽप्यनुपमं ज्ञेयं प्रियात्मेक्षणतः सुखम्।
भुञ्जते तत् सुखं धीरा जीवन्मुक्ता महाधियः ॥
अन्तरात्मसुखं सत्यमविसंवादि योगिनाम्।
अपश्यन्न कृपणो बाह्यसुखार्थी वञ्चितो जनः ॥ इति।

सांख्यानां तथा वैदान्तिकानां मुक्तिमनु किञ्चिद्वैपम्यं विद्यते। सुखदुःखविरतिरेव सांख्यानां मुक्तिः सुप्तिसमाध्योर्ब्रह्मरूपत्वात्। सर्वदुःखविमोचनात्मकं हि मोक्षस्य पर्यायान्तरम्। इदमेव कैवल्यं हि वैदान्तिकानां मुक्तिः बुद्धस्य च निर्वाणम् तथान्येषामप्येवम्। वैदान्तिकानां मुक्तौ अस्ति विद्यमानतानन्दस्यात्मनः प्रकृत्यानन्दघनत्वात्।

'सुखानुशयी रागः'—अस्यार्थः—सुखज्ञस्य सुखानुस्मृतिपूर्वकः सुखसाधनेषु तृष्णारूपो गर्द्धो रागसंज्ञः क्लेशः। अत्र च योगसूत्राणि—'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्वमेव दुःखं विवेकिनः।'

'हेयं दुःखमनागतम्' 'द्रष्टृदृश्ययोः संयोगो हेयहेतुः' 'द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः' 'तदर्थ एव दृश्यस्यात्मा' 'स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः' 'तस्य हेतुरविद्या' 'तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम्' 'विवेकख्यातिरविप्लवा हानोपायः' 'शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः' 'सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च' 'सन्तोषादनुत्तमः सुखलाभ' इति पतञ्जलिः।

अत्र नैयायिकाः—

'सुखन्तु जगतामेव काम्यं धर्मेण जन्यते ।
अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम् ।

इच्छा हि द्विविधा—फलविषयिणी उपायविषयिणी च। फलन्तु सुखं दुःखाभावश्च। तत्र फलेच्छां प्रति फलज्ञानं कारणम्। अत एव स्वतः पुरुषार्थः सम्भवति। यज्ज्ञातं सत् स्ववृत्तितयेष्यते, स स्वतः पुरुषार्थ इति तल्लक्षणात्' इतरेच्छानधीनेच्छाविषयत्वमिति फलितोर्थः। उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम्। किञ्च—

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम्।
गङ्गास्नानादियागादिर्व्यापारः परिकीर्त्तितः॥
कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः।
अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः॥
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ।
इमौ तु वासनाजन्यो ज्ञानादपि विनश्यतः॥ इति

अत्र च वैष्णवाः—

यथा शर्करा स्वरूपेण न सुखप्रकाशः। तत्प्रयोजनकस्य शर्करासंवेदनस्याभावात्, किं तु तद्भोजिनः तत्संवेदनवतः। एवं विष्णुभावापन्नस्य सुखरूपत्वेऽपि न सुखप्रकाशः तत्संवेदनाभावात्। किं तु तद्भेदेनावस्थितस्य—'अयं विष्णुः सकलकल्याणगुणो मत्सेव्यः' इति संवेदनवतः। तस्माद्विष्णुभावो न मोक्षः, किन्तु तत्सन्निधिस्थितस्य तत्संवेदनम् इति। तथा च—

एकमेकमिदं ब्रह्म न भेदि सकलं जगत् ।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः ॥
तदेतदुपदिष्टं ते संक्षेपेण महामुने ।
परमार्थं सारभूतं सदद्वैतमशेषतः ॥
तद्भावभावनापन्नस्ततोऽसौ परमात्मनः ।
भवत्यभेदि भेदश्च तस्याज्ञानकृतो भवेत् ॥

इति विष्णुपुराणाद्युक्तेः 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतेश्च इति भावः ।

अनित्याः खल्विह लोके विषया उपभोगस्य। तेभ्यो यत् सुखमुत्पद्यते तदप्यनित्यम्। अतोऽनित्यस्य सुखस्य कृते को मूढ उत्कण्ठेत ? उक्तञ्च भगवता—

'नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥

संसारदुःखैर्मुहुरर्दितात्मानो जना वस्तुयाथार्थ्यवेदिन इव पार्थिवसुखस्यानित्यत्वमप्रत्यक्षीकुर्वन्तः सदा तन्नित्यमिव मन्यमाना रात्रिन्दिवं यतन्ते तदधिगन्तुम्। ते तु नेदमेव जानन्ति यत्—

विषया विनिवर्त्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ।
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥

अतो जनैर्वशीकृतेन्द्रियैर्भवितव्यम्। चेतश्च प्रशान्तं कर्त्तव्यम्। जितेन्द्रियस्य प्रशान्तचित्तस्य चेतसि परमशान्तिरूपो मोक्षानन्द उत्पद्यत इति शम् ।

———

# वेदानां वैदिकमन्त्रद्रष्टॄणां च संक्षिप्ता विवृतिः

[ निबन्धकः—श्रीउपेन्द्रनाथ-विद्याभूषण शास्त्री ]

" यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तम् अहं वन्दे विद्यातीर्थमहेश्वरम् ।।"

" द्यौर्नः पिता जनिता नाभिरत्र
बन्धुर्नो माता पृथिवी महीयम् ।
उत्तानयोश्चम्वोर्योनिरन्तः
यत्र पिता दुहितुर्गर्भम् आधात् ।। " इति अथर्ववेदे ।

[ दीर्घतमा नाम महर्षिः पूर्वनिवासं पितृलोकं द्याम् अभिध्याय वदति—द्यौः आदिस्वर्गः (इलावृतवर्षम् इति यावत्) नः अस्माकं जम्बुद्वीपनिवासिनां पिता पितृभूमिः पूर्ववसतिस्थानम् अभूत् इत्यर्थः । सा द्यौः नः जनिता जनयित्री आदिजन्मभूमिः इत्यर्थः । अत्र अत्रैव दिवि आदिस्वर्गे इत्यथः । नः अस्माकं पूर्वपुरुषाणां नाभिः उत्पत्तिस्थानम् अभूत् । सा च द्यौः नः अस्माकं बन्धुः ज्ञातिश्च । अस्माकं ज्ञातयो देवाः तत्रैव दिवि वर्त्तन्ते । तथा च " अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् " इति अष्टममण्डले सप्तविंशतितमसूक्ते दशमी ऋक् । इयम् अस्मदध्युषिता मही महती पृथिवी धरा पृथुजनपदः जम्बुद्वीपः नः अस्माकं जम्बुद्वीपनिवासिनां माता मातृभूमिः वर्त्तते इत्यर्थः । उत्तानयोः अत्युन्नतयोः चम्वोः सेनयोः सेनापतिस्वरूपयोः द्यावापृथिव्योः पूर्वस्वर्ग-जम्बुद्वीपयोः अन्तः मध्ये पिता द्यौः योनिः सर्वेषाम् उत्पत्तिस्थानं यत्र पिता सा द्यौः दुहितुः कन्यारूपायाः अन्तरीक्षभूमेः भुवर्लोकस्य गर्भम् सन्तानम् औपनिवेशिकान् आधात् दधार धारयामास । द्यावापृथिव्योरेव देवमानवाः अन्तरीक्षं (भुवर्लोकं) दिवं च गताः इति भावः ] तथा च अथर्ववेदे—" इत एते उदारुहन् दिवः पृष्ठान्यारुहन् । प्र भूर्जयो यथा पथा द्याम् अङ्गिरसो ययुः ।।"

[ यथा भूर्जयः जम्बूद्वीपः भारतवर्षम् इति यावत् स्वाधिकारभूतम् अभूत्। तथा एव अङ्गिरसः पथा सुरवर्त्मना देवयानमार्गेण द्याम् आदिस्वर्गम् इलावृतवर्षम् प्रययुः। ततः एते अङ्गिरसः इतः दिवः द्युलोकान् उदारोहन्। तथा चोक्तं कृष्णयजुषि—"देवलोको वै साम, देवलोकाद् एव अन्यं मानुषलोकम् प्रत्यवरोहन्तो यन्ति" इति। ततु पितरि दिवि स्वर्लोके आदिस्वर्गे उत्पन्नत्वात् आदिपितृकत्वात् सामवेदस्यैव अभ्यर्हितत्वम्। ऋग्वेदो जम्बुद्वीपसम्पत्, अतः पुरुषसूक्तद्रष्टा पूर्वम् एव ऋग्वेदस्य नाम कृतम्। तथा च प्राक् दिवि एव गीर्वाणवाणी नागराक्षराणि च सम्भूतानि। तथा चोक्तं यजुषि—"दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा, अन्तरिक्षे व्यक्रंस्त त्रिष्टुभेन छन्दसा, पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा" इति। तथा च ऋग्वेदे दशममण्डले नवतितमसूक्ते चतुर्दशी ऋक्—"नाभ्या आसीद् अन्तरीक्षं शीर्ष्णो द्यौः समवर्त्तत पद्भ्यां भूमिः" इति।

[ प्रजापतेः नाभ्याः नाभेः अन्तरीक्षं भुवर्लोकः समवर्त्तत, शीर्ष्णः शिरसः द्यौः स्वर्लोकः आदिस्वर्गः समवर्त्तत, तस्य पद्भ्यां पादाभ्यां भूमिः भूर्लोकः जम्बुद्वीपः समवर्त्तत। प्रजापतिः पूर्वं स्वर्लोकं ततः भूर्लोकं ततो भुवर्लोकं क्रमशः लोकत्रयम् अकल्पयत्। आदौ द्यौरेव एकासीत्, न तु भूर्वा अन्तरिक्षं वा। ततो भूरुद्भूता। ततो मिलित्वा द्यावापृथिव्यौ रोदसी बभूवतुः। ततो भुवर्लोकस्य क्रमेण उत्पत्तौ तेषां सर्वेषां समवायेन त्रिभुवनं समुत्पन्नम्। ततो यथोक्तम् ऋचि—"ऋतं च सत्यं च...ततो रात्र्यजायत" इति दशमे मण्डले नवत्युत्तरशततमे सूक्ते प्रथमायाम् ऋचि। अथ केचित् साममन्त्राः कृते युगे दृष्टाः, केचिच्च साममन्त्राः ऋङ्मन्त्राः यजुर्मन्त्राश्च त्रेतायुगस्य प्रातरेव दृष्टाः। तेषां समवायेन समाहारेण च त्रयी प्रतिष्ठापिता। अथ काले काले आ त्रेतायुगकैशोराद् द्वापरसायमन्तं च यावत् ये ये वेदमन्त्राः स्वर्लोक-भूर्लोककेतुमालवर्षादिषु दृष्टाः ते च क्रमशः समाहृताः प्रतिसङ्कलनाभ्यन्तरे प्रवेशिताः इत्यधिगम्यते शास्त्राध्ययनात्। तथा चोक्तं वायुपुराणे—"त्रेतादौ संहिता वेदाः" इति। तथा च

विष्णुपुराणे—"त्रेतायां प्रथमे व्यस्ताः स्वयं वेदाः स्वयम्भुवा" इति। या चेयं वेदमाता गायत्री चतुर्षु वेदेषु एव समाम्नायते सा खलु साम्नि प्रथमम् एव वर्णने स्वर्लोके एव दृष्टत्वात्। तथा चोक्तं योगि-याज्ञवल्क्येन—

तपसा सुसमृद्धस्य आदिस्वर्गात् स्वयम्भुवः।
ओङ्कारपूर्वा गायत्री निर्जगाम ततो मुखात्॥

किं बहुना ऋग्वेदस्य व्याहृतिः भूः यजुषः भुवर्लोकः, साम्नः स्वर्लोक आदिस्वर्गो द्यौरिति सुधीभिर्विभाव्यम्।

ततः स्वर्लोकाद् जम्बुद्वीपम् अभ्यागता देवाख्या द्विजा अपि ददृशुः वेदमन्त्रान्। तथा च "मिमीहि श्लोकम् आस्ये पर्जन्य इव ततनः। गाय गायत्रम् उक्थ्यम्।" इति प्रथमे मण्डले अष्टात्रिंशत्तमे सूक्ते चतुर्दशी ऋक्। [ऋत्विक्, त्वम् आस्ये मुखेन श्लोकम् ऋचं मिमीहि विरचय इत्यर्थः।] तथा च "अयं देवाय जन्मने स्तोमो विप्रेभिरासया। अकारि रत्नधातमः।" इति प्रथमे मण्डले विंशतितमे सूक्ते प्रथमा ऋक् [अयं स्तोमः स्तुतिमन्त्रः देवाय जन्मने ऋभूणां मानुषाणां गुणबलेन देवत्वप्राप्तिविषये विप्रेभिः विप्रैः मेधाविभिः कविभिः आसया मुखेन अकारि कृतः इत्यर्थः।] तत् जम्बूद्वीपवासिन ऋषयः मन्त्रद्रष्टार आसन्। न केवलम् ऋषय एव मन्त्रद्रष्टार आसन्। परं भूपतयोऽपि बहून् मन्त्रान् ददृशुः। तथा औशीनरो भूपतिः शिविर्नाम, काशीराजः प्रतर्दनो नाम, रोहिदश्वतनुजो वसुमनाश्च, राजर्षिः सुदासश्च, महाराजः पृथुरपि सर्वे मन्त्रद्रष्टारो बभूवुः। तथा च न केवलं भूपाला एव मन्त्रद्रष्टार आसन् परं पारशवौ कक्षीवत्-कवषौ शूद्रावपि मन्त्रद्रष्टारौ बभूवतुः। तथा च सामवेदे—"सोमानं स्वरणं कृणुहि ब्रह्मणस्पते कक्षीवन्तं य औशिजः" इति (I. 18. 1.) [हे ब्रह्मणस्पते, त्वं सोमानं सोमरसस्य अभिषवकर्त्तारं यज्ञानुष्ठातारं मां कक्षीवन्तं स्वरणं देवलोके प्रकाशवन्तं सुविदितं कृणुहि कुरु। यः कक्षीवान् अहम् औशिजः उशिजः दास्याः पुत्रः अस्मि इत्यर्थः।] दीर्घतमसः पुत्रेषु शूद्रायां जातेषु कक्षीवदादिषु ब्राह्मण्यदर्शनात्" इति महाभारत-टीकायां नीलकण्ठपादाः।

ब्राह्मण-शूद्राप्रभवाः पारशवाः जन्मतः शूद्रा एव,परं मनुवचनाद् बौधायन-वचनाच्च कक्षीवदादयः श्रेयस्तया ब्राह्मण्यं गताः। तथा च "अयं कक्षीवतो महो वि वो मदे मतिं विप्रस्य वर्द्धयद् विवक्षसे॥" इति दशममण्डले पञ्चविंशतितमसूक्ते दशमी ऋक्। [अयं सोमः कक्षीवतः ऋषेः महः महतः विप्रस्य मतिं प्रज्ञां वर्द्धयत् अवर्द्धयत् इति सायणपादाः] तथा च "कक्षीवते शतहिमाय गोनाम्" इति नवमे मण्डले चतुःसप्ततितमे सूक्ते अष्टमी ऋक्। [शतहिमाय बहुगमनाय कक्षीवते स्तोत्रकारिणे ऋषये इति सायणपादाः।] तथा च "अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः" इति चतुर्थे मण्डले षड्विंशतितमे सूक्ते प्रथमा ऋक्। कवषनामा पारशव इलूषपुत्रश्च मन्त्रद्रष्टा बभूव। "प्र सु ग्मंता धियमानस्य सक्षणि" "प्रावेपा मा बृहतो मादयन्ति"—इति दशममण्डले द्वात्रिंशत्तमं सूक्तम् आरभ्य चतुस्त्रिंशत्तमसूक्तान्तं यावत् ऐलूषः कवष एव ऋषिः विश्वे देवाः देवताः। तथा च "अधश्रुतं कवषं वृद्धम् अप्स्वनु द्रुह्युं नि वृणग् वज्रबाहुः" इति सप्तमे मण्डले अष्टादशतमे सूक्ते द्वादशी ऋक्। अयं कवष इन्द्रेण सलिलमध्ये निक्षिप्तो बभूव।

न केवलं द्यावापृथिव्योः विप्रपारशवादयो मन्त्रद्रष्टारो बभूवुः परं पार्थिव्यो विदुष्यो जगल्ललामभूता नार्योऽपि वेदमन्त्रद्रष्ट्र्य आसन्। "शश्वती नार्यभिचक्ष्या ह सुभद्रम् अर्यभोजनं बिभर्षि।" इति अष्टमे मण्डले प्रथमे सूक्ते चतुस्त्रिंशत्तमी ऋक्। [शश्वती नाम अङ्गिरसः सुता असङ्गस्य भार्या इति सायणपादाः।] प्लयोगाभिधानस्य नृपतेस्तनुजः असङ्गाख्यो भूपतिः कदाचित् देवशापेन नपुंसकत्वम् अगमत्। अथ तस्य पत्नी महर्षेरङ्गिरसस्तनुजा साध्वी विदुषी शश्वती भर्तुर्व्याधिना खिन्ना सुमहत् तपस्तेपे। तेन तपसाऽसौ पुनः पुंस्त्वम् अवाप। ततः प्राप्त-पुंव्यञ्जनं तं रात्रावुपलभ्य प्रीता पतिप्राणा शश्वती चतुस्त्रिंशत्तम्या ऋचा तम् अस्तौत् इति सायणपादाः। तथा च "स्त्री हि ब्रह्मा बभूविथ।" अत्राहुः सायणपादाः—"हे शश्वति, त्वं स्त्री सती ब्रह्मा ब्रह्मवादिनी बभूविथ"

इति। तथा च महर्षेः अत्रेस्तनुजा विदुषी अपाला त्वग्दोषपरिहाराय सूक्तेन देवेन्द्रं स्तुतवती येन सा रोगमुक्ता सूर्यत्वक् जाता। 'अपाला ब्रह्मवादिनी" इति सायणपादाः। तथा च "खे रथस्य खेऽनसः खे युगस्य शतक्रतो। अपालाम् इन्द्र त्रिष्पूत् व्यकृणोः सूर्यत्वचम्॥" इति अष्टमे मण्डले एकनवतितमे सूक्ते सप्तमी ऋक्। तथा च महर्षेः भरद्वाजस्य सुतया रात्र्याख्यया "रात्री व्यख्यद् आयती पुरुत्रा देव्यक्षभिः। विश्वा अधि श्रियोऽधित॥" इति दशमे मण्डले सप्तविंशत्यधिकशततमे सूक्ते प्रथमा ऋग् ददृशे। तथा च ब्रह्मवादिनी कक्षीवतो दुहिता पारशवी घोषा 'घोषायै चित् पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तं॥" इति प्रथमे मण्डले सप्तदशाधिके शततमे सूक्ते सप्तमी ऋक्। तथा च "युवां ह घोषा पर्यश्विना यती राज्ञ ऊचे दुहिता पृच्छे वां नरा।" इति दशमे मण्डले चत्वारिंशत्तमे सूक्ते पञ्चमी ऋक्। एताभ्याम् ऋग्भ्यां घोषा ब्रह्मवादिनी मन्त्रद्रष्ट्री आसीत् इति सम्यक् ज्ञायते। तत् सर्वथा वेदमन्त्रा देव-मानुष-पारशवैः पुम्भिर्नारीभिश्च दृष्टा इति साधु गम्यते। एवं पथ्या स्वस्तिः पथ्या रेवती श्रुतकीर्त्तिः विश्ववारा। अन्याश्च बह्वयो ब्रह्मवादिन्यो मन्त्र-द्रष्ट्र्य आसन्। तथा च ऋग्वेदस्य व्याहृतिः भूः। यजुर्वेदस्य व्याहृतिः भुवर्लोकः, सामवेदस्य व्याहृतिः स्वर्लोकः इति। तथा चोक्तं कृष्णयजुषि "मनुष्यलोको वै ऋचः, देवलोको वै साम। देवलोकादेव अन्यम् अन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति।" इति।

---

# प्राप्तं पत्रम्

माननीय-संस्कृत-साहित्य-परिषत्-पत्रिकासम्पादकसमीपेषु —

महाभाग,

प्राचीनग्रन्थाञ्जातान्यालोचयता मया लब्धैषा रत्नमालाभिधाना पुस्तिका ; सा चैकस्यैव पत्रस्योभयतो लिखिता। पुष्पिकायाम्—"श्रीपशुपतिरचिता रत्नमाला समाप्ता—" इति कस्यचन पशुपतेर्नाम संदृश्यते। कस्तावदयं पशुपतिरासीत, कस्मिन् वा काले कतमो वा देशोऽलंकृतोऽनेन सत्कविना -- इति न किञ्चिदुपलब्धमस्माभिः।

"क्याटालोगास् क्याटालोगोराम्" नाम संस्कृतग्रन्थानां नामसंग्रहेऽस्या रत्नमालाया द्वे पुस्तके उल्लिखिते ; एकञ्चोल्लिखितं राजेन्द्रलालमित्रमहोदयैस्तत्-कृते विवरणग्रन्थे ; तेषां तु कस्यापि विमर्षणसौकर्यं न विद्यते। राजेन्द्र-लालमित्रमहाशयेन पुस्तकमेतन्मणिमुक्तादीनां परीक्षाविषयकम् इत्युक्तम् ; तदुक्तिनिर्भरपरायणेन "अफ्रेक्ट" महोदयेनापि तथैव भणितम्। वयन्त्वत्र श्लोकानां सौन्दर्यद्वारेण रत्नसादृश्यमपहाय द्वितीयं रत्नसम्पर्कं न पश्यामः।

परं श्लोकानां मधुरतया मनोज्ञतया चेयमन्वर्थनामिका रत्नमाला विदुषां विनोदाय प्रकाश्यमर्हतीति भवत्समीपमुपस्थाप्यते। हस्तलिपीनां दुर्बोधतया यथा यथा पठितं, तथैव प्रकाशितम् ; यत्र च न मे अर्थग्रहः, तत्र सन्देहचिह्नानि दत्तानि।

विनीतः

श्रीनित्यधनभट्टाचार्यः।

# रत्नमाला

का भूषा योषाणां,

किञ्च शिशोः कण्ठभूषणं भाति ?

निर्मलमुक्तामाला

पशुपतिरचिता + चातुरी वाचाम् ॥१॥

कः कुलकमलदिनेशः ?

सति गुणविभवेऽपि धीरो यः ।

कस्याहितं जगदेतत् ?

प्रियहितवचनस्य धर्मनिरतस्य ॥२॥

परधनहृदयहरा का ?

सत्कविता वेशवनिता च ।

कं न स्पृशति विपत्तिः ?

बुधजनवाक्यस्य सेवको यः ॥३॥

कस्मै स्पृहयति कमला ?

निरलसचित्ताय नीतिवित्ताय ।

त्यजति च कं सा सहसा ?

द्विजगुरुहरिनिन्दकञ्च सालस्यम् ॥४॥

किमगाधं जलधेरपि ?

खलचरितं शब्दविद्या च ।

क खलु विधेयो वासः ?

सज्जननिकटेऽथवा क्या (का) श्याम् ॥५॥

कः परिहार्यो देशः ?

पिशुनवृतो लुब्धभूपश्च ।

केनाशोच्यश्च पुरुषः ?

प्रणतकलत्रेण धीरपुत्रेण ॥६॥

इह परमः कः शोच्यः ?

सत्यपि विभवे न यो दाता ।

किं लघुताया मूलं ?

प्राकृतपुरुषेषु या याच्ञा ॥७॥

रामादपि कः शूरः ?

स्मरशरनिहतो न यश्चलति ।

किमहर्निशमनुचिन्त्यं ?

केशवचरणौ जगज्जलतौ (धौ) ॥८॥

के खलु नयनविहीनाः ?

परलोकं ये न पश्यन्ति ।

वद वद बधिरतमाः [के] ?

ये हितवचनं न शृण्वन्ति ॥९॥

कः प्रथिततरखञ्जः ?

व्रजति न यो वार्द्धके तीर्थम् ।

को मूकस्तु विदितः ?

प्रियवचनं यो न भाषते सदसि ॥१०॥

कः परिहार्यो रोगः ?

+ + + नाजिता नाम ।

को वा हस्तविहीनः ?

सम्पदि सत्यां यो न भुङ्क्ते ॥११॥

का च सभा परिहार्या ?

हीना वृद्धसचिवैर्या ।

किं गहनं भुजगादपि ?

स्त्रीचरितं राजसेवा च ॥१२॥

ब्रूहि स्पर्शमणिः कः ?

स्वभ्यस्ता निर्मला विद्या ।

विषविषमतमं किं ?

प्रच्छन्नं यत् कृतं पापम् ॥१३॥

नलिनीदल + + वत्तरलं किं ?

यौवन-मान-जीवनञ्च वित्तञ्च ।

प्राणादपि (?) को रक्ष्यः ?

+++ +++ ++ प्रवर्त्तयाः ॥१४॥

कस्तरति भवसमुद्रं ?

यस्य विषयैर्न रुध्यते चित्तम् ।

किं मुक्तिवल्लिमूलं ?

गङ्गानिवासो हरेः सेवा ॥१५॥

कः पण्डितः + + +

झटिति परेषां संशयच्छेदी ।

को +++ वंशमूलं ?

गुरुजननिन्दा ++++ ॥१६॥

किं धर्मनास (श) मूलं ?

परवनिता परधनाकाङ्क्षा ।

कुत्र न देयं चेतः ?

परनिन्दापरजनापवादेषु ॥१७॥

को धर्म + + नु सुदृढः ?

परजीवहेतु + + + + ।

कः सुकृती भुवि जीवति ?

यः खलु पश्चात् प्रशस्यते लोकैः ॥१८॥

मरणादपि किं दुःखं ?

पण्डितता + + मूर्खताबोधः ।

किं पण्डितेन कार्यं ?

मोहलताच्छेदनोद्योगः ॥१९॥

क: कामधेनुसदृशः ?
  निर्व्याजं सेवितो हि यः स्वामी ।
को नृपतिः सुखसेवी ?
  निर्लोभ [:] वृद्धसेवी च ॥२०॥
किं संसारे सारं ?
  गङ्गानङ्गारिसेवनं च परमम् ।
किं करणीयं द्रव्यं ?
  देयं विप्राय साधवे सततम् ॥२१॥
गुणहृदयं गमन + विमलसवर्णाऽनवद्याङ्गी ।
श्रीमत्पशुपतिरचिता सम्पूर्णा रत्नमालैषा ॥२२॥
इति पशुपतिरचिता रत्नमाला समाप्ता ॥

---

अस्या रत्नमालायाः केचन श्लोकाः सत्पद्यरत्नाकराख्यपुस्तके केनचिन्मुद्रापिता बभूवुः ( २८८ पृष्ठायां १५४६ श्लोकतः १५५६ श्लोकपर्य्यन्तम् ) ; ते च सुहृद्वरेण श्रीदुर्गामोहनभट्टाचार्येण प्रबन्धस्यैतस्य मुद्रणाय प्रेषणानन्तरं मद्गोचरतां नीताः । तेषु एकादशसु श्लोकद्वयं प्रस्तुतप्रबन्धे न दृश्यते ; नूतनाविति तौ श्लोकावत्र पादटीकायां सन्निवेशितौ । शिष्टानां च बहुशः पाठभेदः परिलक्ष्यते ; यैश्च पाठभेदैः प्रबन्धान्तर्गतानां श्लोकानां पाठार्थयोरुत्कर्षो भवति, त एव मया तत्तत्स्थलेषु भ्रमशोधनवेलायां प्रबन्धेऽन्तर्गृहीताः । तस्य च श्लोकसमूहस्य शिरसि "अथ पशुपतिविरचितरत्नमालायाः" इति नामोपलभ्यते ।

इति लेखकः ।

अतिरिक्तश्लोकौ—

कस्य सहायः सुदृढो ?
  निष्कपटेनार्जितो धर्मः ।
इह को नरकनिवासी ?
  न विनीता यस्य दृश्यते भार्या ॥
किं स्त्रीविनाशमूलं ?
  स्वातन्त्र्यं वित्तबहुलता च ।
को निष्कारणवैरी ?
  पापार्थं यः प्रवर्त्तयति ॥

# समालोचनम्

**सांख्यकारिकाः सगौडपादभाष्याः ।** विद्यासुधाकर-बिरुदविभूषितेन डाक्तार-हरदत्तशर्मणा विस्तृतोपोद्घातपाठान्तरटिप्पण्यादिभिः समलङ्कताः । पुण्यपत्तनस्थ-ओरियेण्टाल् बुक् एजेन्सी-संस्थातः डाक्तार-एन् जी सर्देशाइमहोदयेन प्रकाशिताः (Dr. N. G. Sardesai, Oriental Book Agency, 15 Shukrawar Peth, Poona). मूल्यं सपादरूप्यकमात्रम् ।

कियद् वा प्रशंसामः श्लाघनीयतमं समुद्यमं सर्देशाइमहाभागस्य, येन सर्वथाऽविगणय्य लाभालाभौ प्रायेण प्रतिमासमेव नवनवानि विबुधजन-मनोऽभिरामाणि पुस्तकशतानि प्रकाश्याधमर्णपक्षे निक्षिप्यन्ते विद्यार्थिनश्चा-ध्यापकाश्च । यद्यपि सगौडपादभाष्याः सांख्यकारिकाः पूर्वं बहुशो मुद्रापिता बहुभिस्तथाऽप्यभिनवमिदं मुद्रणं किमपि वैशिष्ट्यमवगाहते । अत्र प्रथमतस्तावत् चत्वारिंशत्पृष्ठव्यापिनि सुविस्तृते उपोद्घाते सांख्यशास्त्र-मधिकृत्य विविधविषयाः सुनिपुणं विचारिताः । वेदपुराणेतिहासेषु यत्र यत्र सांख्यदर्शनस्य बीजमुपलभ्यते तेषां सर्वेषां निर्देशः कृतः । कपिला-सुरिपञ्चशिखविन्ध्यवासवार्षगण्यजैगीषव्यवोढुदेवलसनकादीनां सांख्या-चार्याणां वृत्तान्ताः प्रामाणिकपुस्तकेभ्यः संगृह्य मनोहरया भङ्ग्या समुपवर्णिताः । ततश्च उपलभ्यमानानुपलभ्यमानानां सांख्यप्रकरणग्रन्थानां विवरणं प्रदत्तम् । ततश्च सांख्यदर्शनविषयकग्रन्थकृतां ग्रन्थानां च नामानि सन्निविष्टानि । अन्ते च सरलया सुबोधया च भाषया सांख्यदर्शनस्थूलार्थः प्रतिपादितः । उपोद्घातश्चायं विद्वद्वर्यस्य श्रीमतो हरदत्तशर्ममहोदयस्यानितरसाधारणं पाण्डित्यमवबोधयति । आशास्यते चेत ऊर्ध्वं प्रुफ्संशोधनविषये सविशेषमवदध्युः श्रीमन्तो हरदत्तशर्माणः, अन्यथा "सुकुमारनववधूरिव परपुरुषदृष्ट्या यथा न पुनः परपुरुषसमक्षमेति," "एवं तत्त्वतो विवेकेनैत-

न्निर्गलितं यन्मुक्तसङ्ग अकर्त्तरि पुरुष" ( उपोद्घातः पृः ४० ) इत्येवमादीनां दर्शनेन विमनायेरन् विशेषज्ञाः।

अस्मद्देशमुद्रितेषु पुस्तकेषु प्रायेण सर्वत्रैव मकारस्य स्थानेऽनुस्वारो मुद्र्यते, एतत्त्वतिमात्रमयुक्तम्, स्वरवर्णात् पूर्ववर्त्तिनो मकारस्यानुस्वारविधानं सर्वथा प्रामादिकमेव। अवश्यमत्रावधेयं सर्देशाइमहाभागेन।

रङ्गस्य दर्शयित्वा निवर्तते नर्त्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्त्तते प्रकृतिः॥

इति कारिकाया भाष्यमेवं मुद्रितम्—"यथा नर्तकी शृङ्गारादिरसैः इतिहासादिभावैश्च" इत्यादि। अत्र हरदत्तशर्ममहोदयेन पादटीकायां विलिखितम् "पाठोऽयं भ्रान्त इवाभाति। 'विलासादिभावैश्च' इति पठनीयम्?" विल्सनमहोदयानुवादस्तु in situations drawn from history or from tradition नातिमनोरमः। विलासलक्षणं च भावप्रकाशने, पृष्ठे (?) ६·७ पङ्क्त्योः

प्रियसङ्गमकाले तु नेत्रभ्रूवक्त्रकर्मणाम्।
विशेषो यः स विज्ञेयो विलासोऽङ्गक्रियादिषु॥" इति।

अस्मभ्यं तु नैव विल्सन्-महोदयस्य व्याख्यानं नापि वा हरदत्तशर्ममहोदयस्य पाठान्तरं रोचते। अत्र "रतिहासादिभावैश्च" इति स्वारसिकः पाठ इति व्यक्तमेव विदुषाम्। स च पाठः सम्यग् लगतीति किं शिरोवेष्टनपूर्वकनासिकाप्रदर्शनेन पाठान्तरकल्पनेन वा?

यद्यप्येवं द्वित्रेषु स्थलेषु वर्तते ग्रन्थसम्पादकेन साकमस्माकं मतविभेदस्तथाऽपि पुस्तकस्यास्य परमोपादेयत्वमुपोद्घातस्य चाभिनवतथ्यसम्भारभासुरत्वं मुक्तकण्ठमुद्घोष्यतेऽस्माभिः। मुद्रणादिकमस्य मनोहारि मूल्यं चात्यल्पम्। अत एवावश्यं संग्राह्यमिदं पुस्तकं सामान्यतः सर्वैरेव संस्कृतभाषाभिज्ञैर्विशेषतश्च सांख्यरहस्यबुभुत्सुभिर्बालैः सांख्यशास्त्रमध्यापयद्भिश्च विपश्चिद्भिरिति शिवम्।

**वङ्गीयशब्दकोषः ।** प्रथमो भागः । ( प्रथमद्वितीयतृतीय-खण्डानि ) । बोलपुरस्थशान्तिनिकेतनात् श्रीमता हरिचरणवन्द्योपाध्याय-महोदयेन सङ्कलय्य प्रकाशितः । मूल्यं प्रतिखण्डमाणकाष्टकम् ।

महान् खल्वयं भागधेयोदयो वङ्गभाषाया यच्छ्रीमता हरिचरण-वन्द्योपाध्यायमहोदयेनादूरत्रिंशानि वर्षाण्यगणितशरीरपातं प्रयत्येदानीं वङ्गभाषाया अतिमात्रं हृदयङ्गमोऽयं शब्दकोषः खण्डशः प्रकाश्यते। अत्र वङ्गभाषागतानि पदानि, तन्मूलानि संस्कृतप्राकृतादिविविधभाषागतानि पदानि, तदनुरूपाणि च हिन्दीगुजरातीप्रभृतिभाषागतानि च पदानि प्रकृतिप्रत्ययप्रदर्शनपुरःसरं समस्तपदानां च विग्रहादिप्रदर्शनपूर्वकमुपन्यस्तानि । प्रतिपदं च प्रभूतान्युदाहरणान्युपप्रदर्शितानि, अर्थपरिवर्तनादीन्यपि निर्दिष्टानि । साम्प्रतं किल पण्डितोत्तंसैरपि विनिक्षिप्यते देशभाषासु प्रणयभरमन्थरं चक्षुः, प्रयत्यते च तासां तत्त्वावधारणे च समुन्नतये च। अत एवातिमात्रमेवोपकारकोऽयं ग्रन्थो वङ्गीयानां चावङ्गीयानां च भाषा-तत्त्वानुशीलनपराणां सर्वेषाम् । इतः पूर्वं नातिचिरं परलोकं प्रस्थितेन श्रीमता ज्ञानेन्द्रमोहनदासमहोदयेन समीचीनया प्रणाल्या विरचितमभिधानं वङ्गभाषायाः, तत्त्विदानीं निःशेषितमेव, प्रभूततरमूल्येनापि नाधिगम्यते। अयं पुनर्वङ्गीयशब्दकोषस्ततोऽपि विपुलतरः समीचीनतरश्च । तत्र प्रायेण देशभाषागतान्येव पदानि सन्निविष्टान्यासन् अत्र संस्कृतभाषागताः शब्दाः देशभाषामयाश्चोभये एव सन्निविष्टाः । अहंपूर्विकया संग्राह्यतामिदं पुस्तकं वाचकमहाभागैः, नीयतां च साफल्यं प्रयत्नोऽयं विपश्चिच्चूडामणेः श्रीमतो हरिचरणवन्द्योपाध्यायस्येति शिवम् ।

## सप्रमोदमङ्गीकारः

जयपुरपत्तनतः प्रकाशितस्य संस्कृतरत्नाकराख्यस्य संस्कृतभाषामयस्य परमरमणीयस्य मासिकपत्रस्य प्राथमिकं खण्डत्रितयं यथाकालं समधिगत-मस्माभिः, संख्यान्तरेऽस्य समालोचना प्रकाशयिष्यते । बहुशस्तु वितीर्यन्ते

साधुवादाः श्रीमते सर्वतन्त्रस्वतन्त्रधिषणाय म. म. गिरिधरशर्ममहोदयाय येन विविधकार्यव्यापृतेनापि विषमतमेऽस्मिन् कर्मणि व्यापारित आत्मा।

## प्राप्तं पत्रद्वितयम्

( १ )

माननीयसंस्कृतसाहित्यपरिषत्सम्पादकमहोदयसमीपेषु—

मान्या महोदयाः,

व्यतीते सप्ताहे कस्यचन दाक्षिणात्यस्य दार्शनिकस्य भवने केनचन दाक्षिणात्येन विदुषा प्रवृत्तायां सङ्कथायां दैवदुर्विलसितेन मया 'कुत्रे'ति पदं समुच्चारितम्। तच्छ्रुत्वैव तेन पण्डितवर्येण समुद्दीपितामर्षेण सबाह्वास्फोटं समुद्घोषितं 'कुत्र'पदस्यापाणिनीयत्वम्। यद्यपि मया सहस्रशः कुत्रशब्दस्य प्रयोगाः समुपलब्धास्तथापि व्याकरणान्तरे कृतश्रमोऽस्मीति पाणिनेर्महर्षेर्मतं सावधारणं वक्तुं न प्रभवामि। भवन्तश्च सुतरां पाणिनितन्त्र-निष्णाताः, अतः कृपयाऽत्र तथ्यं प्रकटीकृत्यानुग्राह्यपक्षे स्थाप्यताम्—

श्रीराम-शर्मा।

( २ )

आर्या अभिरूपवर्याः, रघुवंशस्य षष्ठसर्गमधीयानस्य मे समुदितो मनसि गरीयान् संशयः, कृपया भवन्तस्तं छेत्तुमर्हन्ति। स च यथा—सुनन्दामुखेन स्वयंवरसभायां समुपस्थितानां नृपाणां वर्णनावसरे महाकविना अजव्यतिरिक्तानां नृपाणां व्यङ्ग्यमर्यादया दूषणमुद्घाटितं वा, येनेन्दुमत्या ते सर्वे प्रत्याख्याताः। इति

आश्रवः

श्रीरसिकलालघोषालः।

[ संख्यायामस्यां स्थानाभावाद् वारान्तरे प्रश्नद्वितयस्योत्तरं मुद्रापयिष्यते। वाचकेषु कैश्चित् समीचीनमुत्तरं प्रेष्यते चेत् सादरं प्रकाशयिष्यते। सं० सा० प० प० स० ]

// संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| July, 1933. | १८५५ शकीये आषाढे<br>१६श-वर्षस्य ३य-संख्या | Vol. XVI No. 3 |


सारोद्धारिणीसनाथ

## उत्तरमेघः

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥१॥

विद्युत्वन्तमिति ॥ आदिकुलकेन अलकावर्णनमाह ॥ हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनः न न ज्ञास्यसे अपि तु ज्ञास्यस्येव । तां काम् ? यत्र यस्याम् अलकायां प्रासादा धवलगृहाणि त्वां तुलयितुम् अलं समर्थाः भवन्तमनुकर्तुं समर्थाः । कैः ? तैस्तैर्विशेषैः अभिधीयमानसदृशधर्मैः । कथंभूतं त्वाम् ? विद्युत्वन्तम् । विद्युद्विद्यते यस्य असौ विद्युत्वान् तं सौदामिनी-युक्तम् । प्रासादाः कथंभूताः ? ललितवनिताः सविलाससुन्दरीकाः, ललिताः सविलासा विभ्रमसंयुक्ता वनिता येषु ते । कथंभूतं त्वाम् ? सेन्द्रचापम् इंद्रचापसंयुक्त............ । कथंभूताः प्रासादाः ? सचित्राः नानाविधा-

**सस्यश्यामा दिनकरहयस्पर्द्धिनो यत्र वाहाः**
**शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रमोदात् ।**
**योधाग्रण्यः प्रति दशमुखं संयुगे तस्थिवांसः**
**प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥ २ ॥**❀

लेख्याऽलंकृताः। कथंभूतं त्वाम् ? स्निग्धगम्भीरघोषम् अरूक्षधीरध्वनिम् । किंभूताः प्रासादाः ? प्रहतमुरजाः आस्फालितमृदङ्गाः । किमर्थम् ? संगीताय प्रेक्षणकाय । अपरं कथंभूतं त्वाम् ? अन्तस्तोयम् मध्ये जलपूर्णम् । अन्तर्मध्ये तोयमुदकं यस्य स तम् । कथंभूताः प्रासादाः ? मणिमयभुवः मणिः स्फटिक-स्तेन निर्मिता भुवो येषां ते तथोक्ताः । कथंभूतं त्वाम् ? तुङ्गम् उच्चैस्तरम् उन्नतम् । कथंभूताः प्रासादाः ? अभ्रंलिहाग्रा अभ्रंलिहानि आकाशस्पर्द्धीनि अग्राणि येषां ते तथोक्ताः । अस्यायमर्थः । पाथोद त्वम् आत्मीयधर्म-साधारणगुणाधारां तां कुबेरनगरीति जानीयाः । अत्रोपमा ॥ १ ॥

सस्यश्यामेत्यादि । हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनः न न ज्ञास्यसे अपि तु ज्ञास्यस्येव। तां काम्? यत्र यस्याम् अलकायां वाहा वर्तन्ते अश्वाः सन्ति । कथंभूता वाहाः ? सस्यश्यामाः हरितनीलाः। पत्रश्यामा इति पाठे, नागवल्लीदलवत् नीलाः । अत एव कथंभूताः ? दिनकरहयस्पर्द्धिनः । सूर्यतुरगानुकारिणः । यत्र यस्यामलकायां करिणः सन्ति । किंभूताः करिणः ? शैलोदग्राः पर्वतोन्नताः । अपरं कथंभूताः ? प्रमोदाद् मदाद् वृष्टिमंतो मदजलस्राविणः । उपमीयन्ते । क इव ? त्वमिव । यथा त्वं वृष्टिमानसि । तथा चोक्तम्—

न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ [दण्डी २।५१] ॥

इति । यत्र यस्यामलकायां योधाग्रण्यो वर्तन्ते । कथंभूताः ? संयुगे संग्रामे दशमुखं

---

❀ मुद्रितपुस्तकेषु श्लोकोऽयं पूर्वमेघे दृश्यते ।

**आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै-**
**र्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।**
**नाप्यन्यस्मात् प्रणयकलहाद्विप्रयोगोपपत्ति-**
**र्वित्तेशानां नच खलु वयो यौवनादन्यदस्ति ॥३॥**

**यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि**
**ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।**

रावणं प्रति तस्थिवांसः सम्मुखाः पलायनरहिताः । अत एव कथंभूताः ? प्रत्यादिष्टाभरणरुचयः निराकृतमण्डनदीधितयः निर्जितालङ्कारश्रियः; प्रत्यादिष्टा आभरणानां रुचिर्यैस्ते । कैः ? चन्द्रहासव्रणाङ्कैः चन्द्रहासो रावणासिस्तस्य व्रणाः तेषाम् अङ्कानि चिह्नानि तैः ॥ २ ॥

आनन्दोत्थमिति । हे मेघ त्वं ताम् अलकां दृष्ट्वा पुनः न न ज्ञास्यसे अपि तु ज्ञास्यसे एव । तां काम् ? यत्र यस्याम् अलकायाम् । वित्तेशानां गुह्यकानां नयनसलिलं वर्त्तते नेत्रजलमस्ति । किंभूतं नयनसलिलम् ? आनन्दोत्थं हर्षोत्पन्नं न पुनरन्यैर्निमित्तैः शोकदुःखेष्टवियोगादिभिः कारणैर्जनितम् । यत्र यस्याम् अलकायां कुसुमशरजात् कन्दर्पोद्भूतात् तापात् अन्यस्तापो नास्ति अन्यो निदाघो नास्ति । न पुनर्व्याधिदारिद्र्यादि-जनितः । कथंभूतात् कुसुमशरजात् तापात् ? इष्टसंयोगसाध्यात् अभीष्ट-समागमप्रतिकार्यात् । इष्टेन सह संयोग इष्टसंयोगः इष्टसंयोगेन साध्यते प्रतिकार्यते इष्टसंयोगसाध्यः तस्मात् । यत्र यस्याम् अलकायां प्रणयकलहात् प्रीतिकलहं विना अन्यत्र विप्रयोगोपपत्तिर्नास्ति । वियोग-घटनाऽपि न विद्यते न पुनर्दुश्चरणदेशान्तरजनितः । अपिः समुच्चये । यत्र यस्याम् अलकायां खलु निश्चयेन यौवनात् अन्यद् वयो नास्ति अवस्था न विद्यते न पुनर्वृद्धत्वलक्षणं वयोऽस्ति ॥ ३ ॥

यस्यां यक्षा इत्यादि । हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनः

**आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं**
**त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥४॥**

**गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः**
**पत्रच्छेद्यैः कनककमलैः कर्णविस्रंसिभिश्च ।**

न न ज्ञास्यसे। अपि तु ज्ञास्यसे एव। तां काम्? यत्र यस्याम् अलकायां यक्षा गुह्यका मधु आसेवन्ते उपभुञ्जते समन्तात् आस्वादयन्ति। किंभूतं मधु? रतिफलम् रतिरेकान्तक्रीडैव फलं यस्य तत्। सुरतकेलिकार्यं न तु कलहादिजनकम्। अपरं कथंभूतं मधु? कल्पवृक्षप्रसूतं कल्पवृक्षोत्पन्नम्। कल्पवृक्षात् सूप्रतं प्रसूतिः उत्पत्तिर्यस्य तत्। केषु सत्सु? पुष्करेषु मृदङ्गेषु आहतेषु सत्सु आस्फालितेषु सत्सु। कथम्? शनकैः मन्दं मन्दं शृङ्गाराङ्गत्वात् पानगोष्ठ्यां कठोरवादित्रं नोपभु[यु]ज्यते इति भावः। कथंभूतेषु पुष्करेषु? त्वद्गम्भीरध्वनिषु तव इव गम्भीरो ध्वनिर्येषां ते त्वद्गम्भीरध्वनयः तेषु। कथंभूता यक्षाः? उत्तमाः प्रधानाः स्त्रियो नार्यः सहायाः सहगामिन्यो येषां ते वरसुन्दरीसहिताः। किं कृत्वा? हर्म्यस्थलान्येत्य। हर्म्याणि धवलगृहाणि तेषां स्थलानि उपरितनभूमीः प्राप्य। कथंभूतानि हर्म्यस्थलानि? सितमणिमयानि स्फटिकघटितानि। अपरं कथंभूतानि? ज्योतिश्छायाकुसुमरचितानि नक्षत्रप्रतिबिम्बपुष्पप्रकराणि। ज्योतिषां नक्षत्राणां छाया प्रतिबिम्बं सैव कुसुमरचना येषु तानि। अत्रोदात्तम्॥ ४॥

गत्युत्कम्पादलकपतितैरित्यादिधर्मान्तरन्यासेन तामेव नगरीं निवेदयन्नाह। हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनर्न न ज्ञास्यसे अपि तु ज्ञास्यसे एव। तां काम्? यत्र यस्याम् अलकायां कामिनीनां शृङ्गारिणीनाम् अभिसारिकाणां स्त्रीणां मार्गो जनेन एभिरभिधीयमानपदार्थैः सूच्यते ऊह्यते ज्ञायते। कदा? सवितुरुदये सूर्योद्गमने। को मार्गः? नैशः निशायां भवो नैशः। एभिः कैः? मन्दारपुष्पैः।

**मुक्तालग्नस्तनपरिमलैश्छिन्नसूत्रैश्च हारै-**
**र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥५॥**

देवद्रुमकुसुमैः। कथंभूतैः ? अलकपतितैः कुटिलकेशविच्युतैः। अलकात्पतितानि अलकपतितानि तैः। कस्मात् ? गत्युत्कम्पात्। गतिः गमनं तया उत् प्राबल्येन कम्पश्चलनं तस्मात्, अतनुजघनभराक्रान्ततया घनतरतिमिरतिरस्कृतमार्गान्तरालसरभसचरणसंजातत्वाच्छरीरप्रकम्पादित्यर्थः। गत्युत्कम्पादिति पदं सर्वत्र योजनीयम्। न केवलं मन्दारपुष्पैः पत्रच्छेद्यैश्च पत्राणां दलानां छेदं खण्डनम् अर्हन्तीति पत्रच्छेद्यानि तैः। छेद्यं छेदनीयं पत्रलतादि। "पत्रच्छेदै"रिति पाठान्तरे पत्राणां छेदो भंगो येषु तानि तैः नागवल्लीदलशकलैः। न केवलं पत्रच्छेद्यैः कनककमलैः सुवर्णपद्मैश्च। कथंभूतैः कनककमलैः ? कर्णविस्रंसिभिः श्रवणपरिभ्रष्टैः कर्णाभ्यां विस्रंसन्त इत्येवंशीलानि तानि कर्णविस्रंसीनि तैः। न केवलं कनककमलैः हारैश्च। किंभूतैः हारैः ? मुक्तालग्नस्तनपरिमलैः मुक्तासु मौक्तिकेषु लग्नः सम्बद्धः स्तनयोः परिमलो मलयजादीनाम् आमोदो येषु ते मुक्तालग्नस्तनपरिमलास्तैः। पुनः कथंभूतैर्हारैः ? छिन्नसूत्रैः छिन्नानि द्विधाभूतानि सूत्राणि गुणा येषां ते तैः। अथवा समस्तं—मुक्तासु लग्नो योऽसौ स्तनपरिमलः कुचसम्मर्दस्तेन छिन्नानि सूत्राणि येषां तैः। कठिनस्तनतटसंघट्टत्रुटिततन्तुभिरित्यर्थः। अथवा मुक्ताजालैः मुक्तानां जालानि वृन्दानि येषु ते तैः। पूर्वं स्तनेषु परिसरन्ति स्तनपरिसराः पश्चात् छिन्नसूत्राश्च ये तैः। छिन्नानि द्विधाभूतानि सूत्राणि गुणा येषां ते तैः। अनेकनिपतितमुक्ताहाराद्यलङ्कारदर्शनेन कामुकनिकेतनगमनाभियुक्तकामिनीजनसञ्चरणसरणिः प्रातर्लोकैरनुमीयत इति भावः। "मुक्तालग्नस्तनपरिमलच्छिन्नसूत्रैश्च हारैः" पाठः। "मुक्ताजालैस्तनपरिसरच्छिन्नसूत्रैश्च हारैः" इति पाठान्तरम्। अत्रानुमानम् ॥ ५ ॥

नीवीबन्धोच्छ्वसितशिथिलं यत्र यक्षाङ्गनानां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणश्चूर्णमुष्टिः ॥६॥

नीवीबन्धोच्छ्वसितशिथिलमित्यादि । तामेव पुरीं लक्षणान्तरेण प्रबोधयन्नाह ॥ हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनर्न न ज्ञास्यसे अपि तु ज्ञास्यसे एव । तां काम्? यत्र यस्याम् अलकायां यक्षाङ्गनानां गुह्यकस्त्रीणां चूर्णमुष्टिः विफलप्रेरणो भवति निष्फलक्षेपो जायते । विफलं प्रद्योताप्रशमनान् निरर्थकं प्रेरणं क्षेपो यस्य स तथोक्तः। चूर्णः पटवासाद्युपकल्पितश्चन्दनादिद्रव्यक्षोदः तेन विशिष्टो मुष्टिश्चूर्णमुष्टिः । मुष्टिः सङ्कुचिताखिलाङ्गुलीकः करः । कदाचिदसौ अन्यतः पतितः स्यादित्याह किं कृत्वा ? रत्नप्रदीपान् अर्चिस्तुङ्गान् महाद्युतीन् अर्चिषा तेजसा तुङ्गान् महीयसः। ननु रत्नप्रदीपानामविनश्वरत्वं जानन्त्येव ताः, तत्कथं दीपशान्तये चूर्णमुष्टीन् क्षिपन्तीत्याह कथंभूतानां यक्षाङ्गनानाम् ? ह्रीमूढानां लज्जानष्टबुद्धीनां प्रकाशप्रशमोपायमजानतीनाम्। केषु सत्सु ? प्रियेषु वल्लभेषु क्षौमं दुकूलम् आक्षिपत्सु आकर्षत्सु सत्सु। कथंभूतं क्षौमम् ? नीवीबन्धोच्छ्वसितशिथिलं नीवी परिधानांशुकग्रन्थिः तस्याः बन्धः तस्य उच्छ्वसितं विकाशस्तेन शिथिलं शिथिलीभूतम् अगाढम्। कथंभूतेषु प्रियेषु ? अनिभृतकरेषु अनिभृताः अनिर्वाराश्चञ्चलाः कराः येषां ते। कस्मात् ? रागात् कामोत्पत्तिवशात्। उद्गाढरिरंसातः। अत्र रसवदुदात्तभ्रान्तीनां सङ्करो नामालंकारः।

"अर्थविशेषं पश्यन्नवगच्छेदन्यमेव तत्सदृशम् ।
निःसंदिग्धं यत्र प्रतिपत्ता भ्रान्तिमान स इति ॥" [ रूद्रट ८।८७ ]

**हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं**
**नीता रोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।**
**चूडापाशे नवकुरुवकं चारु कर्णे शिरीषं**
**सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥७॥**

हस्ते लीलाकमलमलकमित्यादि । तस्याभिज्ञानान्तरं निरूपयन्नाह—हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनः न न ज्ञास्यसे अपि तु ज्ञास्यसे एव । तां काम् ? यत्र यस्याम् अलकायां वधूनां नायिकानां हस्ते लीलाकमलं वर्त्तते । लीलार्थे(?)कमलं क्रीडासरोजं केलिकोकनदमस्ति । न केवलं लीलाकमलम् अलकं च विद्यते कुटिलकेशानां चयोऽस्ति । कथंभूतम् अलकम् ? बालकुन्दानुविद्धम् । बालं यत् कुन्दं कुन्दकुसुमं तद्, बालकुन्देन अनुविद्धं मिश्रं बालकुन्दानुविद्धं न केवलम् अलकं विद्यते । यत्र यस्याम् अलकायां वधूनां नायिकानाम् आननश्रीः मुखशोभा पाण्डुतां नीता । वधूनां वदनशोभा गौरत्वं प्रापिता । केन ? रोध्रप्रसवरजसा । रोध्रवृक्षपुष्पपरागेण । न केवलम् आननश्रीः पाण्डुतां नीता । यत्र यस्याम् अलकायाम् वधूनां नायिकानां चूडापाशे शिखासम्बन्धे धम्मिल्ले नवकुरुवकं वर्त्तते । नवं वकुलं वर्त्तते । नतु कनकमस्ति । न केवलं चूडापाशे नवकुरुवकं वर्त्तते, कर्णे शिरीषं च वर्त्तते शिरीषकुसुममस्ति । [कथंभूतं शिरीषकुसुमम् ? चारु मनोहरम् । न केवलं वधूनां कर्णे चारु शिरीषं वर्त्तते, सीमन्ते मस्तककेशवीथ्यां नीपं कदम्बकुसुमं वर्त्तते । ] कथंभूत नीपम् ? त्वदुपगमजं त्वदीयागमनोत्पन्नम् । अत्र कनकाद्याभरणभारपरिहारेण कुसुमालंकारधारणं नारीणां नागरिकत्वं प्रतिपादयति । धनपतिदिव्यानुभावतया तत्संनिधौ सर्वदा निखिलर्त्तुसंभवादेकस्मिन् काले कमलादिसकलकुसुमप्रसाधनं वधूनामुपपन्नमेव । अत्र दिव्यानुभावाच्चतुर्णामृतूनामेककालं संभव उक्तः। निसर्गसुकुमारशरीराणां च सुरसुन्दरीणां कनकरत्नमयाद्याभरणपरिहारेण पुष्पालङ्कारधारणमेव प्रायः प्रीतिनिबन्धनमिति । अत्रोदात्तम् ॥ ७ ॥

यस्यां मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरसना नित्यपद्मा नलिन्यः ।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥८॥
अक्षीणान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्द्धम् ।

यस्यां मत्तभ्रमरमुखराः इत्यादि ॥ हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनः न न ज्ञास्यसे अपि तु ज्ञास्यसे एव । तां काम् ? यस्याम् अलकायां पादपा वृक्षा नित्यपुष्पा वर्त्तन्ते सदा पुष्पिताः सन्ति । किंभूताः पादपाः ? मत्तभ्रमरमुखराः । मत्ताः समदा ये भ्रमरा द्विरेफाः तैर्मुखरा वाचालाः । न केवलं पादपाः, यत्र यस्याम् अलकायां नलिन्यः पद्मिन्यो नित्यपद्मा वर्त्तन्ते सदापद्माः सन्ति । कथंभूता नलिन्यः ? हंसश्रेणीरचितरसनाः चक्राङ्गपंक्तिस्थापितमेखलाः । न केवलं नलिन्यः, यत्र यस्याम् अलकायाम् । भवनशिखिनो मन्दिरमयूरा नित्य-भास्वत्कलापा वर्त्तन्ते । नित्यं सदा भास्वन्तो देदीप्यमानाः कलापा बर्हा येषां ते । सदा तेजोमयकलापधारिणः । कथंभूता भवनशिखिनः ? केकोत्कण्ठाः केकायाम् उत्कण्ठा येषां ते । न केवलं भवनशिखिनः, यत्र यस्याम् अलकायां प्रदोषा वर्त्तन्ते रात्रिप्रारम्भाः सन्ति । कथंभूताः प्रदोषाः ? नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः । नित्यम् अनवरतं ज्योत्स्नया चन्द्रिकया प्रतिहतास्तमिता नाशिता तमोवृत्तिः अन्धकारप्रवृत्तिस्तया रम्या मनोहरास्ते ॥ ८ ॥

अक्षीणान्तर्भवननिधय इति ॥ हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनर्न न ज्ञास्यसे । अपि तु ज्ञास्यसे एव । तां काम् ? यत्र यस्याम् अलकायां कामिनः शृङ्गारिणो यक्षा बहिरुपवनं निर्विशन्ति ।

वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया
बद्धापानं बहिरुपवनं कामिनो निर्विशन्ति ॥९॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां सलिलकणिकादोषमुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा जालमार्गै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥१०॥

बहिःप्रदेशाराममुपभुञ्जते । किंभूतं बहिरुपवनम्? वैभ्राजाख्यं वैभ्राज इति आख्या यस्य तत्। पुनः कथंभूतम्? बद्धापानं रचितपान-गोष्ठीकम्। कथंभूताः कामिनः? विबुधवनितावारमुख्यासहायाः। विबुध-वनिताः सुरसुन्दर्य एव वारमुख्या वारविलासिन्यः, ता एव सहाया येषां ते कलाकुशलाङ्गनासहिता वेश्यासहिता वा। कैः सार्द्धं निर्विशन्ति? किन्नरैः सार्द्धम् किम्पुरुषैः साकम्। किं कुर्वद्भिः किन्नरैः? धनपतियश उद्गायद्भिः कुबेरकीर्त्तिं गायमानैः कथं प्रत्यहम् अनुदिनं दिनं दिनं प्रति। कथंभूतैः किन्नरैः? रक्तकण्ठैः मधुरस्वरैः रक्तो रागजनकः कण्ठो येषां ते तैः। ननु प्रतिदिनमेवमर्थव्ययं कुर्वाणास्ते कथं प्रभवन्ति। कथंभूताः कामिनः? अक्षीणान्तर्भवननिधयः अक्षीणाः क्षयरहिताः अन्तर्भवने गृहाभ्यन्तरे निधयः शङ्खपद्ममहापद्मप्रभृतिका येषां ते॥ ९ ॥

नेत्रा नीता सततगतिना इति॥ अभिज्ञानान्तरं तस्या एव पुरो निरू-पयन्नाह। हे मेघ त्वं तामलकां दृष्ट्वोपलभ्य पुनर्न न ज्ञास्यसे अपि तु ज्ञास्यस एव। तां काम्? यत्र यस्यामलकायां त्वां दृष्ट्वा जलमुचो मेघा निष्पतन्ति निःसरन्ति निर्गच्छन्ति। कैः? जालैः गवाक्षविवरैः। ननु ते गृहाभ्यन्तरं कथं प्राप्ताः? सततगतिना पवनेन यद्विमानाग्रभूमीर्नीताः प्रापिताः। यस्या अलकाया विमानानि हर्म्याणि यद्विमानानि यद्वि-मानानाम् अग्रभूमयः यद्विमानाग्रभूमयः उपरितनावनीतलाः। कथंभूतेन

**मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-**
**र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।**
**अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः**
**संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥११॥**

सततगतिना ? नेत्रा प्रापकेण संचारकेण । अत एव कथंभूता जलमुचः ? जर्जराः खण्डीभूताः तत्सङ्घट्टस्फुटिताः । उत्प्रेक्षते कथंभूता इव । शङ्कास्पृष्टा इव भयचकिता इव भीतिस्पृष्टा इव । अस्माभिरभिवर्षद्भिरत्र चित्रं विसूत्रितमिति कृतापराधा विसंस्थूलाः पलायन्ते । शङ्कायां कारणमाह । किं कृत्वा ? सद्यस्तत्क्षणम् आलेख्यानां चित्रकाणां सलिलकणिकादोषम् उत्पाद्य । सलिलकणिका वर्षतोयविप्रुषः ताभिर्दोषः प्रणाशलक्षणस्तम् । पयःसंपर्केण हि चित्रं विप्लवते । ननु चित्रविनाशं विधाय पलायमानास्ते नागरिकैः कथं न बाध्यन्ते इति चेत्तत्राह । अपरं कथंभूता जलमुचः मेघाः ? धूमोद्गारानुकृतिनिपुणाः धूमस्य कालागुरुदाहजन्मन उद्गार उद्गमस्तस्यानुकृतिरनुकारस्तत्र निपुणा दक्षाः तद्रूपविभ्रमभाज इत्यर्थः । अत्रोपमोत्प्रेक्षयोः संसृष्टिः ॥ १० ॥

मन्दाकिन्या इति ॥ तस्याश्चिह्नान्तरं निरूपयन्नाह । हे मेघ त्वं तामलकां दृष्ट्वा उपलभ्य पुनर्न न ज्ञास्यसे, अपि तु ज्ञास्यसे एव । तां काम् ? यत्र यस्यामलकायां कन्याः कुमारिकाः मणिभिः संक्रीडन्ते । रत्नै रमन्ते । काः कन्याः ? अमरप्रार्थिताः देवैरभिलषिताः देवानामपि दुर्लभाः । कथंभूतैर्मणिभिः ? कनकसिकतामुष्टिनिक्षेपगूढैः । कनकस्य सिकता वालुका तस्या मुष्टिः संकुचिताङ्गुलीकः करः तस्य निक्षेपः प्रेरणं तेन गूढागुप्तास्तैः । अपरं कथंभूतैः ? अन्वेष्टव्यैः गवेषणीयैः कस्यां मुष्टौ मणयः सन्तीति ज्ञातव्यैः । कथंभूताः कन्याः ? मरुद्भिः सेव्यमानाः पवनैः निषेव्यमाणाः । कथंभूतैर्मरुद्भिः ? मन्दाकिन्या गङ्गायाः सलिलशिशिरैः

**यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्वासितानाम-**
**ङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।**
**त्वत्संरोधापगमविशदैः प्रेरिताश्चन्द्रपादै-**
**र्व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥१२॥**

तोयतुषारशीतलैः । अपरं कथंभूताः कन्याः ? वारितोष्णाः निषिद्धातपाः । कया ? छायया । केषाम् ? मन्दाराणाम् अमरतरूणाम् । कथंभूतानां मन्दाराणाम् । अनुतटरुहां तीरसमीपोद्गतानाम् । यद्यपि कन्याशब्दो नार्यां कुमार्यां च तथाऽप्यत्र बालिका एव गृह्यन्ते । प्रायस्ता एवेत्थं क्रीडन्तीति ॥११॥

यत्र स्त्रीणामिति ॥ तामेवालकां प्रकारान्तरेण ज्ञापयन्नाह । हे मेघ त्वं तामलकां दृष्ट्वा उपलभ्य पुनर्न न ज्ञास्यसे । अपि तु ज्ञास्यस्येव । तां काम् ? यत्र यस्यामलकायां चन्द्रकान्ता मणयः स्त्रीणामङ्गानां सुरतग्लानिं व्यालुम्पन्ति । शरीरखेदमपनयन्ति । कथंभूताश्चन्द्रकान्ताः ? स्फुटजललवस्यन्दिनः स्फुटाश्च ते जललवाश्च स्फुटजललवाः स्फुटजललवान् स्यन्दन्ते इत्येवंशीलाः ते । प्रकटोदबिन्दुस्राविणः । ननु चन्द्रकान्तास्तोयबिन्दून् कथं वमन्ति । यतः कथंभूताः ? चन्द्रपादैः प्रेरिताः चन्द्रकिरणैश्चोदिताः । कथंभूतैश्चन्द्रपादैः ? त्वत्संरोधापगमविशदैः भवदावरणाभावनिर्मलैः । ननु चन्द्रकान्ताः क विद्यन्ते इति तत्राह । कथंभूताश्चन्द्रकान्ताः तन्तुजालावलम्बाः । तन्तुजालेषु अवलम्बन्ते तन्तुजालावलम्बाः । 'यन्त्रजालावलम्बा' इति पाठे यन्त्राणि पुत्रिकाप्रभृतीनि तद्युक्तेषु जालेषु वातायनेषु अवलम्बन्ते ये ते तथोक्ताः । कथंभूतानां स्त्रीणाम् ? प्रियतमभुजालिङ्गनोच्छ्वासितानां प्रियतमस्य वल्लभस्य भुजालिङ्गनं बाहुपरिरम्भणं तेनोच्छ्वासितानां प्रबलश्वासभाजिनीनां पीडितानाम् । कथंभूताम् अङ्गग्लानिम् ? सुरतजनितां निधुवनोत्पादिताम् । एतदुक्तं भवति यत्र प्रतिरजनि रजनीकरनिकरसंपर्कतस्तुहिनतरपयोबिन्दुस्यन्दिसद्मानि कान्तारतिकेलि-

मत्वा देवं धनिपतिसखं यत्र साक्षान्मिषन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥१३॥

श्रमहारित्वमनोहराणि सा पुण्यजननगरीति पयोद वेदितव्या अत्रोदात्तम् ॥ १२ ॥

मत्वा देवं धनपतिसखमिति ॥ चिह्नान्तरेण तामेव पुरीं प्रस्तुवन्नाह । हे मेघ त्वं ताम् अलकां दृष्ट्वा उपलभ्य पुनर्न न ज्ञास्यसे । अपि तु ज्ञास्यस्येव । तां काम् ? यत्र यस्यामलकायां मन्मथः कन्दर्पः प्रायो बाहुल्येन चापं न वहति धनुर्न धारयति । कथंभूतं चापम । षट्पदज्यं षट्पदा भ्रमरा एव ज्या मौर्वी यस्य तत् भ्रमरश्रेणिप्रत्यञ्चम् । कस्मात् ? भयात् भीत्या । भये कारणमाह । किं कृत्वा ? धनपतिसखं महेश्वरं साक्षान्मूर्त्तिमन्तं मिषन्तं मत्वा ज्ञात्वा । ननु यदि मन्मथश्चापं न वहति तत्कथं तत्रत्यानां मिथुनानां परस्परं प्रीतिरुत्पद्यत इति चेत्तत्राह । अखाप्याशंकातरम्(?) । एवं तर्हि तत्रत्यस्य तरुण-जनस्य कन्दर्पचापव्यापारव्यतिरेकेण कथं रागप्ररोहः । कामः किल कामुकलोकं मधुकरमौर्वीकेण धनुषा वशीकरोति तदर्थमाह । तस्य कन्दर्पस्य आरम्भ उद्यमः सरसहृदयभेदलक्षणः चतुरवनितोविभ्रमैरेव विदग्धललनाविलासै-रेव सिद्धो निष्पन्नः । कथंभूतैर्विभ्रमैः ? सभ्रूभङ्गप्रहितनयनैः भ्रूभङ्गेण सह वर्त्तन्त इति सभ्रूभङ्गाः सभ्रूभङ्गैः प्रहितानि प्रस्थापितानि नेत्राणि येषु ते तथोक्ताः तैः । अत एव कथंभूतैः ? कामिलक्ष्येषु अमोघैः । कामिन एव लक्ष्याणि शरव्याणि तेषु अमोघैः कृतकार्यत्वात् सफलैः । अत्र भ्रूभङ्गाणां कार्मुकत्वम् असितचलविलोचनानां चिञ्चिरीकगुणत्वं विलोकनविलोकानां सायकत्वम् । एतेन तद्वासिविलासिनीनां प्रवीणत्वमुक्तम् । अत्रोत्प्रेक्षाप्रतीयमानरूपकयोः संसृष्टिः ॥ १३

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किशलयैर्भूषणानां विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्या-
मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥१४॥

तत्राऽऽगारं धनपतिगृहादुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योपान्ते कृतकतनयः कान्तया वर्द्धितो मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥१५॥

वासश्चित्रमिति ॥ हे मेघ त्वं तामलकां दृष्ट्वा उपलक्ष्य पुनर्न न ज्ञास्यसे। अपि तु ज्ञास्यस्येव। तां काम्? यत्र यस्यामलकायाम्। एकः कल्पवृक्षः सकलं समस्तम् अबलामण्डनं सूते। ललनामण्डनम् अलंकरणं जनयति। किं सूते इत्याह वासः सूते। वस्त्रं जनयति। कथंभूतं वासः? चित्रं नानावर्णम्। न केवलं वासः सूते। मधु सूते आसवं जनयति। कथंभूतं मधु? नयनयोर्विभ्रमादेशदक्षम् नेत्रयोर्नर्तनादीनाम् आदेशः तत्र दक्षं कुशलम्। न केवलं मधु सूते, पुष्पोद्भेदं सूते। भूषणानां विकल्पांश्च हारकेयूरकङ्कणादीनां विशेषांश्च। न केवलं भूषणानां विकल्पान् सूते। लाक्षारागं च अलक्तकं च सूते। कथंभूतं लाक्षारागम्? चरणकमलन्यासयोग्यं पादपद्मारोपणोचितम् ॥ १४ ॥

तत्राऽऽगारं धनपतिगृहादित्यादि ॥ इदानीम् अलकायामभिज्ञानपूर्वकं आत्मीयमागारं कथयन्नाह। हे मेघ तत्र तस्याम् अलकायाम् अस्मदीयम् आगारम् वर्त्तते मदीयं निशान्तमस्ति। किंभूतम्? धनपतिगृहाद् धनदमन्दिरात् उत्तरेण उत्तरदिग्भागेन विशेषितम्। इत्थंभूतलक्षणा तृतीया। धनपतिगृहादित्यत्र एनप्रत्ययाभावात् अद्वितीया।

**वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा**
**हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः।**
**यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं**
**न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥१६॥**

ननु तत्र प्रासादवित्तकानां बहूनि गृहाणि सन्ति। मया कथं ज्ञातव्यमिति चेत्तत्राह। कथंभूतमागारम्? दूराल्लक्ष्यम् विप्रकृष्टादपि ज्ञेयम्। केन? तोरणेन वन्दनमालया। कथंभूतेन तोरणेन? सुरपतिधनुश्चारुणा नानारत्नरचितत्वात् इन्द्रचापमनोहरेण। ननु तत्र समृद्धिमत्यां नगर्यां गृहे एवंविधानि तोरणानि भविष्यन्तीत्यभिधानान्तरमाह। यस्य गृहस्य उद्याने उपवने बालमन्दारवृक्षो वर्त्तते नूतनसुरतरुरस्ति। कथंभूतः? मे मम कान्तया वर्द्धितः पालितः। अपरं कथंभूतः? कृतकतनयः। कृत्रिमपुत्रः। अत एव कथंभूतः? हस्तप्राप्यस्तबकनमितः हस्तप्राप्या पाणिना ग्राह्या ये स्तबका गुच्छास्तैर्नमितो नम्रः करग्राह्यपुष्पगुच्छनम्रीभूतः। एतेनापरगृह-व्यावर्त्तकम् असाधारणं कर्म स्वधाम्नोऽभिधत्ते। अत्र स्वभावोक्तिः ॥ १५ ॥

वापी चास्मिन्निति ॥ इदानीं भूयोऽपि अभिज्ञानकथनव्याजेन निजा-वासं वर्णयन्नाह। हे मेघ न केवलं यस्य गृहस्य उद्याने बालमन्दारवृक्षो वर्त्तते। अस्मिन्नुद्याने वापी च विद्यते दीर्घिका वर्त्तते। कथंभूता वापी? मरकतशिलाबद्धसोपानमार्गा। मरकतशिलाभिः गारुत्मतदृषद्भि-राबद्धः खचितः सोपानमार्गः पदस्थानी(?)पन्था यत्र सा। अपरं कथंभूता वापी? विकचकमलैः छन्ना विकसितसरोजैराच्छादिता। कथंभूतैः विकचकमलैः? हैमैः सुवर्णमयैः हेम्नः सुवर्णस्य इमानि हैमानि तैः। अपरं कथंभूतैः विकचकमलैः? स्निग्धवैदूर्यनालैः। स्निग्धा अरूक्षा वैदूर्याणां रत्नविशेषाणां नाला दण्डा येषां ते तैः। अत एव यस्या वाप्यास्तोये कृत-वसतयो विहितावासा हंसा मानसं न ध्यास्यन्ति न स्मरिष्यन्ति। तर्हि

**तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः**
**क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।**
**मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण**
**प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥१७॥**

विप्रकृष्टं भविष्यति । कथंभूतं मानसम् ? सन्निकृष्टं समीपे नियतं निकटम् । तर्हि शरत्कालो भविष्यति । किं कृत्वा ? त्वामपि प्रेक्ष्य भवन्तमप्यवलोक्य । तर्हि कथं न स्मरिष्यन्ति ? कथंभूता हंसाः ? व्यपगतशुचः गतशोकाः । ननु किमिति व्यपगतशुचः ? यतो विद्युदलंकृतस्य मेघस्य नानावर्णकान्तिः समुत्पद्यते । ते च तत्रस्थाः सदैव स्थिता अनुभवन्ति । अतो घनानुकारि किंचित् रूपान्तरं भविष्यतीति मन्यमानानां तेषां मेघागमनशङ्का नास्ति । अत्रोदात्तम् ॥ १६ ॥

तस्यास्तीरे रचितशिखर इति ॥ विशेषान्तरेण तामेव वापीं निरूपयन्नाह । हे मेघ न केवलम् अस्मिन्नुद्याने एवंविधा वापी वर्त्तते । तस्या वाप्यास्तीरे क्रीडाशैलः क्रीडाशिलोच्चयो वर्त्तते । कथंभूतः क्रीडाशैलः ? रचितशिखरः निर्मितशृङ्गः । कैः ? इन्द्रनीलैः गारुत्मतरत्नैः । कथंभूतैः इन्द्रनीलैः ? मनोहरैः सुच्छायैः । अपरं कथंभूतः क्रीडाशैलः ? कनककदलीवेष्टनप्रेक्षणीयः कनककदल्यः शातकुम्भीयरम्भास्तासां वेष्टनं परिवेशस्तेन प्रेक्षणीयो रमणीयः । शातकुम्भरम्भावरणसादरमवलोकनीयः । कथम् इति ? इति कारणात् हे सखे हे मित्र अहं त्वां प्रेक्ष्य अवलोक्य तमेव क्रीडाशैलमेव स्मरामि । केन ? चेतसा मनसा । कथंभूतेन चेतसा ? कातरेण । विरहविसंस्थूलत्वादधीरेण । इति किम् ? कथंभूतः क्रीडाशैलः ? मद्गेहिन्याः प्रियः मम भार्यायाः वल्लभः । कथंभूतं त्वाम् ? उपान्तस्फुरिततडितं पर्यन्तोल्लसितविद्युतम् उपान्ते पर्यन्ते स्फुरिता उल्लसिता तडिद्विद्युत् यत्र तम् । "सदृशाध्ययनचित्ताद्याः(?)स्मृतिबीजस्य बोधकाः" इति । सादृश्यं चात्र

**रक्ताशोकश्चलकिशलयः केशरश्चात्र कान्तः**
**प्रत्यासन्नौ कुरुबकवृतेर्माधवीमण्डपस्य ।**
**एकः सख्या तव सह मया वामपादाभिलाषी**
**काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनाऽस्याः ॥१८॥**

तमालश्यामलत्विषस्तडिल्लतापिशंगवपुषः पयोदस्य दृश्यमानमरकतमणिमहः-श्यामलिम्ना संवट्टमानकनककदलीकपिलकान्तिरेखेण शिखरिणा साकं प्रतीयत एव। अत्र स्मरणं नामालंकरणम्। तथा च तल्लक्षणम्—

"वस्तुविशेषं दृष्ट्वा प्रतिपत्ता स्मरति यत्र तत्सदृशम्।
कालान्तरानुभूतं वस्त्वन्तरमित्यदः स्मरणम्। [रुद्रट ८।१०९] ॥१७॥

रक्ताशोकश्चलकिशलयं इति। तदेव गृहोद्यानं चिह्नान्तरेण निवेदयन्नाह। हे मेघ न केवलं तस्या वाप्यास्तीरे क्रीडाशैलोऽस्ति। यत्र यस्मिन्नुद्याने रक्ताशोकः कङ्केलिपादपो वर्त्तते। रक्तविशेषणं नीलव्यावर्त्तकम्। कथंभूतो रक्ताशोकः ? चलकिशलयः चञ्चलपल्लवः। न केवलं रक्ताशोकः केसरश्च वकुलश्च वर्त्तते। कथंभूतः केसरः ? कान्तो मनोहरः। द्वावपि कथंभूतौ ? प्रत्यासन्नौ निकटस्थौ। कस्य ? माधवीमण्डपस्य अतिमुक्तलताविटपस्य वासन्तीजनाश्रयस्य। कथंभूतस्य माधवीमण्डपस्य ? कुरुबकवृतेः कुरुबकाणां बाणवीरुधां कुरुबकाख्यलतानां वृतिर्वरणं यस्य तस्य। परं तयोर्द्वयोः रक्ताशोकबकुलयो-र्मध्ये एको रक्ताशोकः तव सख्या भ्रातृजायाया वामपादाऽभिलाषी वर्त्तते वामचरणप्रहारमभिलषति। अन्यो बकुलः अस्याः ते तव भ्रातृजायाया वदनमदिरां काङ्क्षति गण्डूषसुरामिच्छति। केन ? दोहदच्छद्मना दोहदव्या-जेन। कथम् ? मया सह मया साकम्। अहमपि सापराधः सन् अस्यास्ते तव सख्या भ्रातृजायायाः वामचरणप्रहारगण्डूषजले अभिलषामि। अशोकः किल स्त्रीपादप्रहारेणोल्लसति। बकुलः किल प्रमदावदनासवसेकेन

**तन्मध्ये च स्फटिकफलिका काञ्चनी वासयष्टि-**
**मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।**
**तालैः शिञ्जद्वलयसुभगैर्नर्त्तितः कान्तया मे**
**यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ १६ ॥**

कोरकभरभिन्नो भवति। तथा चोक्तम् "पादाहतः कुरुबकः कुरुते विकाशमालोकितस्तिलक उत्कलिको विभाति ॥" अत्र सहोक्तिर्नामाऽलङ्कृतिः।

तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रिते।
पदेनैकेन कथ्येते सा सहोक्तिर्मता सताम् ॥ [ भामह ३।३९* ]

दण्डी च [ २।३५१ ]—सहोक्तिः सहभावेन कथनं गुणकर्मणाम् ॥१८॥

तन्मध्ये च स्फटिकेति ॥ तदुद्यानं लक्षणान्तरेण लक्षयन्नाह ॥ हे मेघ न केवलमत्र अस्मिन्नुद्याने उपवने चैत्ररथे रक्ताशोकबकुलौ स्तः। तन्मध्ये तयोर्द्वयोः रक्ताशोकबकुलयोः मध्ये वासयष्टिश्च विद्यते क्रीडाबर्हिणो निवासार्थं दण्डोऽस्ति। कथंभूता वासयष्टिः ? काञ्चनी सुवर्णमयी। अपरं कथंभूता ? मूले मणिभिर्बद्धा रत्नैरचिता वेदिका। अपरं कथंभूता ? स्फटिकफलिका स्फटिकमणिमयी फलिका यस्यां सा स्फटिकासनपीठभूमिका। किंभूतैर्मणिभिः ? अनतिप्रौढवंशप्रकाशैः अनतिप्रौढा अनतिपक्वा ये वंशा वेणवस्ते अनतिप्रौढवंशाः। अनतिप्रौढवंशा इव प्रकाशा येषां ते अनतिप्रौढवंशप्रकाशास्तैर्वंशकन्दलानुकारिप्रभापटलैर्मरकतै-रित्यर्थः। सा का ? यां वासयष्टिं दिवसविगमे सन्ध्याकाले नीलकण्ठोऽध्यास्ते मयूर आश्रयति। को नीलकण्ठः ? वो युष्माकं सुहृत मित्रम्। कथंभूतो नीलकण्ठः ? मे मम कान्तया नर्त्तितः मद्गेहिन्या नृत्यं कारितः। नर्तितः कैः ? तालैः (?) चञ्चुपुटादिभिः अथ करतलास्फालनवाद्यैः। किंभूतैस्तालैः ?

---

* मुद्रितभामहकाव्यलङ्कारे पुनरन्यविधः पाठ उपलभ्यते।

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ २० ॥

शिञ्जद्वलयसुभगैः शब्दायमानकङ्कणरमणीयैः। शिञ्जन्ति शब्दायमानानि वलयानि मणिमयानि कटकानि तैः सुभगैर्मनोहरैः । शिङ्क्त इति अच् । शिञ्ज इवाचरति इत्यायिलोपे परस्मैपदम् । ननु शिञ्जतेरात्मनेपदित्वात् आनशा भवितव्यं अतः शिञ्जदित्यसाधु पदम् । अत्र समाधीयते । शिजि अव्यक्ते शब्दे । अत एव शिङ्क्ते पचादित्वात् अच् । स इवाचरतीत्यायिलोपे सति परस्मैपदं शिञ्जतीति वर्त्तमाने शन्तृङ् । सभ्रूभङ्गैः करतललयैर्नर्त्तित इति पाठान्तरे अत्र करतलयोर्लयास्तैः। हस्तद्वयाघातस्तालस्तदन्तरे विश्रामः कालः ताल कालयोरन्तरे लयः समुत्पद्यते, स च द्रुतविलम्बितमध्यभेदात्त्रिधा तैर्नर्तितः।" एतेनोत्तम-विभवभ्राजिष्णुभिर्लक्षणैर्यक्षान्तरमन्दिरादन्यादृशसन्निवेशमस्मद्वेश्म अम्भोधर बुध्यस्वेत्यभिहितं भवति । अत्र विभवोक्तिः ॥ १६ ॥

एभिः साधो हृदयनिहितैरिति ॥ निजभवनस्य भूयः सविशेषचिह्नमुपदिशन्नाह । हे साधो हे शुद्धाशय त्वं भवनं लक्षयेथाः मदीयमागारं जानीथाः । कैः ? एभिः पूर्वोक्तैः तोरणादिभिर्वासयष्टिपर्यन्तैर्लक्षणैः अभिज्ञानैः । किंभूतैर्लक्षयेथाः ? शङ्खपद्मौ च दृष्ट्वा निधिविशेषौ चालोक्य । चशब्दश्चिह्नसमुच्चये । कथंभूतौ शङ्खपद्मौ ? लिखितवपुषौ स्थापितमूर्त्ती । क ? द्वारोपान्ते । तौ हि अधोभागे पुरुषरूपौ गृहद्वारशाखासु मङ्गलार्थम् आलिख्येते । ननु सांप्रतं निशान्तं विछायं मद्वियोगदुःखात् दृष्ट्वा पयोदो माम् अनृतवादिनं मंस्यते इत्यत्राह । हे सखे हे मित्र नूनमिति वितर्कयामि एवं सम्भावयामि अधुना साम्प्रतं भवनं गृहं मद्वियोगेन मम विरहेण क्षामच्छायं वर्त्तते गतकान्ति अस्ति क्षीणशोभं वर्त्तते । कथमेतद्विज्ञायते मद्भवनं मद्वियोगदुःखाद् गततेजोऽस्ति ? खलु यस्मात्कार-

**गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः**
**क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।**
**अर्हस्यन्तर्भवनपतितां कर्त्तुमल्पाल्पभासं**
**खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ २१ ॥**

णात् कमलं पद्मं स्वाम् अभिख्यां न पुष्यति निजां कान्तिं न धारयति। क्व सति ? सूर्यापाये सति भास्करस्याभावे सति। अपायो विपत् स च प्रस्तावात् दुर्दिनम् अपरागो वा। तदभिभूते रवौ यथावस्थितां श्रियं न पुष्यति किन्तु किञ्चिन्न्यूनामेव पुष्णाति। यत् सूर्यापाये सूर्याभावे इति तन्न, अत्र सर्वथा छायाविनाशस्यानभिप्रेतत्वात्, यदत्र क्षामच्छायत्वमेवोक्तम्, अत एवाभिख्यां न पुष्यतीत्यवादि, यक्षे च कुशलिनि सर्वथा छायाध्वंसस्या-सम्भवात् अर्थान्तरन्यासः॥ २०॥

गत्वा सद्यः कलभतनुतामिति॥ इदानीम् अभिज्ञानानि कथयित्वा कान्तादर्शनोपायमाह। हे मेघ त्वं सद्यस्तत्क्षणं विद्युदुन्मेषदृष्टिम् अन्तर्भवन-पतितां कर्तुम् अर्हसि विद्युल्लतोल्लसनदृशं गृहाभ्यन्तरगतां विधातुं योग्यो भवसि, यथा तां प्रेक्षसे इति भावः। कथंभूतां विद्युदुन्मेषदृष्टिम् ? अल्पाल्पभासम् अल्पाल्पा अत्यल्पा भा दीप्तिर्यस्या असौ अल्पाल्पभास्ताम्। अपरं कथंभूतां विद्युदुन्मेषदृष्टिम् ? खद्योतालीविलसितनिभां खद्योतालीनां विलसितं खद्योताली-विलसितं तेन निभास्तेन तुल्या तां ज्योतिरिङ्गणश्रेणिस्फुरितानुकारिणीम् अन्यथा तडिल्लतालोकत्रस्ता मत्प्रिया भवनैकदेशे क्वचिदन्तर्द्धास्यतीति न त्वं द्रक्ष्यसि। परवेश्मप्रवेशः किल नाशंकनीयः तत्र स्वप्रकाशया विद्युतैव दृशा तदुद्यानाभ्यर्णभूधरमधिश्रित्य मृदुतरमवलोकय कीदृशी किं कुर्वाणा क्व चास्तीति मद्वधूमुपलभेथा इति। कथंभूतः सन् निषण्णः। क्व ? क्रीडाशैले कैलासः शैले कथंभूते ? प्रथमकथिते तस्यास्तीर इति [१७] श्लोकेन पूर्वप्रतिपादिते। अपरं कथंभूते ? रम्यसानौ रम्याणि मनसो ह्लादकारीणि सानूनि शिखराणि यस्य तस्मिन् मनोहरशृङ्गे। किं कृत्वा ? कलभतनुतां गत्वा कलभवत् तनुतां

**तन्वी श्यामाशिखरदशना पक्वबिम्बाधरोष्ठी**
**मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।**
**श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां**
**या तत्र स्याद्‌ युवतिविषये सृष्टिराद्येव धातुः ॥ २२ ॥**

करिपोतसमानतनुतां लाघवम् आश्रित्य । कथं सद्य इति ? किमर्थम् ? शीघ्र-सम्पातहेतोः सत्वरसञ्चरणाय शीघ्रं सत्वरं सञ्चरणं तदर्थं शरीरलाघवे सति हि शीघ्रसम्पातः कर्त्तुं शक्यते । अत्रोपमा ॥ २१ ॥

तन्वी श्यामेत्यादि ॥ इदानीं निजजायामितरनारीभ्यः सातिशय-रूपेण ज्ञापयन्नाह । हे जलद, तत्रागारे या योषित् एवंविधा स्यात् तां मदीयं द्वितीयं जीवितं विजानीयाः । किंभूता सा ? तन्वी सुकुमारा अथ च कृशतनुः इत्याकारचारुता सूच्यते । पुनः किंभूता ? श्यामा श्यामलेति वर्णाऽभिरामता । पुनः किंभूता ? अशिखरदशना । अशिखरा तीक्ष्णा दन्ता यस्याः सा अविषमदशनेत्यर्थः । अथ च शिखरदशना शिखरं पक्वदाडिमबीजाकारं माणिक्यं तद्वदुज्ज्वलतया दशना दन्ता यस्याः सा इत्यधरौष्ठरागित्वम् । पुनः कथंभूता ? मध्ये मध्यप्रदेशे क्षामा कृशोदरी इति शातोदरत्वम् । पुनः किंभूता ? चकितहरिणीप्रेक्षणा चकिता त्रस्ता या हरिणी मृगाङ्गना तद्वत् प्रेक्षणम् अवलोकनं यस्याः सा । एतेन चञ्चल-लोचनत्वं कथितम् । पुनः किंभूता ? निम्ननाभिः निम्ना गभीरा नाभिरुदरैक-देशो यस्याः सा । एतेन नाभेरगाधत्वमुक्तम् । पुनः कीदृशी ? श्रोणीभारात् अलसगमना श्रोणीभारात् कटिगुरुतया अलसा मन्थरा गमनं गतिर्यस्याः सा । इति जघनघनत्वं प्रतिपादितम् । पुनः कीदृशी ? स्तोकं यथा भवति भवतेगम्यमानत्वात् यथासंभवं कर्म कृत्वा पश्चाद्विभक्तिलोपः । स्तोकं मनाक् नम्रा नता । काभ्याम् ? स्तनाभ्यां पयोधराभ्यामिति पयोधरगुरुत्वं तस्याः प्रतीयते । या योषिदेवंविधसम्पदुपेता सा मद्दयितेति मन्तव्या । इत्यभिज्ञानार्थं प्रत्यङ्गशोभाममिधाय भूयः समुदायसौन्दर्यं वर्णयति । किं बहुना तत्रालकाया-

तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये तुहिनमथितां पद्मिनीं वाऽन्यरूपाम् ॥२३॥

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियाया
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।

महमेवं मन्ये युवतिविषये धातुः ब्रह्मणः आद्या सृष्टिरिव प्रथमः सर्ग इव । अस्यायमभिप्रायः—समानरूपेषु बहुषु क्रियमाणेषु यदाऽसौ निर्माप्यते तदाऽनुद्वेगात् कर्तृमनसो रम्यनिर्माणं भवति । अत्रोत्प्रेक्षा ॥ २२ ॥

तां जानीया इति ॥ युग्मम् । प्रतिपादितदयितारूपदर्शनादम्बुदस्य भाविनं सन्देहं व्युदस्यन्नाह । हे जलद त्वं ताम् उक्तलक्षणां मज्जायां जानीयाः बुध्यस्व । कीदृशीम् ? परिमितकथां मितभाषिणीम्, विरहखेदात् । पुनः किंभूताम् द्वितीयं जीवितं बहिश्चरं प्राणितम् । कस्य ? मम । पुनः किंभूताम् ? एकां केवलाम् । क्व सति ? मयि सहचरे पत्यौ दूरीभूते सति व्यवहिते सति । कामिव ? चक्रवाकीम् इव चक्रवाककामिनी सहचरे दूरीभूते सति एका भवति । प्रतिपादितदयितारूपादर्शनात् अम्बुदस्य भाविनं संशयं निरस्यति । हे जलद अहं तां बालाम् अन्यरूपां जातां स्वरूपपरित्यागात् रूपान्तरमापन्नां मन्ये । किंभूतां ताम् ? गाढोत्कण्ठाम् । गाढा प्रबला उत्कण्ठा यस्याः सा ताम् । केषु सत्सु ? एषु प्रावृषेण्येषु गुरुषु दुर्वहेषु दिवसेषु वासरेषु गच्छत्सु अतिक्रामत्सु । वाशब्द इवार्थे । पद्मिनीं वा पद्मिनीमिव कमलिनीमिव । किंभूतां पद्मिनीम् ? तुहिनमथितां हिमेन कदर्थिताम् अथ च तुहिनमथिता पद्मिनी अन्यरूपा भवति । ज्ञानक्रियया व्याप्तत्वात् सर्वत्र कर्मकारकम् । अत्रोत्प्रेक्षा ॥ २३ ॥

नूनं तस्याः प्रबलरुदितेति ॥ आत्मनोऽनुरागं विरहदशानुभवं च स्ववध्वा बोधयन्नाह । हे मेघ नूनं निश्चितम् अहमेवं मन्ये । तस्या उक्त

हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-
दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति ॥ २४ ॥

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद्भर्त्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥२५॥

रूपायाः प्रियायाः प्रेयस्या मुखं वदनं इन्दोश्चन्द्रमसः दैन्यं बिभर्त्ति धारयिष्यति। वर्त्तमानसामीप्ये वर्त्तमानवद्वेति भविष्यत्काले वर्त्तमाना। किंभूतस्य इन्दोः ? त्वदनुसरणक्लिष्टकान्तेः भवदावरणबाधिततेजसः। कभूतं मुखम् ? प्रबलरुदितोच्छूननेत्रं प्रबलमविच्छिन्नं यत् रुदितं रोदनं तेन उच्छूने श्वयथुयुक्ते नेत्रे नयने यस्य तत्। पुनः किंभूतम् ? भिन्नवर्णाधरोष्ठं भिन्नवर्णौ मृष्टरागौ अधरोष्ठौ यस्य तत्। केन कारणेन ? अशिशिरतया उष्णतया। केषाम् ? निश्वासानां निश्वसितानाम्। पुनः कीदृशम् ? हस्तन्यस्तं पाणावारोपितम्। स्वभावः खल्वेष मनःखेदादङ्गनानां कपोलः करतलतल्पः सम्पद्यते। पुनः कीदृशम् ? असकलव्यक्ति असकला अपरिपूर्णा व्यक्तिराकारो यस्य तत् असमग्रदृश्यम्। कस्मात् ? लम्बालकत्वात् लम्बाः कर्त्तनादिसंस्काराभावात् प्रवृद्धा अलका भालावलम्बिनः कुटिलाः केशाः तेषां भावो लम्बालकत्वं तस्मात् कपोलविलम्बिकेशत्वात्। अत्रोत्प्रेक्षा ॥ २४ ॥

आलोके ते निपतति पुरेति। स्ववल्लभायाः सम्भाव्यमानव्यापारं निरूपयन्नाह। हे जलद सा बाला ते तव आलोके दर्शनपथे पुरा निपतति निपतिष्यति। "यावत्पुरानिपातयोर्लट्" [पा० ३।३।४] इति पुरायोगे भविष्यति वर्त्तमाना। किंभूता सा ? वा अथवा बलिव्याकुला देवपूजादिव्यापारपरायणा वा अथवा मत्सादृश्यं लिखन्ती मम प्रतिकृतिं चित्रफलकादौ विन्यस्यन्ती।

**उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां**
**मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।**
**तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्**
**भूयो भूयः स्वयमपि कृतां मूर्छनां विस्मरन्ती ॥२६॥**

किंभूतं मत्सादृश्यम् ? विरहतनु वियोगकृशम् । ननु अत्र स्थितस्य भवतः कथं विरहतनु सादृश्यं वेत्ति ? कथंभूतं मत्सादृश्यम् ? भावगम्यं चित्ताभिप्रायज्ञेयम् । वा अथवा सारिकां पृच्छन्ती । कथंभूतां सारिकाम् ? मधुरवचनां मञ्जुभाषिणीम् । ननु सारिका क विद्यते इति चेत्तत्राऽऽह । कथंभूतां सारिकाम् ? पञ्जरस्थाम् । पञ्जरे तिष्ठतीति पञ्जरस्था ताम् । कथमिति ? इतीति किम् ? कच्चिदिति अभीष्टप्रश्ने । हे रसिके हे रसोत्पादकवाक्ये त्वं भर्तुः स्मरसि स्वामिनं ध्यायसि वा । न विस्मृताऽसि । हि यस्मात्कारणात् त्वं तस्य प्रिया आसीः वल्लभा बभूविथ । अत्र दीपकोऽलङ्कारः । "जातिक्रियागुणद्रव्यवाचिनैकत्रवर्त्तिना । सर्ववाक्योपकारश्चेत् तदाहुर्दीपकं बुधाः ॥" [ काव्यादर्श २।९७ ] ॥ २५ ॥

उत्सङ्गे वेति ॥ वियोगदहनदग्धहृदो निजवध्वाः शून्यतां निवेदयन्नाह । हे सौम्य हे मेघ सा तव आलोके पुरा निपतति निपतिष्यति । किंभूता ? गेयमुद्गातुकामा गीतमुद्गातुमुद्ग्रहीतुं कामोऽभिलाषो यस्याः सा । किं कृत्वा ? वीणां निक्षिप्य आरोप्य । क ? उत्सङ्गे अङ्के । किंभूते उत्सङ्गे ? मलिनवसने मलिनवाससि विरहित्वादधौतवस्त्रे इति अलङ्कृति-त्यागात्तस्याः पतिव्रतात्वं प्रतिपादितम् । पुनः किं कृत्वा ? तन्त्रीं सारयित्वा स्नायुरज्जुं निर्माय सज्जीकृत्य । किंभूतां तन्त्रीम् ? आर्द्रां क्लिन्नाम् । कैः ? नयनसलिलैः नेत्रजलैः । कथञ्चित् यथा स्यात् तथा कथञ्चिन्महता कष्टेन दुःखनिर्भरहृदयत्वात् । ननु गेयमुद्गतुकामायास्तस्याः कुतो नयनसलिलसम्भव इति चेतत्राह । किंभूतं गेयम् ? मद्गोत्राङ्कम् मन्नामचिह्नितम् । पुनः कथंभूतं गेयम् ? विरचितपदं विरचितानि आरोहावरोहस्वरक्रमेण

**शेषान्मासान् गमनदिवसस्थापितस्यावधेर्वा**
**विन्यस्यन्ती परिगणनया देहलीमुक्तपुष्पैः ।**
**संयोगं वा हृदयनिहितारम्भमास्वादयन्ती**
**प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ २७ ॥**

निवेशितानि पदानि यत्र तत् स्थापितवाक्यम् । किं कुर्वती ? मूर्छनां विस्मरन्ती स्वरसारणां शून्यत्वात् अनवधारयन्ती रागविशेषमविभावयन्ती । कथम् ? भूयो भूयः पुनरपि । किंभूतां मूर्छनाम् ? स्वयमपि कृताम् आत्मना आलपितामपि । सप्त स्वरास्त्रयो ग्रामा मूर्छना त्वेकविंशतिः । ताना एकोन-पञ्चाशदित्येतच्छ्रुतिमण्डलम् ॥ षड्जर्षभगान्धारमध्यमधैवतनिषादपञ्चमाः षड्जं वदन्ति मयुरा ऋषभं गाव एव च । अजा वदति गान्धारं क्रौञ्ची वदति मध्यमम् । अश्वस्तु धैवतं वक्ति निषादं वक्ति कुञ्जरः । पुष्पसाधारणे काले पिकः कूजति पञ्चमम् । षड्जऋषभगान्धारास्त्रयो ग्रामाः प्रकीर्त्तिताः । स्वर्गान्नान्यत्र गान्धारो नारदस्य वचो यथा [ नारदशिक्षा २।६ ] ॥२६॥

शेषान् मासानिति । विरहिणीव्यापारनिरूपणापदेशेन तस्याः प्रीतिं प्रकाशयन्नाह । सा अबला ते तवाऽऽलोके पुरा निपतिष्यति । अपरं किं कुर्वती ? वा अथवा शेषान् मासान् चतुरो मासान् भुवि पृथिव्यां विन्यस्यन्ती आरोपयन्ती स्थापयन्ती । कस्य शेषान्मासान् ? अवधेः मर्यादायाः कालनियमस्य । किंभूतस्य अवधेः ? गमनदिवसस्थापितस्य वियोगदिनकृतस्य संवत्सरपरिमाणतया कल्पितस्य । कैः शेषान् मासान् विन्यस्यन्ती ? देहलीमुक्तपुष्पैः देहली उदुम्बरदारु तस्याः सकाशान्मुक्तानि भूमौ निहितानि यानि पुष्पाणि तैः । अथवा गृहद्वारदारु तदधिष्ठातृदेवता-पूजार्थं प्रत्यहं पुष्पाणि मुच्यन्त इति । गृहावग्रहणीस्थापितकुसुमैः । कया ? परिगणनया एकद्वित्र्यादिसंख्यया । वा अथवा संयोगं मया सह सम्भोगम् आसादयन्ती अनुभवन्ती । ननु अत्र स्थितेन भवता सह कथं संयोगो जायते ? कथंभूतं संयोगम् ? हृदयनिहितारम्भम् चित्तस्थापितोपक्रमम् ।

**आद्ये बद्धा विरहदिवसे या शिखादाम हित्वा**
**शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् ।**
**स्पर्शक्लिष्टामयमितनखेनासकृत् सारयन्ती**
**गण्डाभोगात् कठिनविषमामेकवेणीं करेण ॥ २८ ॥**

अथ चेद् भवान एवं वदिष्यति यत् अत्र स्थितो भवान् कथमेवं जानाति यत् सा एवमेवं कुर्वाणा सती तव आलोके निपतति। सत्यं यतः कारणात् अङ्गनानां नायिकानां प्रायेण बाहुल्येन एते पूर्वोक्ता विनोदा भवन्ति प्रथमकथिता विनोदा जायन्ते। दिनगमनिकाभ्युपायाः कालयापनाकेलयो भवन्ति। केषु सत्सु? रमणविरहेषु कान्तवियोगेषु सत्सु। अत्र दीपकार्थान्तरन्यासयोः संसृष्टिः ॥२७॥

आद्ये बद्धा विरहदिवस इति। इदानीं स्ववल्लभाया भूयोऽपि विरहावस्थां कथयन्नाह। हे मेघ सा अबला तवाऽऽलोके निपतति पतिष्यति। किं कुर्वती? एकवेणीम् एकसंख्याकां वेणीं कचरचनां सारयन्ती अपास्यन्ती। केन करणेन? पाणिना। कीदृशेन? अयमितनखेन। अघटितकररुहेण। कीदृशीम् एकवेणीम्? कठिनविषमां निम्नोन्नतां कठोरपरुषाम्, स्नेहादिसंस्काराभावात्। अत एव किंभूताम्? स्पर्शक्लिष्टां त्वगिन्द्रियक्लेशकारिणीम्। अथ वारंवारं करस्पर्शेन शरीरोपमर्द्देन वा जडीकृताम्। स्नानाद्यभावो वेणीबन्धश्च विरहिणीसमुदाचारः। कस्मात् सारयन्ती? गण्डाभोगात् कपोलफलकात्। कथम्? असकृत् मुहुर्मुहुः। या वेणी कबरी आद्ये प्रथमे विरहदिवसे वियोगवासरे बद्धा ग्रथिता। किं कृत्वा? शिखादाम हित्वा कुसुमस्रजं विहाय। अथवा या शिखा वेणी अन्यच्च दाम हित्वा इति योजनीयम्, सा वेणी कबरी शापस्यान्ते शापस्य कोपवचनस्य अन्ते अवसाने मयैव उद्वेष्टनीया उन्मोचनीया इति अस्या महासतीत्वप्रतिपादनम्। किम्भूतेन मया? विगलितशुचा गलितशोकेन। अत्र जातिदीपकयोः संसृष्टिः। तथा च—

आधिक्षामा विरहशयने सन्निषण्णैकपार्श्वा
प्राचीमूले तनुरिव कलामात्रशेषा हिमांशोः ।
नीता रात्रिः क्षण इव मया सार्धमिच्छारतैर्या
तामेवोष्णैर्विरहजनितैरश्रुभिर्यापयन्ती ॥ २९ ॥

संस्थानावस्थानक्रियादि यद् यस्य यादृशं भवति ।
लोके चिरप्रसिद्धं तत्कथनमनन्यथा जातिः ॥ २८ ॥
[ रुद्रट ७।३० ]

आधिक्षामां विरहशयने इति ॥ विरहकर्शितदयितादुःखं ख्यापयन्नाह । हे जलद, सा अबला नवाऽऽलोके पुरा निपतति निपतिष्यति । किं कुर्वती ? तामेव रात्रिं यापयन्ती निर्गमयन्ती अतिवाहयन्ती । कैः ? अश्रुभिः रोदन-जलैः । किम्भूतैः अश्रुभिः ? उष्णैः अशिशिरैः । यतः कथम्भूतैः ? विरहजनितैः वियोगोत्पन्नैः । किंभूता सा ? आधिक्षामा मनःपीडाकृशा । अत एव कथंभूता सा ? सन्निषण्णैकपार्श्वा सन्निषण्णं स्थितम् एकं वामदक्षिण-योरन्यतरत् पार्श्वं यस्याः सा क्षामत्वात् परिवर्त्तितुमसमर्थेति भावः । क ? विरहशयने वियोगशय्यायाम् । भूतलन्यस्ते पल्लवादिस्रस्तरे तूलिकादौ वा । क्षामत्वान्निरालम्बनावस्थानस्यासम्भवः । कीदृशी प्रतिभाति ? उत्प्रेक्षते प्राचीमूले पूर्वदिङ्मुखे हिमांशोश्चन्द्रमसः तनुरिव मूर्त्तिरिव । कीदृशी तनुः ? कलामात्रशेषा कलामात्रं शेषो यस्याः सा एककलापरिमाणेत्यर्थः । तस्याः कलोपमानेन निरतिशयकृशिमपाण्डिमप्रतिपादनम् । उपमा अत्रेय-मागमदृशैव कविनोपनिबद्धा यस्मादस्मदादीनामिन्दोः कला दृशोर्दर्शनयोग्या न भवतीति । या रात्रिः क्षणदा मया सार्द्धं मया सह पूर्वमिच्छारतैर्यथा-भिलषितसुरतकेलिभिः क्षणमिव मुहूर्त्तमिव नीता गमिता । यतः सुखानुभवेन भूयानपि कालः कलेव विलीयते । अत्र दीपकोपमयोः संसृष्टिः ॥२९॥

निश्वासेनाधरकिसलयक्लेशिना विक्षिपन्ती
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बि ।
मत्संयोगः सुखमुपनयेत् स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्ती नयनसलिलोत्पीडरुद्धावकाशाम् ॥३०॥

निश्वासेनेति। तस्या दुःसहविरहदहनोपतप्तचेतसो निद्रानाशं प्रकाशयन्नाह। हे जलद साऽबला तवाऽऽलोके पुरा निपतति पतिष्यति। किं कुर्वती ? इति कारणान्नूनं निश्चितं निद्राम् आकाङ्क्षन्ती निद्रासौख्यमभिलषन्ती। ननु निद्रामभिलषन्तीति तत्कथं सा नायातीति चेत्तत्र आह। कथंभूतां निद्राम् ? नयनसलिलोत्पीडरुद्धावकाशां नयनसलिलमश्रु तस्योत्पीडः पूरः तेन रुद्ध आवृतः अवकाश आश्रयो यस्याः सा तां नेत्रजलपूरनिबद्धमार्गाम्। ननु निद्रामपि किमर्थमभिलिषन्तीति चेत्तत्राऽऽह। यतः कारणात् मत्संयोगः मत्समागमः सुखमुपनयेत् सौख्यमुत्पादयेत्। नन्वत्र स्थितेन भवता सह कथं संयोगो बभूव। कथंभूतो मत्संयोगः ? स्वप्नजोऽपि स्वप्नेन जनितोऽपि। अपरं किं कुर्वती ? अलकं कुटिलकेशसञ्चयं विक्षिपन्ती विरलीकुर्वती विकिरन्ती। केन ? निश्वासेन मुखमारुतेन। कथंभूतेन निश्वासेन ? अधरकिशलयक्लेशिना ओष्ठपल्लवदाहिना। अधरः ओष्ठः स एव किशलयः पल्लवः प्रतीयमानरागसौकुमार्यधर्माधारत्वात् तं क्लिश्नाति बाधते स तेन। कथंभूतमलकम् ? परुषं कठिनम्। कस्मात् ? शुद्धस्नानात् केवलजलमात्राऽभिषेचनात्। अपरं कथंभूतमलकम् ? आगण्डलम्बि तैलाभावात् आकपोलपाति कपोलौ अभिव्याप्य लम्बमानम्। एतेन तस्याः पतिविरहशोकप्रवर्त्तमाननयनपयःप्रवाहपूरिततद्दृशोरवकाशमलभमाना न कदाचिदपि निद्रा पदमादधाति [ इति ] इदमुक्तं भवति। अत्र रूपकदीपकयोः संसृष्टिः ॥३०॥

पादानिन्दोरमृतशिशिराञ्जालमार्गप्रविष्टान्
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।
चक्षुः खेदात् सलिलगुरुभिः पक्ष्मभिश्छादयन्ती
साभ्रेऽह्नीव स्थलकमलिनी नप्रबुद्धा नसुप्ता ॥३१॥

जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मा-
दित्थम्भूतां प्रथमविरहे तामहं तर्कयामि ।

पादानिन्दोरिति । निजजायाविरहव्यथोत्थामवस्थां कथयन्नाह । हे मेघ साऽबला नवाऽऽलोके निपतति पतिष्यति । किं कुर्वती । चक्षुर्नेत्रं छादयन्ती स्थगयन्ती । कैः ? पक्ष्मभिः नेत्ररोमभिः । किंभूतैः पक्ष्मभिः ? सलिलगुरुभिः शोकाश्रुभारितैः । कस्मात् ? खेदात् कष्टान् मद्विरहदुःखात् । खेदे कारणमाह । यतः कथंभूतं चक्षुः ? इन्दोः पादान् अभिमुखं गतं चन्द्रकिरणान् सम्मुखमायातम् । तर्हि ते उष्णा भविष्यन्तीति चेत्तत्राह । कथंभूतान् इन्दोः पादान् ? अमृतशिशिरान् पीयूषशीतलान् । ननु गृहान्तरे गतायास्तस्याः कुतश्चन्द्रकरस्पर्शो बभूव इति चेत्तत्राऽऽह । कथं-भूतान् इन्दोः पादान् ? जालमार्गप्रविष्टान् गवाक्षविवरैरागतान् । ननु सन्तापकारिणश्चेदिन्दुकिरणास्तत्कथमभिमुखं गतमित्याशङ्क्याऽऽह । कया ? पूर्वप्रीत्या आदिपरिचयेन । तर्हि अपरं कथंभूतम् ? तथैव सन्निवृत्तं तथैव प्रत्यावृत्तं विरहे शिशिररश्मिरश्मीनां ज्वलनज्वालाकरालत्वात् । अत-एव कथंभूता ? नप्रबुद्धा नसुप्ता न जागरिता न निद्रां प्राप्ता निमीलित-लोचनत्वात् उन्निद्रत्वाच्च । अतश्चोपमीयते । केव ? स्थलकमलिनीव । यथा स्थलकमलिनी साभ्रे अभ्रपटलच्छादिते अह्नि दिवसे न प्रबुध्यते न च स्वपिति विकञ्चिता संकुचिता च न भवति । भूमिशयनात्तस्याः स्थल-कमलिन्युपमानमुपपन्नम् । अत्रोपमादीपकयोः संसृष्टिः ॥३१॥

आदिक्रियाकुलकम् । जाने सख्यास्तव मयि मन इत्यादि । तस्या

वाचालं मां न खलु सुभगम्मन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद् भ्रातरुक्तं मया यत् ॥३२॥

सव्यापारामहनि न तथा पीडयेद्विप्रयोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनीशयनासन्नवातायनस्थः ॥ ३३ ॥

विरहदशादौःस्थ्यं सत्यापयन्नाह। हे मेघ अहं जाने अवगच्छामि यत् ते तव सख्या भ्रातृजायायाः मनः मयि विषये संभृतस्नेहं वर्त्तते पुष्टानुरागमस्ति उपचितप्रीति अस्ति। अस्मात्कारणादहं ताम् इत्थंभूतां तर्कयामि एवंविधां विचारयामि। कथितावस्थाम् उत्प्रेक्षते। क सति ? प्रथमविरहे सति आद्यवियोगे सति। अथ चेद् भवान् एवं वदिष्यति यत् त्वमात्मानं सुभगं मन्यमानः सन् यत्किञ्चित् जल्पसि इति तत्राऽऽह। खलु यस्मात्कारणात् सुभगम्मन्यभावः कर्त्ता मां वाचालं यत्किञ्चिद्वादिनं न करोति न विदधाति। असुभगं सुभगमात्मानं मन्यते सुभगम्मन्यः तस्य भावः सुभगम्मन्यभावः सौभाग्याभिमानः। कथमेतद्विज्ञायते ? हे भ्रातः हे बान्धव, यन्मया उक्तं तस्या अवस्थादिकमभिहितं तत् ते तव निखिलं समस्तम् अचिरात् स्तोकावसराद् द्वित्रैर्दिनैः प्रत्यक्षं भविष्यति प्रकटं जनिष्यते। त्वमपि ताम् एवंविधां द्रक्ष्यसीति भावः। अस्यायमर्थः— तदवस्थां तां विलोक्य अवितथं त्वमेव ज्ञास्यसि। अत्रानुमानम् ॥३२॥

सव्यापारामहनि न तथा पीडयेत् इति॥ विरहविधुरनिजवधूखेदापनोदाय यक्षः स्वसन्देशं पयोदस्योपदिशन्नाह। हे मेघ त्वं तां निशीथे पश्चिमार्द्धरात्रे अवलोकय। ननु मध्यरात्रे सा सुप्ता भविष्यति इति चेत्तत्राऽऽह। कथंभूतां ताम् ? उन्निद्रां वियोगप्राप्तिवशात् गतनिद्राम्। किं कर्तुम् ? अलम् अतिशयेन मत्सन्देशैः सुखयितुं मम वार्त्तावचोभिः स्वस्थीकर्तुम् आह्लादयि-

**सा संन्यस्ताभरणमबला पेशलं धारयन्ती**
**शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम् ।**
**त्वामप्यस्त्रं नवजलमयं मोचयिष्यत्यवश्यं**
**प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ३४ ॥**

तुम् । ननु परस्त्रीमेकाकिनीं पश्यतो मम लोकापवादः स्यादिति चेत्तत्राऽऽह । कथंभूतां ताम् ? साध्वीं पतिव्रतां लोकापवादायोग्याम् । कथंभूतः सन् ? अवनिशयनासन्नवातायनस्थः । अवनौ भूमौ शयनं शय्या विरहसन्तापाद् व्रताद्वा भूशयनं तस्यासन्नः सन्निकृष्टो वातायनो गवाक्षस्तत्र तिष्ठतीति तत्स्थः सन् । अनेन पयोदस्य योग्यदेशावस्थानकथनम् । ननु दिवा कथं न विलोक्यते किमिति रात्रावेव ? हे मेघ अहं विचारयामि । मद्वियोगः कर्त्ता ते तव सखीं भ्रातृजायां तथा तेन प्रकारेण अहनि दिवसे न पीडयेत् न बाधते । यतः कथंभूताम् ? सव्यापाराम् अवश्यकर्त्तव्यदेवतातिथिसपर्याकार्यव्यग्रमानसाम् । तथा किम् ? यथा रात्रौ पीडयेत् । किंभूतां सखीम् ? निर्विनोदां कालयापनार्थं शुकशारिकालापनालेख्यलेखनादिकेलयो विनोदास्तैर्वर्ज्जिताम् । अत एव कथंभूताम् ? गुरुतरशुचं प्रबलशोकाम् । अत्रोपमा ॥३३॥

सा संन्यस्ताभरणमिति ॥ तस्याः कृशिमदशादैन्यं निवेदयन्नाह । हे जलद सा अबला अवश्यं निश्चयेन त्वामस्रं मोचयिष्यति न केवलं मामेव त्वामपि द्रष्टारम् । किंभूतम् अस्रम् ? नवजलमयं नूतनजलोत्पन्नम् । किं कुर्वती ? गात्रं संन्यस्ताभरणं रमणशुचा परित्यक्तमण्डनम् । किंभूतं गात्रम् ? पेशलं सुकुमारम् अत एव कथंभूतम् ? शय्योत्सङ्गे निहितं शय्याया उत्सङ्गः शय्योत्सङ्गः शय्योत्सङ्गे तल्पपृष्ठे निहितं स्थापितम् आरोपितम् । तामहं एवंविधां दृष्ट्वा कथं रोदिष्यामीति चेत्तत्राऽऽह । यतः कारणात् सर्वोऽपि आर्द्रान्तरात्मा सरसवृत्तिः पुमान् प्रायो बाहुल्येन करुणावृत्तिर्भवति करुणा कृपा सैव वृत्तिर्व्यवहारो यस्य सः दयापरो जायते । भवांश्च जलाधार-

**रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं**
**प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।**
**त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या**
**मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ ३५ ॥**

**वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-**
**र्मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या ।**

त्वादार्द्रमध्यः परदुःखदुःखितोऽस्ति। अर्थान्तरे तु आर्द्रः अकर्कशः। अर्थान्तरन्यासः ॥३४॥

रुद्धापाङ्गप्रसरमलकैरिति। इदानीं मेघ अलकाप्राप्ते त्वयि शुभाङ्ग-स्फुरणसूचनात्तस्या हर्षोत्पत्तिर्भविष्यतीत्युपदिशन्नाह। हे मेघ अहमिति शङ्के एवं विचारयामि। इति किम्? यत् तस्या मृगाक्ष्यास्तरुणहरिणलोल-लोचनाया नयनं नेत्रं मीनक्षोभात् मत्स्यपरिवर्त्तनात् चलकुवलयश्रीतुलाम् एष्यति चलं लोलं कुवलयं नीलोत्पलं तस्य श्रीः शोभा तस्यास्तुला अनुकृतिस्तां चञ्चलनीलोत्पलशोभासमानतां प्राप्स्यति। कथंभूतं नयनम्? उपरिस्पन्दि उपरिनयनप्रदेशे स्पन्दमानम्। क्व सति? त्वयि आसन्ने सति भवति निकट-वर्त्तिनि सति। किंभूतं नयनम्? रुद्धापाङ्गप्रसरं निरुद्धनेत्रपर्यन्तविस्तारम्। कैः? अलकैः कुटिलकेशैः। अपरं कथंभूतं नयनम्? अञ्जनस्नेहशून्यं कज्जलसम्पर्करहितम्। पुनः किंभूतं नयनम्? विस्मृतभ्रूविलासं विस्मृता भ्रूविलासा भ्रूविभ्रमा यस्य तत्। कस्मात्? मधुनः मद्यस्य प्रत्यादेशादपि निराकरणादपि। अपि चेति समुच्चये। न केवलं मनःखेदात्, अपि च मद्यत्यागात्। स्त्रीणां वामाक्षिस्पन्दनं सुहृद्दर्शनसूचकम्। वामत्वं च विलोचनस्यैकवचनोद्देशादर्थाल्लब्धम्। अत्रोपमानाऽनुमानयोः संसृष्टिः ॥ ३५॥

वामश्चास्या इति। तस्याः पुनः प्रशस्तनिमित्तं सम्भावयन्नाह। हे मेघ न केवलं नयनं नेत्रं चलकुवलयश्रीतुलाम् एष्यति। च अन्यत्

सम्भोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥३६॥

तस्मिन् काले जलद यदि सा लब्धनिद्रासुखा स्या-
दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥३७॥

अस्या मत्कान्ताया वाम ऊरुश्चलत्वं यास्यति स्फुरिष्यति इत्यर्थः । च-शब्द उक्तोपमार्थस्तेनास्या मत्प्रियाया विलोचनमिव वाम ऊरुः सक्थिप्रदेशः चलत्वं यास्यति । कथंभूत ऊरुः ? मदीयैः कररुहपदैर्मुच्यमानः मत्सम्बन्धिभिर्नखव्रणाङ्कैस्त्याज्यमानः । अपरं कथंभूतः ? मुक्ताजालं त्याजितः मौक्तिककलापं मोचितः । कामिनीनां हि मेखलावलम्बिन ऊरुदण्डसङ्गिनो मुक्तास्तबका चंचूलाः (?) सम्भवन्ति । कया ? दैवगत्या विधिवशेन । किंभूतं मुक्ताजालम् ? चिरपरिचितं प्रभूतकालादभ्यस्तं तत्र प्रीत्यर्थं तस्या-रोपणमासीत् । अपरं कथंभूत ऊरुः ? मम हस्तसंवाहनानां समुचितः मदीयकरोपमर्दनानां योग्यः । कदा ? सम्भोगान्ते निधुवनावसाने । अपरं कथंभूतः ऊरुः ? सरसकदलीस्तम्भगौरः सरस आर्द्रः योऽसौ कदली-स्तम्भस्तद्वद्गौरः शुभ्रः आर्द्ररम्भाकाण्डपाण्डुः तस्याः श्यामायाः अपि विरहा-वस्थया ऊरोर्गौरत्वमुपपन्नमेव । अत्रोत्प्रेक्षा ॥ ३६ ॥

तस्मिन्काले जलद यदि सेति ॥ स्वप्रियायाः प्रणयं प्रकाशयन्नाह । हे मेघ, तस्मिन् काले वामचक्षुरूरुस्फुरणसमये प्रभातसमये यदि सा मद्वल्लभा लब्धनिद्रासुखा स्यात् प्राप्तनिद्रासौख्या भवेत् तदानीं त्वं याममात्रं सहस्व प्रहरैकं प्रतीक्षस्व । कथंभूतस्त्वम् ? स्तनितविमुखः गर्जितपराङ्मुखः । अपरं कथंभूतः ? तत्र तस्मिन् गवाक्षे आसीन उपविष्टः । ननु याममात्रं कथं प्रतीक्ष्यते गमनसमकालमेव किमिति जल्पितुं नाऽऽरभ्यत इति

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥३८॥

चेत्तत्राऽऽह । यतः तस्याः प्रियायाः गाढोपगूढं निबिडालिङ्गनं सद्यः कण्ठच्युत-भुजलताग्रन्थि मा भूत् सद्यस्तत्क्षणं कण्ठात् च्युतः स्रस्तो भुजलताया बाहु-वल्ल्याः ग्रन्थिः पाशो यत्र तत्तथा। क्व सति? मयि प्रणयिनि वल्लभे कथञ्चित् दैववशात् स्वप्नलब्धे सति स्वप्नज्ञानप्राप्ते सति। प्रायः प्रियविप्र-युक्तानां तच्चिन्ताखिन्नमनसां निशि निद्रानाशाद्दुःखेनैव स्वप्नसंभावना भवति। अत्राक्षेपः ॥ ३७ ॥

तामुत्थाप्य स्वजलकणिकेति ॥ स्ववल्लभासम्भाषणमम्भोधरस्योपदि-शन्नाह। हे मेघ हे जलद त्वं तां कामिनीं वक्तुं प्रक्रमेथाः प्रारभेथाः। कैः? स्तनितवचनैर्गर्ज्जितवाक्यैः न तु परुषभाषितैः। किं कृत्वा? ताम् उत्थाप्य प्रबोध्य। किंभूतां ताम्? प्रत्याश्वस्तां वीतग्लानिम्। केन? अनिलेन वायुना। कथंभूतेन अनिलेन? स्वजलकणिकाशीतलेन निजवारिशीकरशिशिरेण। कथं प्रत्याश्वस्ताम्? समं सह। कैः? जालकैः कलिकाकोशैः। कासां? मालतीनां जातीनाम्। किंभूतैर्जालकैः? अभिनवैः प्रत्यग्रैः। सुमनसोऽपि प्रभाते शीतवातस्पर्शेन बोध्यन्ते। कथंभूतस्त्वम्? विद्युद्गर्भः विद्युद्गर्भे मध्ये यस्य सः स्त्रीद्वितीयः। परनारीसम्भाषणमेकाकिनो नोचितम् अत आह विद्युद्गर्भः। अन्तर्गूढविद्युता भवता भाव्यमन्यथा भीरुत्वात् सा भेष्यतीति। किंभूतां ताम्? स्तिमितनयनाम् अनिमिषनेत्राम् इति विलोकनादरप्रतिपादनम्। कुत्र? गवाक्षे वातायने। कीदृशे गवाक्षे? त्वत्स-नाथे भवदधिष्ठिते। अत्र सहोक्तिः ॥३८॥

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदयनिहितैरागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥३६॥

भर्तुर्मित्रं प्रियमविधवे विद्धीत्यादि ॥ मेघस्य दूतकर्म समर्थयमान आह । भवद्दयितोदन्तमादाय दूतोऽहमागतः सहसैवमुक्ता चिरवियुक्ता सा पतिविनाशमाशङ्क्य पुण्यजनजाया कदाचिज्जीवितं त्यजतीति सम्भावयन्नाह । मेघस्तत्प्रियप्राणितत्वबोधकेन सम्बोधनेन तामाश्वास्य तत्सन्देशमुपदिशति—हे अविधवे हे जीवद्भर्तृके, त्वं माम् अम्बुवाहं विद्धि मेघं जानीहि । कथंभूतम् अम्बुवाहम् ? भर्तुर्मित्रं वल्लभस्य सखायम् । कथंभूतं मित्रम् ? प्रियम् अभीष्टम् । अतः कारणात् तत्सन्देशैः तस्य वल्लभस्य सन्देशैः कथनैः त्वत्समीपमागतं भवदारात्समायातम् । कथंभूतैस्तत्सन्देशैः ? मनसि निहितैः चित्तस्थापितैः स्तोकमपि अविस्मृतैः । यत्तेन सन्दिष्टं तन्मनागपि न विस्मृतमिति । न पुनरहं केवलं वार्त्तामात्रकथकः किन्तु पतिवियुक्तकामिनीकामुकसंघटननिपुण इति स्वशक्तिमावेदयन्नाह । योऽम्बुवाहः प्रोषितानां प्रवासीभूतानां वृन्दानि त्वरयति गृहाय पथिककदम्बकानि उत्सुकयति । वृन्दानीति बहुवचनेन स्वस्य कृताभ्यासतां सूचयति । ननु प्रियोत्कण्ठितास्ते स्वयमेव त्वरन्त इत्याशङ्क्याऽऽह । किंभूतानां प्रोषितानाम् ? पथि श्राम्यतां मार्गखेदं गतानाम् । कैः त्वरयति ? ध्वनिभिः गर्जितैः । किंभूतैर्ध्वनिभिः ? मन्द्रस्निग्धैः धीरमधुरैः । उदारमरूक्षं च दूतवचनं प्रशस्यते । किंभूतानि वृन्दानि ? अबलावेणिमोक्षोत्सुकानि अबलाः पतिवियुक्ता योषितः तासां वेणयः केशसंयमनविशेषास्तासां मोक्षो मोचनं तत्रोत्सुकानि उत्कण्ठितानि । एतेन तासां पतिव्रतात्वकथनं यतस्ताः स्वभर्तृष्वेवागतेषु तद्बन्धमोक्षं कुर्वन्ति नान्यथेति । अत्रोर्जस्वी ॥३६॥

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैवम् ।
श्रोष्यत्यस्मात् परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपहृतः सङ्गमात् किञ्चिदूनः ॥४०॥

इत्याख्याते पवनतनयमिति ॥ तस्याः पतिसन्देशश्रवणादनन्तरमम्बुदस्य निवेदयन्नाह ॥ हे मेघ मत्कान्ता अस्माद्वाक्याद् यत्परं वाक्यं सन्देशादिलक्षणं तत् अवहिता सावधाना सती श्रोष्यति आकर्णयिष्यति । कथमेतद्विज्ञायते यत् अवहिता सावधाना सती श्रोष्यतीति चेत्तत्राऽऽह । यतः कथंभूता सा ? उत्कण्ठोच्छ्वसितहृदया । उत्कण्ठया उच्छ्वसितं जातोच्छ्वासं हृदयं चित्तं यस्याः सा । अपरं कथंभूता ? उन्मुखी उद्ग्रीवा । किं कृत्वा श्रोष्यति ? त्वां वीक्ष्य भवन्तमालोक्य । न केवलं त्वां वीक्ष्य । च अन्यत् एवं सम्भाव्य स्वगतमित्यालप्य । केव ? मैथिलीव सीतेव । कम् ? पवनतनयं हनूमन्तम् । यथा मैथिली सीता पवनतनयं हनूमन्तं वीक्ष्य...अस्माद्वाक्यात् यत्परं वाक्यं सन्देशादिकं तदवहिता सावधाना सती श्रुतवती । न केवलं पवनतनयं दृष्ट्वा एवं संभाष्यैव भवति रामदूतत्वं मत्वा च । मैथिली कथंभूता ? उत्कण्ठोच्छ्वसितहृदया । अपरं कथंभूता ? उन्मुखी उद्ग्रीवा । क्व सति श्रोष्यति ? इत्याख्याते सति इति पूर्वोक्ते भर्तुर्मित्रादिवाक्ये कथिते सति । युक्तोऽयमर्थः, यतः कारणात् हे सौम्य दर्शनीयाकृते, सीमन्तिनीनां स्त्रीणां कान्तोदन्तः भर्तुः सन्देशः सुहृदुपहृतः सन् मित्रानीतः सन् सङ्गमात् समागमात् किंचित्स्तोकमेव ऊनो न्यूनो भवति, विश्वासोत्पादनात् । अनेन च सन्देशस्य व्यभिचारित्वं (?) सूच्यते । सोम इव सौम्यः स्वार्थे यण् । अत्रोपमार्थान्तरन्यासयोः संसृष्टिः ॥४०॥

तामायुष्मन्मम च वचनादात्मना चोपकर्त्तुं
ब्रूयादेवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥४१॥

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्त्रेणास्रद्रवमविरतोत्कण्ठमुत्कण्ठितेन ।

तामायुष्मन्निति ॥ प्रियायाः कुशलप्रश्नव्याजेन पुण्यजनो निजजीवितसत्तां प्रतिपादयन्नाह । हे आयुष्मन् हे मेघ, परोपकारकतया प्रशस्तजीवितो भवान् ताम् एवं ब्रूयात् एवं वदेत्, यथा हे अबले हे प्रोपितभर्तृके, तव सहचरो भर्त्ता त्वां कुशलं पृच्छति निर्विघ्नं पृच्छति । ननु मद्वियोगदुःखात् मृतो भविष्यतीति चेत्तत्राऽऽह । कथंभूतस्ते सहचरः ? अव्यापन्नः कुशलजीवनः । ननु यदि अव्यापन्नः तर्हि क्वास्ति ? रामगिर्याश्रमस्थः रामगिरिर्नाम पर्वतः तस्याऽऽश्रमाः तपस्विनिवासास्तेपु तिष्ठति इति तस्य वृत्तिख्यापनम् । किं कर्तुम् ? मम वचनात् मद्वाक्यात् आत्मना च स्वयं मित्रबुध्वा उपकर्तुम् उपकारं कर्तुम् । ननु यदि रामगिर्याश्रमस्थः तत्कथं नाऽऽयाति । यतः कथंभूतः सहचरः ? वियुक्तः विरहितः शापयन्त्रितः । अर्थान्तरन्यासमाह । यतः कारणात् प्राणिनां स्पृहणीयेष्वपि पदार्थेषु एतदेव कुशलमेव पूर्वाभाष्यं प्रथममाशंसनीयं प्रथमं कुशलमेव प्रष्टव्यमित्यर्थः । किंभूतानां प्राणिनाम् ? सुलभविपदां सुप्रापविपत्तीनां क्षणविनश्वरत्वाच्छरीरस्य । 'पूर्वाशास्यमि'ति मूलपाठः । अर्थान्तरन्यासः ॥४१॥

अङ्गेनाङ्गं प्रतनु तनुनेति ॥ एवंविधस्वाङ्गावस्थानेन निजानुरागमङ्गनायां प्रख्यापयन्नाह । हे आयुष्मन् परोपकारकतया प्रशस्तजीवितो भवान् ताम् एवं ब्रूयात् । यथा हे अबले, ते तव सहचरो भर्त्ता अनुरागवशात् तवाङ्गं शरीरं निजेनाङ्गेन वपुषा विशति त्वया सह ऐक्यं याति । कैः ? तैं-

**उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती**
**सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥४२॥**
**शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्**
**कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।**

स्तैर्लोकप्रसिद्धैः संकल्पैः मनोव्यापारैः। किंभूतमङ्गम् ? प्रतनु प्रकर्षेण तनु कृशम् ? कथंभूतेनाङ्गेन ? तनुना कृशेन । कथंभूतमङ्गम् ? तप्तम् उष्णम् । किंभूतेनाङ्गेन ? गाढतप्तेन महासन्तप्तेन अतिशयतापिना । किंभूतमङ्गम् ? अस्रद्रवं अस्रं द्रवति क्षरति इत्यच् पचादित्वात् । किंभूतेनाङ्गेन ? सास्रेण सबाष्पेण । किंभूतमङ्गम् ? अविरतोत्कण्ठम् अविरतम् अनवरतम् उत्कण्ठा उत्का यस्य तत् । पुनः किंभूतेनाङ्गेन ? उत्कण्ठितेन उत्कण्ठायुक्तेन । किंभूतमङ्गम् ? उष्णोच्छ्वासम् । दीर्घोच्छ्वासमिति पाठे बहुनिश्वासम् । कथंभूतेनाङ्गेन ? समधिकतरोच्छ्वासिना समधिकतरम् अधिकमुच्छ्वसतीत्येवंशीलं तत् समधिकतरोच्छ्वासि तेन। अत्र मिथः समवस्थाकथनेन तयोः समदुःखितां प्रतिपादयति । ननु अङ्गेनाङ्गं कथं विशति, स्वयमेव कथं नाऽऽगच्छति ? कथंभूतः स्वभर्त्ता ? दूरवर्त्ती विप्रकृष्टः । ननु साक्षात्कस्मान्न युज्यत इत्याह पुनः कथंभूतः ? विधिना दैवेन रुद्धमार्गः निषिद्धवर्त्मा । किंभूतेन विधिना ? वैरिणा शत्रुरूपेण। किं करोति वियोगस्य वर्षभोग्यत्वादागन्तुं न शक्नोति। अथवा तैरिति पूर्वानुभूतैः चुम्बनदर्शनस्पर्शनादिव्यापारैः । अत्र केचिदन्यथा मन्यन्ते तथा तथावस्थस्वशरीरानुसारेण त्वदीयं वपुस्तथा तथा दुःखितं विशति········· जानाति । परमत्र नायमर्थः प्रस्तावोचितः । किन्तु......प्रश्नानन्तरमानिनार्था धानावसर इत्यासहः स...॥४२॥

शब्दाख्येयमिति ॥ प्रणयादिप्रणत्याख्यानेन......प्रीतिमुत्पादयन्नाह । हे जलद भवान् ताम् एवं ब्रूयात्, यथा हे अबले, स ते तव सहचरो भर्त्ता मन्मुखेन इदम् आह एवं ब्रूते। कथम् ? उत्कण्ठाविरचितपदं यथा

**सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृश्य-**
**स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥४३॥**
**श्यामास्वङ्गं चकितहरिणीप्रेक्षिते दृष्टिपातान्**
**वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।**

भवति, उत्कण्ठया विरचितानि स्थापितानि पदानि वचनानि यत्र तत्। स कः? यो भर्त्ता किल इति संभावनायां तदपि वचः कर्णे कथयितुं लोलोऽभूत् आख्यातुं लम्पट आसीत्। तत्किम्? यद्वचः शब्दाख्येयं शब्देन श्रोत्रग्राह्येण आख्यायते कथ्यते यत् तत् प्रकटाख्यं न तु गोप्यं हस्तभ्रूसंज्ञादि-वाच्यम्। कथम्? सखीनां पुरस्तात् अग्रे, परमार्थतस्तु पुनः आननस्पर्शलोभात् कपोलचुम्बनाभिलाषात्। अनेनात्यासक्तिर्व्यज्यते। ननु सम्प्रत्यपि एवं कथं न कथयतीति चेत्तत्राऽऽह। कथंभूतः सहचरः? श्रवणविषयमति-क्रान्तः कर्णगोचरमतीतः। आस्तां वदनस्पर्शः त्वदीयवचनश्रवणगोचर-तामप्यतीतः। न केवलं श्रवणविषयमतिक्रान्तः। पुनः किंभूतः? लोचना-भ्यामदृश्यः नेत्राभ्यामप्यनवलोकनीयः। एवं नाम दूरं गतो यथा न दृश्यते नापि श्रूयत इति। अत्र प्रेयस्तथा च दण्डी "प्रेयः प्रियतराख्यानम्" [ काव्यादर्शे २।२७५ ] ॥४३॥

श्यामास्वङ्गं चकितहरिणीति॥ पुण्यजनः प्रियायाः प्रत्यङ्गरूप-सम्पदुपमानवस्तूपन्यासापदेशेन स्वप्रीतिं प्रकाशयन्नाह। हे मेघ, भवान् तामेवं ब्रूयात्। यथा हे भीरु हे कातरे, अथ हे चण्डि,* हन्त इति खेदे तव सादृश्यं समानरूपताम् एकस्थमेकत्र स्थाने स्थितं क्वचिदपि नास्ति क्वचिदपि न विद्यते, किमपि क्वापि तिष्ठति। किं कुत्रास्ति? ते तव अङ्गं शरीरं श्यामासु उत्पश्यामि फलिनीलतासु सम्भावयामि। श्यामत्व-तनु-ताभ्यां तत्सादृश्यम्। ते तव दृष्टिपातान् दृष्टिविक्षेपान् चकितहरिणीप्रेक्षिते

* अस्मिन् पद्ये हे अभीरु इतिच्छेदः। तन्न शोभनार्थत्वम्।

उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥४४॥
धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले
दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षणोति ।
घर्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयु-
र्दिक्संसक्तप्रविरलघनव्यस्तसूर्यातपानि ॥४५

उत्पश्यामि त्रस्तकुरङ्गीविलोकने सम्भावयामि चञ्चलत्वेन तत्सारूप्यम् । ते तव मुखच्छायां शशिनि उत्पश्यामि वदनकान्तिममृतकिरणे सम्भावयामि । कान्तिमत्त्वात् आनन्दकत्वाच्च तत्सारूप्यम् । ते तव केशान् कचकलापान् शिखिनां मयूराणां बर्हभारेषु उत्पश्यामि पिच्छसञ्चयेषु सम्भावयामि । नीलत्व-बहुत्वभ्राविमनोहारित्वैस्तदनुकारः । ते तव भ्रूविलासान् भ्रूवल्लरी-विभ्रमान नदीवीचिषु तटिनीतरङ्गेषु उत्पश्यामि सम्भावयामि । किम्भूतासु नदीवीचिषु ? प्रतनुषु कृशतरासु । यतस्त्वदेकैकावयवशोभाभाजन-मप्यमीषां जंगमाजंगमभावानां न कश्चिदपि रूपसामस्त्येन भवतीमनुहरति यमालोक्य मनागपि मनसि सुखं लभे । यावद्दुर्विधविध्युपालम्भव्याजेन निज-जायाया अनुरागमुत्पादयत्यसौ इति तात्पर्यार्थः । भीरु इति साभिप्राय अन्योऽपि यः किल भीरुको भवति तस्य सम्बन्धिवस्तु कचिदेकत्र न प्राप्यत इत्युक्तम् । अत्रोपमा ॥४४॥

धारासिक्तस्थलसुरभिण इति । हे मेघ आयुष्मन् परोपकारव्रतया प्रशस्त-जीवितो भवान् तामेवं ब्रूयात् , यथा हे अबले, ते तव सहचरो भर्त्ता मन्मुखे-नेदमाह । यथा हेऽबले पञ्चबाणः कामः मां क्षणोति पीडयति । कथंभूतं माम् ? प्रतनुमपि । पुनः कथंभूतम् ? अस्य त्वन्मुखस्य दूरीभूतं विप्रकृष्टम् । कथंभूतस्य त्वन्मुखस्य ? धारासिक्तस्थलसुरभिणः धारया सिक्तमार्द्रीकृतं यत् स्थलं तत् धारासिक्तस्थलं धारासिक्तस्थलवत् सुरभि सुगन्धि धारासिक्तस्थलसुरभि तस्य । अतः कारणात् त्वमेव विगणय

**त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-**
**मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।**
**अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे**
**क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥४६॥**

त्वमेव विचारय अस्मिन् घर्मान्ते प्रावृट्काले वासराणि कथं व्रजेयुः दिनानि कथं गच्छेयुः कष्टेनाऽपि न विलीयन्ते। कथंभूतानि वासराणि? दिक्संसक्तप्रविरलघनव्यस्तसूर्यातपानि दिक्षु संसक्ताः संलग्ना दिक्संसक्ताः दिक्संसक्ताश्च ते प्रविरलघनाश्च दिक्संसक्तप्रविरलघना दिक्संसक्तप्रविरलघनैः व्यस्तो विभागीकृतः सूर्यातपो येषु तानि ॥४५॥

त्वामालिख्य प्रणयकुपितामिति ॥ विरहदायिदैवोपालम्भनिभेन वल्लभायाः स्वखेदं निवेदयन्नाह। हे मेघ तामेवं ब्रूयात्। यथा हेऽबले तव सहचरो भर्त्ता मन्मुखेनेदमाह। हे भीरु, तावत् मुहुर्वारं वारं मम दृष्टिः अस्रैरालुप्यते रोदनजलैराच्छाद्यते। आलेख्योपग्रहणे समर्था न भवतीत्यर्थः। कथंभूतैरस्रैः? उपचितैः पुष्टीभूतैः वृद्धिं गतैः। तावत् किम्? यावत् अहमात्मानं निजाकारं ते तव चरणपतितं कर्तुम् इच्छामि पदे पतितं विधातुमभिलषामि वाञ्छामि। किं कृत्वा? त्वां शिलायामालिख्य दृषदि स्थापयित्वा आरोप्य। कैः? धातुरागैः सिन्दूरादिद्रवैः। कथंभूतां त्वाम्? प्रणयकुपितां प्रीतिरुष्टाम्। युक्तमेतत्, यत् मे मम दृष्टिः अस्रैरालुप्यते। अपिशब्दोऽत्र सम्भावने। अहमेवं सम्भावयामि। यत् कृतान्तो दैवं तस्मिन्नपि चित्रेऽपि नौ आवयोः सङ्गमं न सहते संयोगं सोढुं न शक्नोति। यतः कथंभूतः कृतान्तः? क्रूरो दुष्टः शत्रुरूपी। अत्र केचिदात्मानं स्वरूपेणैव तथा कर्तुमिच्छामीति... विदध्यात्। किञ्चास्रविलुप्तायां दृष्टौ रूपालेख्याङ्कनमेव दुःखकरं न तु शरीरप्रणतिः। अन्यच्च तस्मिन्नपि आवयोरिति निर्देशादावयोरालेख्यगतयोरपि सङ्गमं न सहत इति अतिशयख्यापनमण्य (?) कस्य नवरूपावस्थायां। न प्रत्युज्जीवतीति (?) अत्र रसस्यैव प्राधान्यम्। अत्र प्रेयः ॥४६॥

**मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-**
**र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।**
**पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां**
**मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥४७॥**
**भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां**
**ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।**

मामाकाशप्रणहितभुजमिति ॥ विरहदशाविसंस्थुलवेष्टितशोचनीयमात्मानं निवेदयन्नाह । हे आयुष्मन्, भवान् तामेवं ब्रूयात् यथा हे अबले, ते तव सहचरो भर्त्ता मन्मुखेनेदमाह । हे भीरु, वनस्थलीदेवतानां वनवसुन्धरावासिदेवतानां खलु निश्चयेन अश्रुलेशा रोदनजलकणा न न पतन्ति । अपि तु पतन्त्येव । केषु ? तरुकिशलयेषु द्रुमपल्लवेषु । कथंभूता अश्रुलेशाः ? मुक्तास्थूलाः मौक्तिकपृथवः । किं कुर्वतीनां वनस्थलीदेवतानाम् ? बहुशोऽनेकवारं मां पश्यन्तीनां विलोकयन्तीनाम् । कथंभूतं माम् ? आकाशप्रणिहितभुजम् आकाशे शून्ये प्रणिहितौ प्रसारितौ भुजौ करौ येनासौ आकाशप्रणहितभुजस्तम् । किमर्थम् ? ते तव निर्दयाश्लेषहेतोः गाढालिङ्गननिमित्तम् । ननु अत्र स्थितताया मम कथं गाढमालिङ्गनं घटत इति चेत्तत्राऽऽह । कथंभूतायास्ते तव कथमपि दैववशात् स्वप्नसन्दर्शनेषु लब्धायाः स्वप्नावलोकेषु प्राप्तायाः । केन ? मया । अत्र स्वप्नसन्दर्शनेष्विति बहुवचनं व्याप्त्यर्थम् । तेन नैकदा किन्तु अनेकदा तु भूतमिदमिति । द्वौ नञौ प्रकृत्यर्थं गमयतः । इति । यतो दुःखितं जनं दृष्ट्वा तद्दुःखदुःखिता दयालवो रुदन्त्यतो मामेवंविधमगाधदुःखवारिधिमग्नमवलोक्य करुणावत्यो वनदेवता अपि पादपदलक्षालनक्षमाणि प्रतिक्षणमश्रुजलानि विसृजन्ति । अत्र. यः ॥४७॥

भित्त्वा सद्यः किशलयपुटानिति ॥ प्रियाप्रमोदाय प्रणयोपचारं

आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥४८॥

संक्षिप्यन्ते क्षण इव कथं दीर्घयामास्त्रियामाः
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥४९॥

विरचयन्नाह । हे मेघ, भवान् तामेवं ब्रूयात, यथा हे अबले, तव सहचरो भर्त्ता मन्मुखेनेदमाह । हे गुणवति सर्वगुणालङ्कृतशरीरे ते तुषाराद्रिवाता हिमगिरिपवना मया आलिङ्ग्यन्ते, आश्लिष्यन्ते परिरभ्यन्ते । ते के ? ये दक्षिणेन प्रवृत्ताः दक्षिणेन दिग्भागेन प्रसृताः । किं कृत्वा ? सद्यस्तत्क्षणम् आगमनसमकालमेव किशलयपुटान् भित्त्वा विदार्य । केषाम् ? देवदारु-द्रुमाणाम् क्षीरं तत्क्षीणां (?) सुरतरूणाम् । अत एव कथंभूताः ? ये तत्क्षीर-स्रुतिसुरभयः तेषां देवदारूणां क्षीरं तत्क्षीरं तन्निस्यन्दस्तस्य स्रुतिः क्षरणं तया सुरभयः सुगन्धयः । कथम् ? इतीति कारणात् । इतीति किम् ? किल इति सम्भावयामि विचारयामि । यदि चेत् एभिर्वातैः पूर्वं प्रथमं तव अङ्गं स्पृष्टं भवेत् तव शरीरं संस्पृष्टं स्यात् । यदि किलेति पदद्वयमपि संभावनार्थम्, एकार्थपदद्वयोपादानं संभावनातिशयं ख्यापयति । अत्र प्रेयः ॥४८॥

संक्षिप्यन्ते क्षण इव कथमिति ॥ प्रियाविरहदुःखदुस्तरं क्षपावासं निरूपयन्नाह । हे आयुष्मन् परोपकारकतया प्रशस्तजीवितो भवान् तामेवं ब्रूयात् । यथा हे अबले, ते तव सहचरो भर्त्ता मन्मुखेनेदमाह । हे चटुलनयने चञ्चललोचने आभिस्त्वद्वियोगव्यथाभिः मम चेतः मम मनः अशरणं कृतम् अनालम्बं विहितम्, न विद्यते शरणमाश्रयो यस्य तदशरणम् । अत

**इत्यात्मानं बहु विगणयन्नात्मनैवावलम्बे**
**तत् कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ।**
**कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा**
**नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥५०॥**

एव कथंभूतं चेतः ? दुर्लभप्रार्थनम् दुर्लभवस्तुनि प्रार्थना यस्य तद् दुर्लभप्रार्थनं दुर्लभं प्रार्थयत इति दुर्लभप्रार्थनम् नन्द्यादेर्युरिति कर्त्तरि युप्रत्ययः । कथंभूताभिः त्वद्वियोगव्यथाभिः ? गाढोष्माभिः गाढो निबिड ऊष्मा तापो यासां तास्तथोक्तास्ताभिः अनन्ताद्बहुव्रीहौ डाजन्यतरस्याम् इति स्त्रिया ऊष्मा। कथं दुर्लभप्रार्थनं कृतम् ? इत्थम् अनेन प्रकारेण । इत्थं कथम् ? तथाहि त्रियामा रात्रयः क्षण इव कथं संक्षिप्यन्ते मुहूर्तमिव कथं संक्षिप्ता भवन्ति । इति कर्मकर्त्तरि प्रयोगः । एतच्च इदं प्रार्थयते । कथंभूतास्त्रियामाः ? दीर्घयामाः दीर्घा आयामवन्तो यामाः प्रहरा यासां ताः विशालप्रहराः । न केवलं त्रियामा रात्रयः अहरपि दिवसोऽपि कथं मन्दमन्दातपं स्यात् अतिमन्दातपं भवेत् । कासु ? सर्वावस्थासु । पूर्वाह्णमध्याह्नापराह्णलक्षणासु । अथ ग्रीष्ममध्यादिषु [ग्रीष्मशरदादिषु] दशासु । एतच्च इदं प्रार्थयते । कथमित्याक्षेपे यतो विरहिणां निर्विनोदत्वान्मनसः कालकलाऽपि कल्पशतायते । तव क्षपासंक्षेपं प्रार्थयते तदा हि दाहातिरेकखरतरतरणिकिरणपातादयः सम्पद्यन्ते इति सन्तापोपशमनाय तन्मार्दवमभिवाञ्छति । अत्र प्रेयस्वत् ॥४९॥

इत्यात्मानमिति । निजावस्थां निवेद्य दयितायां कर्त्तव्यतामुपदिशन्नाह । हे तोयद त्वं तामेवं वदेः, हे बाले, अहमात्मानमात्मनैव अवलम्बे धारयामि । किं कुर्वन् ? बहु विगणयन् प्रभूतं विचारयन् । कथम् ? इति वक्ष्यमाणक्रमेण । इतीति किम् ? कस्य अत्यन्तं नैरन्तर्येण सुखमुपनतं सुखं समुपस्थितम् वा अथवा कस्य एकान्ततो नैरन्तर्येण दुःखम् उपनतम् उपस्थितम् ? किं तर्हि ? अमुमेवार्थम् अर्थान्तरन्यासदृष्टान्तेन द्रढयति । इयं दशा कालकृतावस्था कदाचित्कस्मिंश्चित्प्रस्तावे नीचैर्गच्छति अधोगामिनी भवति । कदाचित्क-

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥५१॥

स्मिंश्चित्काले उपरि गच्छति उपरितने प्रदेशे याति। अत्र निदर्शनमाह। केन? चक्रनेमिक्रमेण चक्रस्य रथाङ्गस्य नेमिः बाह्यधारा तस्याः क्रमः परिपाटी अनुक्रमस्तेन। यथा चक्रधारा परिवर्त्तमाना सती यैवोपरि चलति सैव क्षणादधः प्रयाति। एवं दशायाः कालपरिणतेरपि सुखदुःखानुभावादैकरूप्यं न भवति। तत्तस्मात्कारणात् हे कल्याणि शोभनावयवे त्वमपि सुतरामतिशयेन कातरत्वं मा गमः अधीरत्वं मा यासीः। नन्वात्मानमिति पाठे नन्वभिमुखीकरणे कोमलामन्त्रणे वा। अर्थान्तरन्यासनिदर्शनयोः संसृष्टिरलंकृतिः। तथा च —

अर्थान्तरप्रवृत्तेन किंचित्तत्सदृशं फलम्।
सदसद्वा निदर्श्येत यदि स्यात्तन्निदर्शनम् [काव्यादर्श २।३४८] ॥५०॥

शापान्तो मे इति॥ विरहदहनदग्धाङ्गीं तामाश्वासयन्नाह। हे तोयद त्वं तामेवं वदेः, हे अबले, मे मम शापान्तो भविष्यति शापावसानं भविष्यति। क्व सति? शार्ङ्गपाणौ श्रीवासुदेवे भुजगशयनात् शेषपर्यङ्कात् उत्थिते सति ऊर्ध्वीभूते सति जागरिते सति इत्यर्थः। अतः कारणात् शेषान् चतुरः चतुःसंख्याकान् मासान् संवत्सरावयवान् गमय अतिवाहय। किं कृत्वा? लोचने मीलयित्वा नेत्रे निमील्य। लोकोक्तिरियम्। दुःखानुभवसुचिरकाल······पश्चादुत्थानानन्तरम् आवां द्वावपि तं तम् आत्माभिलाषं निजमनोरथं निर्वेक्ष्यावः उपभोक्ष्यावहे। कासु? क्षपासु रात्रिषु। कथंभूतासु क्षपासु? परिणतशरच्चन्द्रिकासु परिणताः प्रौढिं गताः शरच्च-

**भूयश्चाऽऽह त्वमपि शयने कण्ठलग्ना पुरा मे**
**निद्रां गत्वा किमपि रुदती सत्वरं विप्रबुद्धा।**
**सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे**
**दृष्टः स्वप्ने कितव रमयन् कामपि त्वं मयेति ॥५२॥**

न्द्रिका घनान्तसमयज्योत्स्नाः यासु तासु। कथंभूतमात्माभिलाषम्? विरहगुणितं वियोगाभ्यस्तं गुणकारेण संख्याविषयीकृतम्। कोऽर्थः? अस्मिन्वर्षे यावत्संख्याकः स्वाभिलापो नोपभुक्तोऽस्ति तमपि समस्तमेव एकदैवोपभोक्ष्यावहे। अत्र प्रेयः। विरहजनितमिति पाठे विरहे चित्ताभिप्रायेण विपयीकृतम् ॥५१॥

भूयश्चाऽऽह त्वमपि शयने इत्यादि ॥ पूर्वानुभूतार्थाभिज्ञानकथनेन प्रियायाः प्रत्ययमुत्पादयन्नाह। अथवा नैतन्मम कान्तेन समादिष्टम्, किं तर्हि त्वया घनेन स्वकपोलकल्पितमिति तस्या अभिप्रायमाशङ्क्य अनन्यसाधारणाभिज्ञानदानेन हृदयसंशयमपाकुर्वन्नाह। हे कल्याणि शोभनावयवे, न केवलं शेषान् मासान् गमय अतिवाहय। ते तव भर्त्ता सन्दिशन् भूयः पुनरपि आह ब्रूते। भूय इति पूर्वक्रियानुसन्धानम्। हे कल्याणि, त्वम् अपिशब्दबलात् अहमपि पुरा पूर्वं शयने सुप्तौ शय्यायां स्थितौ पश्चाच्छयनादनन्तरं त्वं मे मम कण्ठलग्ना सती निद्रां गत्वा सौख्यं प्राप्य किमपि केनाप्यविज्ञायमानेन कारणेन रुदती सती सत्वरं शीघ्रं यथा भवति एवं विप्रबुद्धा जागरिता। चशब्दः समुच्चये। 'सस्वरं विप्रबुद्धा' इति पाठे सस्वरं सशब्दं रुदती बाष्पं मुञ्चती विप्रबुद्धा इति योजनीयम्। न केवलं विप्रबुद्धा त्वया मे मम इति कथितम्। कथं यथा भवति? सान्तर्हासं यथा भवति अन्तर्हसितसंयुक्तं यथा स्यात्। किं कुर्वतो मे मम? असकृत् वारं वारं पृच्छतः। कथमितीति किम्? हे कितव हे धूर्त्त त्वं मया स्वप्ने दृष्टः स्वप्नकालेऽवलोकितः। किं कुर्वन्? कामपि अज्ञायमानां सपत्नीं

**एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा**
**माकौलीनादसितनयने मय्यविश्वासिनी भूः ।**
**स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-**
**दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥५३॥**

रमयन् क्रीडयन् कामयमानः। कितव इति स्वभावोक्तिः स्त्रीजनस्य। यदहमबला त्वं पुनर्धूर्त्तः सदैव यथा तथाऽपि मां वञ्चयसीति तदभ्यासवशात् स्वप्नेऽपि तथा दृष्टः; अतः कारणात् सपत्नीदुःखाद् रोदिमि। अत्र रसवत् ॥ ५२ ॥

एतस्मान्मामिति ॥ कालान्तराविनाशिनीम् आत्मप्रीतिं प्रियायाः प्रतिपादयन्नाह। हे तोयद त्वं तामेवं वदेः। हे असितनयने मेचकलोचने त्वं मयि विषये अविश्वासिनी मा भूः अविश्वासं मा कार्षीः। किं कृत्वा ? मां कुशलिनं विदित्वा जीवितं परिज्ञाय। कस्मात् एतस्मात् पूर्वश्लोकनिर्दिष्टात् अभिज्ञानदानात् अभिज्ञानकथनात् चिह्ननिवेदनात्। एतदभिज्ञानं पट्कर्णकं नास्तीति। कस्मान्मयि विषये अविश्वासिनी मा भूः ? आकौलीनात् जनापवादात्। जनाः किल एवं वदिष्यन्ति यत् तत्र स्थितस्य तस्य स्रक्चन्दनवनितादीनि संपत्स्यन्ते। तत्कथं त्वद्विरहेण ग्लानिमुपयास्यति ? ननु जना अपि एवं कथं वदिष्यन्तीति चेत्तत्राऽऽह। जना लोकाः स्नेहान् ध्वंसिन आहुः विनाशिनो ब्रुवते (?) हसितो जल्पन्ति। कथं किमपि अविचारितरमणीयं यथा भवति। क सति ? विरहे वियोगे सति। तथा चोक्तम्

दुर्मन्त्रान्नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनाद्
विप्रोऽनध्ययनात् कुलं कुतनयाच्छीलं खलोपासनात्।
मैत्री चाप्रणयात्समृद्धिरनयात्स्नेहः प्रवासाश्रयात्
स्त्री मद्यादनवेक्षणादपि कृषिस्त्यागात् प्रमादाद्धनम् ॥

.हि यस्मात्कारणात् ते स्नेहा उपचिताः सन्तः प्रवृद्धानुरागाः

**आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते**
**शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।**
**साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि**
**प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥५४॥**

सन्तः प्रेमराशीभवन्ति स्नेहनिचया जायन्ते। क विषये ? इष्टे वस्तुनि अभीष्टे वस्तुनि समीहिते पदार्थे। कस्मात् ? अभोगात् उपभोगाभावात् असेवयेत्यर्थः। अयमभिप्रायः। वस्तुनि प्राणभूते इष्टे वल्लभे स्नेहाः संयोगे सति तदुपभोगात् प्राप्तापचयस्यापि दिनकृतस्योपभोगेन नोपचीयन्ते नाऽपचीयन्ते तावन्मात्रा एव तिष्ठन्ति। विरहे पुनस्तदुपभोगाभावेन प्रत्यहमुपचयं गृह्णति। रसास्त एव स्नेहाः प्रेमराशीभवन्ति रसोपचयं प्राप्य स्त्यानीभूता विशिष्टवाल्लभ्यनिचयाः सञ्जायन्त इति भावः। अथवा स्निह्यन्ते अनुरज्यन्ते प्राणिन एष्विति स्नेहा विषया स्रग्वनिताचन्दनादयः स्नेहे स्फुटमिष्टे वस्तुनि। अर्थवशाद्विभक्तिपरिणामः। इष्टस्याभिमतस्य वस्तुनः प्रमदादिपदार्थस्य विरहे वियोगे विनश्यन्ति भोक्त्रा नोपभुज्यन्ते पुनस्ते उपचितानुरागाः सन्तः प्रेमराशीभवन्ति। स्वभावः खल्वेष विषयाणां यदप्राप्ता उपभोक्तुरधिकतरमेव रुचिमुत्पादयन्ति संप्रति तव वियोगे विषयान्तरमपि मया न सेव्यते, किमुत वनितान्तरम्। अतोऽप्यलीकात् लोकापवादादेवं मय्याशङ्कां मा कार्षीरिति स्वप्रीतिं प्रथयन् प्रियतमामतिमनोरमणीयां प्रत्याययति। अत्राक्षेपः ॥ ५३ ॥

आश्वास्यैवमिति ॥ इदानीं कान्तायाः प्रतिसन्देशलाभाय जलधरमभ्यर्थयते हे मेघ त्वं ममापि जीवितं धारयेथाः मदीयानपि प्राणान् अवलम्बेथाः पर्यवस्थापय स्थिरीकुरु। कथंभूतं जीवितम् ? प्रातःकुन्दप्रसवशिथिलं प्रातः प्रभाते यत् कुन्दप्रसवं कुन्दकुसुमं तद्वत् शिथिलमधीरं तत्। कैर्धारयेथाः ? तद्वचोभिः तस्याः सन्देशवाक्यैः मद्दयितायाः प्रतिसन्देशैः।

कच्चित् सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्याख्यातुं न खलु भवतो धीरतां कल्पयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतां शंसितार्थक्रियैव ॥५५॥

कथंभूतैस्तद्वचोभिः ? साभिज्ञानप्रहितकुशलैः अभिज्ञानसंयुक्तप्रस्थापितकुशलवार्ताभिः । कथंभूतः सन् ? शैलात् कैलासात् आशु शीघ्रं निवृत्तः सन् प्रत्यागतः सन् ! कथंभूतात्कैलासात् ? त्रिनयनवृषोत्खातकूटात् त्रिनयनस्य त्रिलोचनस्य महेश्वरस्य योऽसौ वृषस्तेन उत्खातानि उत्कीर्णानि कूटानि शिखराणि यत्र असौ त्रिनयनवृषोत्खातकूटः तस्मात् । किं कृत्वा ? तां सखीं भ्रातृजायाम् एवं पूर्वोक्तप्रकारेण आश्वास्य स्वस्थीकृत्य । यतः कथंभूतां ताम् । प्रथमविरहोदग्रशोकाम् आद्यवियोगोत्कृष्टदुःखाम् ॥ ५४ ॥

कच्चित्सौम्य व्यवसितमिति ॥ पुण्यजनः पयोदं सन्देशप्रार्थनामभ्युपगमयितुमाह । कच्चिदित्यभीष्टप्रश्ने । हे सौम्य हे सुहृद्दर्शन त्वया मे मम इदं सन्देशप्रणयलक्षणं बन्धुकृत्यं स्वजनकार्यं व्यवसितं कर्तुमङ्गीकृतं किं वा न हि । अथवा नैतत् पृच्छ्यते । अहं खलु निश्चयेन भवतस्तव धीरतां निर्वचनतां तूष्णीम्भावं प्रत्याख्यातुं निराकर्तुं न तर्कयामि न सम्भावयामि न विचारयामीति यावत् । भवता कथमङ्गीकृतमिति ज्ञायते इत्याशङ्क्य पुनराह । हि यस्मात्कारणात्त्वं याचितः प्रार्थितः सन् चातकेभ्यः जलं प्रदिशसि अम्भो ददासि । कथंभूतस्त्वम् ? निःशब्दोऽपि शब्दरहितोऽपि अतः कारणादहं मन्ये सतां महात्मनां प्रणयिषु याचकेषु विषये शंसितार्थक्रियैव प्रत्युक्तं भवति अभिलषितार्थनिष्पादनमेव प्रत्युत्तरं जायते । महात्मानो हि कर्मणा कर्त्तव्येन ब्रुवन्ति न तु वचसा । अत्रानुमानार्थान्तरन्यासयोः संसृष्टिः ॥ ५५ ॥

एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्मनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।
इष्टान् देशाञ् जलद विचर प्रावृषा संभृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥५६॥

तं सन्देशं जलधरवरो दिव्यवाचाऽऽचचक्षे
प्राणांस्तस्या जनहितरतो रक्षितुं यक्षवध्वाः ।

एतत् कृत्वा प्रियमनुचितमिति॥ कृतोपकारं वारिदमाशिषाऽभिनन्दयन्नाह । हे जलद त्वम् इष्टान् देशान् विचर अभीष्टान् विषयान् विहर । कथंभूतस्त्वम् सम्भृतश्रीः पुष्टीभूतकान्तिः उपचितलक्ष्मीकः । कया ? प्रावृषा वर्षाकालीन-ऋतुना । किं कृत्वा ? एतत् पूर्वोक्तं सन्देशादिकं मे मम प्रियं कृत्वा इष्टं विधाय । कथंभूतस्य मे मम ? अनुचितप्रार्थनावर्त्मनः न विद्यते उचितः प्रार्थनावर्त्म यस्य असौ अनुचितप्रार्थनावर्त्मा तस्य दिव्यानुभावप्राप्तसमस्त-वाञ्छितवस्तुत्वात् अयोग्ययाच्ञामार्गस्य । कस्मात्प्रियं कृत्वा ? सौहार्दात् अथवा मित्रभावात् सौजन्यलक्षणनिजगुणस्वाभाविक्याद्वा, अथवा मयि विषये अनुक्रोशबुध्या दुःखितोऽयमिति कृपामत्या । कथमिति इतीति किम् ? यदयं विधुरो विह्वलः दीनः अकारणात् । ते तव एवं यथा मे मम तथा तव पूर्वोक्तप्रकारेण विद्युता सह सौदामिन्या समं क्षणमपि मुहूर्त्तमपि विप्रयोगो वियोगो मा भूत् यथा मे मम वियोगोऽभूत् । इत्याशिषमाशास्त । कालाध्वनो-र्व्याप्तावित्याधारे द्वितीया । अत्रोर्जस्विसमुच्चयाशीर्दृष्टान्तानां सङ्करः । तथा च

यत्रैकत्रानेकं वस्तु परं स्यात्सुखावहाद्येव ।
ज्ञेयः समुच्चयोऽसौ त्रेधाऽन्यः सदसतोर्योगः ॥ [रुद्रट० ७।१९]

आशीर्नामाभिलषितवस्तुन्याशंसनम् [काव्यादर्श० २।३५७] ॥५६॥

तं सन्देशमिति ॥ मेघस्तं सन्देशं दिव्यवाचा आचचक्षे कथयामास प्रधानवाण्या अकथयत् । किं कर्तुम् ? तस्या यक्षवध्वाः प्राणान् रक्षितुं

प्राप्योदन्तं प्रमुदितमनाः साऽपि तस्थौ स्वभर्तुः
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु ॥ ५७ ॥

श्रुत्वा वार्तां जलदकथितां तां धनेशोऽपि सद्यः
शापस्यान्तं सदयहृदयः संविधायास्तकोपः ।
संयोज्यैतौ विगलितशुचौ दम्पती हृष्टचित्तौ
भोगानिष्टानविरतसुखान् भोजयामास शश्वत् ॥५८॥

इति श्रीकालिदासकृतौ मेघदूतकाव्ये उत्तरमेघः।

पालयितुम्। यतः कथंभूतः? जनहितकरः जनस्य हितं करोतीति जनहितकरः अथ जनहितरतः परोपकारी। किं कृत्वा? धनपतिपुरीं गत्वा अलकां प्राप्य। न केवलं धनपतिपुरीं गत्वा तां मत्कान्तां दृष्ट्वा। कथंभूतां धनपतिपुरीम्? प्रकटितपथां कथितमार्गाम् एवं एवं पूर्वोक्तप्रकारेण। केन? यक्षेण गुह्यकेन। किं कुर्वता यक्षेण? अनुक्रमेण परिपाट्या जल्पता कथयता। किं? सन्देशं न केवलं जलधरवरो मेघस्तं सन्देशं दिव्यवाचा आचचक्षे। साऽपि यक्षवधूरपि प्रमुदितमनाः स्वस्था हृष्टचित्ता बभूव। किं कृत्वा? स्वभर्तुः निजवल्लभस्य उदन्तं प्राप्य वार्तां श्रुत्वा। युक्तोऽयमर्थः। हि यस्मात् कारणात् केषां पुरुषाणामुत्तमेषु विषये प्रयुक्ता...प्रार्थना याञ्चा अभिमुखफला अभीष्टफला न स्यात् न भवेत् अपि तु स्यादेव ॥५७॥

श्रुत्वा वार्त्तामिति॥ धनेशोऽपि धनदोऽपि तौ दम्पती यक्षयक्षपत्न्यौ संयोग-युक्तौ कृत्वा शश्वत् निरन्तरम् इष्टान् भोगान् भोजयामास। किं कृत्वा? शापस्य अन्तं प्रान्तं विधाय। कथंभूतान् भोगान्? अभिमतसुखान् प्रथमं विरहवशात् अष्टाभिर्मासैः अभिलिषितान् वाञ्छयोपचितरसान्। कथंभूतौ दम्पती? विगलित-शुचौ अपास्तविरहवेदनौ। अत एव कथंभूतौ? हृष्टचित्तौ प्रमुदितमानसौ। कथं-भूतो धनेशः? तां जलदकथितां वार्त्तां सन्देशं श्रुत्वा आकर्ण्य सद्यस्तत्क्षणादेव अस्तकोप उपशमितरोषः। यतः कथंभूतो धनेशः? सदयहृदयः दयालुचेताः॥५८॥

इति श्रीकालिदासविरचितस्य मेघदूतकाव्यस्य सारोद्धारिणी टीका समाप्ता ॥ छ सम्बत् १५१७ वर्षे आषाढमासे कृष्णपक्षे एकादश्यां तिथौ भृगुदिने लिखितेयं ॥ छ ॥ छ ॥ etc. शुभं भवतु ॥ श्रीरस्तु अनपायिनी। कल्याणमस्तु ॥ आरोग्यमस्तु ॥

---

# टिप्पण्यः

२। पूर्वमेघे त्रिंशश्लोकादनन्तरं बहुषु पुस्तकेषु श्लोकोऽयं समुपलभ्यते। तत्र च प्रायेण प्रथमचरणे 'पत्रश्यामा' इति द्वितीये च चरणे 'प्रभेदात्' इति पाठौ दृश्येते।

द्वितीयश्लोकाच्चानन्तरं बहुत्र श्लोकान्तरमप्युलभ्यते। यथा— यत्रोन्मत्तेति। स चात्राष्टमश्लोकरूपेण सन्निविष्टः।

यद्यप्ययं श्लोको द्वितीयतृतीयौ च श्लोकौ प्रक्षिप्तावेव, तथाऽप्यत्र आनन्दोत्थेत्यत्र च समुद्भासमानः परिसंख्यालङ्कारः कस्य वा सचेतसश्चेतो नापहरेत्।

मुद्रितेषु पुस्तकेष्वत्रत्यः सप्तम एव श्लोको द्वैतीयीकत्वेनोपलभ्यते। चन्द्रकान्ततर्कालङ्कारमहोदयेन स्वीयेऽलङ्कारसूत्रेऽत्रत्य एव पाठः समुद्धृतः, श्लोकश्चायं क्रमालङ्कारस्योदाहरणत्वेनोपन्यस्तः। "देशकालाभ्यामर्थपरिपाटी क्रमः" इति हि तत्कृतं क्रमलक्षणम्। कमलकुन्दलोध्रकुरवकशिरीषनीपानां योऽयं शरद्धेमन्तशिशिरवसन्तग्रीष्मवर्षारूपकालक्रमेणोपन्यासः सेयं कालतोऽर्थपरिपाटी क्रम इति लक्षणसङ्गतिः प्रदर्शिता। उक्तञ्च तत्रैव—

शाब्दः क्रम एव यथासंख्यम्, आर्थस्तु क्रमो देशकालपरिपाटीभेदाद् भिद्यते इति प्राच्याः। पराचीनैस्तु यथासंख्यमात्रमङ्गीकृतं न त्वयं क्रमो लक्षितः। इमं केचिद्रत्नावलीत्याचक्षते।

अत्र केचित्पदेनाप्पयदीक्षितादीनां ग्रहणम्। तथाच कुवलयानन्दे दीक्षितचरणाः—

क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः।
चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ॥

अत्र चतुरास्यादिपदैर्वर्णनीयस्य ब्रह्मविष्णुरुद्रात्मता प्रतीयते इति प्रसिद्ध-सहपाठानां क्रमेण निवेशनं रत्नावलीति।

सरस्वतीकण्ठाभरणेऽप्ययं श्लोकः क्रमस्योदाहरणरूपेण सन्निवेशित। तत्रापि "अलकं बालकुन्दानुविद्धम्" इति पाठः।

अत्र सर्वतन्त्रस्वतन्त्रेण परमार्थत एव विद्यासागरेणेश्वरचन्द्रविद्यासागरेण यदुक्तं तदतिमात्रं समीचीनम्। तथाच तद्वचनम्—

"सप्तमीप्रक्रमभङ्गभिया अलके इति सप्तम्यन्तपाठकल्पनं न समीचीनम्। यदि सप्तम्यन्तः पाठः कालिदासस्याभिमतः स्यात्, तदाऽसौ 'बालकुन्दानु-विद्धम्' इत्यत्र 'बालकुन्दानुवेधः' इत्येव प्रणयेत" इति।

विद्युल्लतायां तु "अलका बालकुन्दानुविद्धा" इति पाठः सन्दृश्यते। व्याख्यातं च पूर्णसरस्वत्या—अलका बालकुन्दानुविद्धा इति पाठः, अलका-श्चूर्णकुन्तला इत्यमरसिंहेन पुंलिङ्गविधानात्, तथा प्रयोगबाहुल्यदर्शनाच्च" इति।

यद्यपि "अलकाः कुबेरपुर्यामस्त्रियां चूर्णकुन्तले" इति वदता मेदिनीकरेण अलकशब्दस्य पाक्षिकं नपुंसकत्वमपि स्वीकृतं तथाऽपि प्राचीनानां तदनभिमतमेव। पाणिनीये लिङ्गानुशासने कोपधानामकारान्तानां पुंस्त्वं विधाय चिबुकादीनां नपुंसकत्वं निर्दिष्टम्, कण्टकादीनां च पुंस्त्वं नपुंसकत्वं च। तत्र अलकशब्दस्य चिबुकादिषु कण्टकादिषु च पाठाभावादेतस्य पुंलिङ्गत्वं स्फुटमेव। हर्षवर्धनकृते लिङ्गानुशासने तु स्पष्टमेवालकशब्दस्य पुंलिङ्गेषु पाठः।

अत्र दक्षिणावर्तः "अलकं बालकुन्दानुविद्धम्" इत्यपपाठः। अलक-शब्दस्य पुंलिङ्गत्वात्। "अलकाश्चूर्णकुन्तला" इत्यमरः। अलके बाल-

कुन्दानुवेध' इति पाठः। अस्मिन् पाठे रीतिभङ्गश्च न भवति" इति।

द्वितीये चरणे 'आनने श्रीः' इत्येतस्य स्थाने बहुत्र 'आननश्रीः' इति समस्तं पदमुपलभ्यते। स एव च पाठः साधीयान् इति विद्यासागरपादाः।

४। 'रतिफलम्' इत्यत्र कैश्चिद् 'रतिरसम्' इति पठ्यते 'रतौ सुरते रसोऽनुरागो यस्मात्' इति व्यधिकरणबहुव्रीहिमाश्रित्य च व्याख्यायते।

५। श्लोकोऽयं प्रक्षिप्त इति मन्यते बहुभिः। तत्रापि "पत्रच्छेदैः" "मुक्तालग्नस्तनपरिकरैः" इत्येव पाठावुपलभ्येते।

६। विश्वेश्वरपण्डितविरचितेऽलङ्कारकौस्तुभे श्लोकोऽयमुदात्तालङ्कारस्योदाहरणत्वेनोपन्यस्तः। तत्र प्रथमार्धमेवमुपलभ्यते—

नीवीबन्धोच्छ्वसनशिथिलं यत्र यक्षाङ्गणानां
वासः कायादनिभृतकरेष्वाक्षिपत्सु प्रियेषु।

सरस्वतीकण्ठाभरणे

वस्तुनो वा स्वभावेन शक्तेर्वा हानिहेतुना।
अकृतात्मीयकार्यः स्यादहेतुर्व्याहतस्तु यः॥

इति अहेतुं लक्षयित्वा तदुदाहरणत्वेनायमेव श्लोकः प्रदर्शितः।

उक्तञ्च तत्र—

वस्तुनः स्वभावेन व्याहतो यथा—नीवीबन्धोच्छ्वसनशिथिलम् इत्यादि। अत्र रत्नप्रदीपनिर्वापणे चूर्णमुष्टेरपरित्यक्तस्वरूपस्यापि विघाते रत्नप्रदीपाख्यवस्तुस्वभावः कारणमित्ययं वस्तुस्वभावेन व्याहतो नामाहेतुभूतः इति। अत्र प्रथमचरणे "नीवीबन्धोच्छ्वसनशिथिलं यत्र यक्षाङ्गणानाम्" इति, द्वितीये "क्षौमं रागात्" इति चतुर्थे च "विफलप्रेरणा" इति पाठा दृश्यन्ते।

ईश्वरविद्यासागरमहोदयेन प्राथमिके पादे 'यक्षाङ्गणानाम्' इत्येव पाठः साधीस्त्वया मन्यते। अयमेव च पाठोऽलङ्कारनिबन्धेषु समुपलभ्यते। अस्माकं तु 'विम्बाधराणाम् इत्येव पाठः समीचीनतया प्रतिभाति। यद्यपि यक्षाङ्गणानाम् इत्युक्तावेव तासामनितरसाधारणरूपलावण्यादि प्रतीयते, तथाऽपि

सामान्यापेक्षया विशेषस्यैव सहृदयहृदयहारित्वाद् विशेषेण बिम्बाधराणामित्युक्तिरेव कामपि चमत्कारकणिकां प्रादुष्करोति।

बिम्बाधरशब्दस्य च तात्पर्यं पूर्णसरस्वत्येत्थं प्रदर्शितम्। "बिम्बाधराणां पुनः पुनः प्रियैर्गाढलीढतया स्फुटोपलब्धबिम्बीफलसाम्यं दन्तवासो यासाम्। अनेन तादृशामधरमणीनामेव रसराज्यनिर्वहणगर्वदुर्वारत्वादितराङ्गनानां कः साहायकावकाश इति ध्वन्यते।"

द्वैतीयीके चरणे "वासः कायात्" इति पाठस्त्वकिञ्चित्करं एव।

९। अत्र "अक्षय्यान्तर्भवननिधयः" "बद्धालापा" इति पाठभेदौ।

१०। अत्र विद्यासागरपादाः—"स्वजलकणिकादोषमुत्पाद्य" "नवजलकणैर्दोषमुत्पाद्य"—उभावेव पाठौ न समीचीनौ स्वजलकणिकादोषमित्यत्र आलेख्यदूषणे स्वजलकणिकानां करणत्वात् स्वजलकणिकाभिर्दोषम् इत्येवंरूपस्यासमस्तस्यैव प्रयोगस्यौचित्यात्, नवजलकणैरित्यत्र च नवेति विशेषणस्यानुपयोगात्। तस्मात् निजजलकणैर्दोषमुत्पाद्य इत्येवंरूप एव पाठः समीचीनतया प्रतिभाति" इति।

१२। "प्रियतमभुजोच्छ्वासितालिङ्गितानाम्" इत्येव पाठो बहुत्र समुपलभ्यते। प्रियतमानां भुजैः सञ्जातोच्छ्वासं यथा भवति तथा गाढमुपगूढानामिति तदर्थः। अत्र सारोद्धारिणीधृत एव पाठः साधीयान् इति प्रतिभाति। विद्यासागरमहोदयेनात्र प्राथमिक एव पाठो बहुमन्यते।

तृतीयचरणे "चोदिताश्चन्द्रपादैः" "चन्द्रपादैर्निशीथे" इति च पाठान्तरे। निशीथे इति अत्यायतरतसम्भूतस्य श्रमस्य प्राबल्यं ध्वन्यते। यतः स्वत एव शीतलतरेण मध्यरात्रसमयेनाप्यनपनेया ग्लानिश्चन्द्रकान्तजलबिन्दुसन्तानैरवलुप्यते इति, व्यालुम्पन्ति विशेषेण समन्ताच्च नाशयन्ति।

१३। "साक्षाद्वसन्तम्" इति पाठान्तरम्।

१४। श्लोकोऽयं बहुभिर्व्याख्याकृद्भिरुपेक्षित इति प्रक्षिप्तः सम्भाव्यते।

१५। "गृहानुत्तरेण" इति "यस्योद्याने" इति च पाठान्तरम्। अत्र भट्टोजिः—कथं तर्हि धनपतिगृहादुत्तरेणास्मदीयम् इति।......चिन्त्यमेवेद-

मिति हरदत्तः। उत्तरेणेति तृतीयैकवचनान्तं तोरणेनेत्यनेन समानाधिकरणम् इत्यन्ये। अपरे तु धनपतिगृहानिति शसन्तं पठन्ति।"

१६। 'विकचकमलैः' इत्यत्र 'कमलमुकुलैः' इति पाठान्तरम्, न ध्यास्यन्ति इत्यत्र च 'नाध्यासन्ति' इति।

१७। 'यस्यास्तीरे' इति पाठान्तरम्।

अत्र 'कनककदलीवेष्टनः प्रेक्षणीय' इति हरगोविन्दधृतं पाठमधिकृत्य "अयमेव पाठः साधीयान्। समस्तपक्षे कनककदलीनां वेष्टनमेकमेव क्रीडाशैलस्य प्रेक्षणीयत्वे हेतुः। असमस्तपक्षे तु इन्द्रनीलरचितशिखरत्वं कनककदलीवेष्टनत्वञ्चेत्युभयं तत्र हेतुर्भवति। एतदेव युक्ततरं प्रतिभाति।" इत्युक्तं विद्यासागरपादैः।

१८। "केसरस्तत्र", "प्रत्यासन्नः" इति पाठान्तरे।

१९। शिञ्जदित्यत्र शतुर्दौर्लभ्यादर्वाचीनैः शिञ्जावलयसुभगैः इति पाठः कल्पित इति प्रतिभाति। व्याकरणनिबन्धेषु शिञ्जद्वलयसुभगैरित्येव पाठः सन्दृश्यते।

"क्रान्तया नर्तितो मे" इति पाठान्तरम्।

२०। "मन्दच्छायम्" इति पाठान्तरम्।

२१। "तत्परित्राणहेतोः" इति पाठान्तरम्। तस्यास्तव सख्याः परित्राणहेतोः रक्षाकारणात् इत्यर्थः।

२२। "शिखरिदशना" इति पाठान्तरम्।

२३। "जानीयाः" इति पाठान्तरम्।

चतुर्थचरणे "जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा" इति पूर्णसरस्वतीसम्मतः पाठः। व्यक्तिविवेककृताऽप्युक्तम्—

"व्याख्यातारोऽप्यलीकविद्वन्मानितया प्रायेणापव्याख्यानैर्न केवलमात्मानं यावत् तत्रभवतो महाकवीनपि दूषयन्तो दृश्यन्ते। तद्यथा—

तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठागुरुषु दिवसेष्वेषु गच्छत्सु बालां
जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥

इत्यत्र पाठमिममबुद्ध्वैव कलितकविहेवाकाः पराकृतप्रतीतिचारुतातिशयास्ते

अवैमि तदवज्ञानाद् यत्नापेक्षो मनोरथः

इत्यादौ दृष्टामपि वाक्यार्थकर्मतां मन्यतेरपश्यन्तो बालाकर्मतामस्य मन्यमाना स्वरसन्धिवशाद्विकृतमिवशब्दमेव भ्रमाद् वाशब्दं परिकल्प्यापव्याख्यामारभन्ते। न ह्येवमर्थस्य वैचित्री काचित् समुन्मिषति। नापि महाकवेः कालिदासस्यान्वयगतिरियं क्वचनापि प्रबन्धेऽवधारितपूर्वा यदयं रसनिधाने काव्ये व्याधिमिव वाशब्दमिवार्थे प्रयुञ्जीतेति। कथं तर्हि 'चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली'ति तस्यैव कवेरयं प्रयोगः। उच्यते। श्लिष्टत्वादविभावितार्थपाठेन केनचित् कल्पितोऽयं पाठः। स हि जलनिधिर्निशेवेति द्रष्टव्यः।" इति।

२४। हस्ते न्यस्तमिति पाठान्तरम्।

२५। 'रसिके' इत्यत्र 'निभृते' इति पाठान्तरम्। निःशब्दे इति वा निर्जनप्रदेशे इति वा तदर्थः। दक्षिणावर्तेन तु 'गिरिके' इति पाठं स्वीकृत्य उक्तम्—गिरिके! मार्जारादिसन्निधानात् पञ्जराभ्यन्तरं प्रविश्य बालमूषिकेव बिभेतीति बालमूषिकानामान्तरेण शारिकाया उपालम्भपूर्वं सम्बोधनम्। "गिरिका बालमूषिका" इत्यमरः।

२६। 'तन्त्रीरार्द्राः' इति पठित्वा तन्त्रीरिति बहुवचननिर्देशेन परिवादिनीपरिवादनकौशलस्य सूचितत्वाद् वैदग्ध्यं ध्वनितम्। इति व्याख्यातं भरतेन।

२७। 'विरहदिवसस्थापितस्य', 'देहलीदत्तपुष्पैः', 'मत्सङ्गं वा' 'आसादयन्ती' 'रमणविरहे ह्यङ्गनानाम्' इति पाठान्तराणि।

२८। "या मयोद्वेष्टनीया" इति पाठान्तरम्।
इतः परं च—

अन्वेष्टव्यामवनिशयने सन्निकीर्णैकपार्श्वां
तत्पर्यङ्कप्रगलितनवैश्छिन्नहारैरिवास्रैः।
भूयो भूयः कठिनविषमां सारयन्तीं कपोला-
दामोक्तव्यामयमितनखेनैकवेणीं करेण॥ इति प्रक्षिप्तः श्लोकः।

२९। इत आरभ्य श्लोकत्रितये आधिक्षामादयो द्वितीयान्ता एवोपलभ्यन्तेऽन्यत्र।

भरतमल्लिकेन क्षणमिवेति पाठं स्वीकृत्य व्याख्यातम्—

"क्षणमिति लोकोक्त्या अल्पकालोपलक्षणम्। यद्यप्यमरकोषादौ "तास्तु त्रिंशत् क्षणः" इति क्षणशब्दस्य पुंस्त्वं दृष्टं तथाऽपि 'क्षणमिव गमितो वासरो वासवेने'ति 'नीता रात्रिः क्षणमिव मये' त्यादिप्रयोगदर्शनात् नपुंसकत्वमव्याहतम्" इति।

"विरहजनितैः" इत्यत्र "विरहमहतीम्" इति पाठान्तरम्।

३०। "मत्सम्भोगः क्षणमपि भवेत्" इति पाठान्तरम्।

३१। "खेदयेद्विप्रयोगः", "पीडयेन्मद्वियोगः" इति प्रथमचरणे पाठान्तरे। "अवनिशयनां सौधवातायनस्थः" "अवनिशयनां सन्नवातायनस्थः" (सन्नवातायनस्थः निकटगवाक्षस्थः सन्। यद्वा सन्नवातायनस्थः भग्नगवाक्षस्थितः सन्। अनेन भवनस्य दुरवस्था प्रोक्तेति भावः) "सद्मवातायनस्थः" इति पाठान्तराणि।

अस्मात् श्लोकादनन्तरम्—

स्निग्धाः सख्यः क्षणमपि दिवा तां न मोक्ष्यन्ति तन्वी-
मेकप्रख्या भवति हि जगत्यङ्गनानां प्रवृत्तिः।
स त्वं रात्रौ जलद शयनासन्नवातायनस्थः
कान्तां सुप्ते सति परिजने वीतनिद्रामुपेयाः॥

इति प्रक्षिप्तः श्लोकः।

३५। पेशलमित्यत्र "कोमलमि"ति "पेलवमि"ति च पाठान्तरम्। नवजलमयमित्यत्र "जलनवमयमि"ति पाठान्तरं प्रदर्श्योक्तं विद्यासागरमहोदयेन, अयमेव पाठः साधीयान् नवजलमयमिति पाठे नवेतिविशेषणस्यानुपयोगात् इति।

३५। "मीनक्षोभाकुलकुवलयश्रीतुलाम्" इति पाठान्तरम्।

३६। अत्र विद्यासागरेण "कनककदलीस्तम्भगौरः" इति पाठान्तरमुपनिबध्योक्तम्—अयमेव पाठः साधीयान्। कनककदलीवेष्टनप्रेक्षणीय इत्यत्र अलकायां कनककदलीनां बाहुल्यदर्शनादुपमितिकाले तासामेव बुद्धिस्थत्वात्।

३७। अन्वास्यैनाम् इत्यत्र "तत्राऽऽसीनः" "अन्वासीनः" इति पाठान्तरे, "सहस्व" इत्यत्र च "सहेथाः" इति पाठान्तरम्।

३८। तृतीयचरणे 'विद्युत्कम्पस्तिमितनयनाम्' इति पठित्वा भरतेन 'विद्युतः कम्पेन चलनेन स्तिमिते निश्चले नयने लोचने यस्यास्तादृशीम्' इति व्याख्यातम्, 'विद्युता सह कम्पते इति विद्युत्कम्पो मेघः, तस्य सम्बोधनं हे विद्युत्कम्पे'ति रामनाथेन व्याख्यातम्, 'विद्युत्कम्पेन तडित्-प्रकाशेन स्तिमितनयनाम् आकस्मिकप्रकाशात् स्थिरीकृतलोचनाम्' इति हरगोविन्देन व्याख्यातम्।

कल्याणमल्लेन पुनः विद्युद्गर्भस्तिमितनयनाम् इति पाठो धृतो, व्याख्यातश्च—हे विद्युद्गर्भ विद्युद् गर्भे यस्य स तथा सम्बोधनद्वारेणोपदेशं ददाति। भवता अन्तर्गतविद्युता तत्र भवितव्यमिति भावः। अन्यथा भीरुस्वभावत्वाद्वनितानां सा भेष्यतीति।

"धीरः स्तनितवचनैः" इत्यत्र "धीरध्वनितवचनैः" ( मन्दगर्जितरूपवाक्यैः, यद्वा हे धीरेति सम्बोधनम् ) इति "धीरस्तनितवचनः" इति च पाठान्तरम्।

३९। "तत्सन्देशान्मनसि निहितात्" इति पाठान्तरम्।

४०। सम्भाव्य इत्यत्र "सम्भाष्य" इति पाठान्तरम्, स्वागतं भवत इत्यादिनालप्य इति च तदर्थः।

"सुहृदुपहृतः" इत्यत्र "सुहृदुपनतः" इति "सुहृदुपगतः" इति च पाठान्तरे।

४१। "ब्रूया एवमि"ति द्वितीयचरणे पाठः। "वियुक्तः" इत्यत्र "वियुक्तामि"ति पाठान्तरम्।

चतुर्थचरणे "पूर्वाशास्यम्" (पूर्वं प्रथमम् आशास्यम् आशंसनीयं प्रार्थनीयम्) इति पाठान्तरमेव समीचीनतया प्रतिभाति।

"भूतानां हि क्षयिषु करणेष्वाद्यमाश्वास्यमेतत्" इति भरतधृतः पाठः, हि यतः भूतानां प्राणिनां क्षयिषु नश्वरेषु करणेषु शरीरेषु एतत् कुशलम् आद्यं प्रथमम् आश्वास्यम् आश्वसनीयम् अवधानीयम्, जीवने सति मङ्गलादिकं सर्वं भविष्यतीति भाव इति च तद्व्याख्यानम्।

४२। "उष्णोच्छ्वासम्" इत्यत्र "दीर्घोच्छ्वासम्" इति पाठान्तरं प्रदर्शयतोक्तं विद्यासागरमहोदयेन—अयमेव पाठः समीचीनः, प्रतनु तनुना इत्यादावुभयोरेव पदयोः समानार्थप्रतिपादकतया उष्णोच्छ्वासं समधिकतरोच्छ्वासिनेत्यत्रापि तथात्वं युक्तम्। समधिकतरोच्छ्वासिनेत्यस्य दीर्घनिश्वासिनेत्यर्थः। उष्णोच्छ्वासमित्यत्र दीर्घोच्छ्वासमिति पाठे उभयोः समानार्थकता सम्भवति, न त्वितरथा।

"सङ्कल्पैस्तैः" इत्यतः "सङ्कल्पैस्ते" इति पाठान्तरम्। अत्र विद्यासागरचरणाः—अयमेव पाठः साधीयान् तैरिति तच्छब्दप्रयोगस्यानुपयोगात्, युष्मच्छब्दप्रयोगाभावे त्वदीयमङ्गमित्यस्य बोधयितुमशक्यत्वाच्च।

४३। "शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्"

"अत्र ते इति पदस्य न कश्चिदुपयोगो लक्ष्यते, तदिति पदञ्चाध्याहार्यम्, ईदृशश्चाध्याहारः कवेरशक्तिं द्योतयति। एकश्चोपयोगविरहितः प्रयोगः, अपरश्चाशक्तिद्योतकोऽध्याहारः इति दोषद्वयमापतति। ते इत्यत्र तदिति पाठे दोषद्वयस्यैव परिहारः स्यात्" इति विद्यासागरः।

४४। "चकितहरिणीप्रेक्षणे" "गण्डच्छायां" "एकस्मिन्" इति पाठान्तराणि।

४५। प्रक्षिप्तोऽयं श्लोकः। अत्र च द्वितीये चरणे "क्षिणोति" चतुर्थे च "प्रविततघन" इति पाठान्तरे।

४६। जयरथेनालङ्कारसर्वस्वविमर्शिन्यां रसध्वनेरुदाहरणत्वेनोपन्यस्तोऽयं श्लोकः।

४९। "संक्षिप्येत"..."दीर्घायामा त्रियामा" इति पाठान्तरे।

५०। 'नन्वात्मानम्' 'आत्मना नावलम्बे' ( आत्मना स्वयमेव ह्यात्मानं मनो नावलम्बे अपि तु धैर्यं प्रापयामि), 'उपगतम्' इति पाठान्तराणि।

नीचैर्गच्छत्युपरि च दशा—समानोक्तिर्भासकृते स्वप्नवासवदत्ते—

कालक्रमेण जगतः परिवर्त्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः॥ इति।

५१। 'शेषान् मासान्' इत्यत्र 'मासानेतान्' इति "मासानन्यान्" इति च पाठान्तरे। 'विरहगुणितम्' इत्यत्र 'विरहगणितम्' इति 'विरहजनितम्' इति च पाठान्तरे।

५२। "अत्र सागरः—अपिशब्दस्यात्र न कश्चिदुपयोगो लक्ष्यते तस्मात् त्वमपीत्यपिशब्दवान् पाठः प्रामादिक एव, त्वमयि इति कवेरभिमतः पाठ इति प्रतिभाति।" अयि इति यक्षस्य स्वपत्नीसम्बोधनम्। "भूयश्चापि त्वमसि शयने कण्ठलग्ना पुरा मे" इति भरतसम्मतः पाठः। अपि एवं सम्भाव्यते पुनश्च शयने शय्यायां मम कण्ठलग्ना कण्ठासक्ता त्वं पुरा असि भविष्यसि। पुराशब्दयोगे भविष्यति की। पूर्वं यथा त्वं मम कण्ठलग्ना आसीः, तथा पुनरपि कण्ठलग्ना भविष्यसीत्यर्थः आश्वासवचनमेतत्। पूर्ववृत्तं स्मारयन्नाह निद्रां गत्वेत्यादिः।

सत्वरमित्यत्र 'सस्वरमि'ति पाठान्तरम्।

५३। अत्र "स्नेहानाहुः किमपि विरहव्यापदस्ते ह्यभोग्या हृष्टे" इति भरतधृतः पाठः। स्नेहान् प्रेमाणि किमपि अनिर्वचनीयस्वरूपान् आहुः वदन्ति लोका इत्यर्थात्। कीदृशान् स्नेहान्? विरहे विच्छेदेऽपि विगता आपद् विपत्तिर्येषां तादृशान् सततं स्नेहपात्रस्य स्नेहानुस्मरणात्, हि

यस्मात् ते स्नेहाः अभोग्या विरहे अभुज्यमानाः अत एव उपचितरसा उपबृंहितरसाः सन्तः वस्तुनि पदार्थे स्नेहपात्रे दृष्टे सति प्रेमराशीभवन्ति स्नेहपुञ्जीभवन्ति। प्रेमपात्रदर्शनेन तत्राऽऽधिक्यं व्रजन्तीत्यर्थः।

५४। "आश्वास्यैनाम्" "प्रथमविरहादुग्रशोकां" "सखीं मे" "शैलादस्मात्" इति पाठान्तराणि।

५५। "प्रत्यादेशान्न खलु भवतो धीरतां तर्कयामि।"

'लिपिकरप्रमादवशादापतितं पाठवैकल्यमनुद्भाव्य श्लोकपादस्यास्य व्याख्यातत्वान्मल्लिनाथादीनां व्याख्यानादर्थग्रहस्तात्पर्यावगमो वा नोपपद्यते यथा—

प्रत्यादेशात् करिष्यामीति प्रतिवचनात्। "उक्तिराभाषणं वाक्यमादेशो वचनं वचः" इति शब्दार्णवे। भवतस्तव धीरतां गम्भीरत्वं न तर्कयामि न समर्थये खलु इति मल्लिनाथः।

न प्रत्यादेशात् अनिराकरणात् न करिष्यामीत्यवचनात् हेतोः भवतो धीरताम् अवाचालतां तर्कयामि। इति हरगोविन्दः।

प्रत्यादेशात् निःशब्दोऽसीति वक्ष्यमाणत्वेन प्रत्युत्तरस्य निराकरणात् भवतो धीरतां धैर्यं न खलु तर्कयामि उत्प्रेक्षे। अपि तु तर्कयाम्येव। खलु निषेधे। द्वौ निषेधौ प्रकृतमर्थं गमयत इति वृद्धाः।

कल्याणमल्लस्तु प्रत्यादेशान्नेति पाठमनादृत्य पाठान्तरं कल्पयित्वा व्याख्यातवान्। यथा—

प्रत्याख्यातुं न खलु भवतो धीरतां तर्कयामि भवता धीरतां धीरत्वं प्रत्याख्यातुं निराकर्तुं न तर्कयामि। एतदप्यकिञ्चित्करं तर्कणप्रत्याख्यानयोरेककर्तृकतापातस्य दुर्निवारत्वात् तर्कणं यक्षनिष्ठं प्रत्याख्यानं मेघनिष्ठमित्यस्यानपलपनीयत्वात्।

वस्तुतस्तु प्रत्यादेशान्न खल्वित्यत्र तालव्यशकारात् परम् आकारापाठः प्रामादिकः, तत्परित्यागे तु सर्वमनाकुलं स्यात्। यथा—

"प्रत्यादेशन्न खलु भवतो धीरतां तर्कयामि।" भवतो धीरतां गम्भीरत्वं

तूष्णीम्भावमिति यावत् प्रत्यादेशं प्रत्याख्यानं न तर्कयामि न समर्थये खलु। तवायं तूष्णीम्भावो न प्रत्यादेशद्योतक इति भावः।' इति विद्यासागरपादः।

५७।५८। प्रक्षिप्ताविमौ श्लोकौ। ५७ श्लोकः षट्चरणक इति टीकातोऽवगम्यते। मूले पुनश्चरणचतुष्टयमेव सर्वत्रोपलभ्यते।

इत ऊर्द्धं केषुचित् पुस्तकेषु श्लोकान्तरमुपलभ्यते—

इत्थम्भूतं सुरचितपदं मेघदूतभिधानं
कामक्रीडाविरहितजने विप्रयोगे विनोदः।
मेघस्यास्मिन्नतिनिपुणता बुद्धिभावः कवीनां
नत्वार्यायाश्चरणकमलं कालिदासश्चकार॥

---

# श्लोकसूची

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत्-प्रतिभा रवेः
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| August, 1933. | १८५५ शकीये श्रावण १६श-वर्षस्य ४र्थ-संख्या | Vol. XVI No. 4. |

## विद्याप्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदशर्महालदारः ]

कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। कर्मजन्यं फलस्वाम्यं कर्मजन्यफलभोक्तृत्वम्। स च 'यजेत स्वर्गकाम' इत्यादिरूपः। स्वर्गमुद्दिश्य यागं विदधताऽनेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते।

अधिकारविधिर्द्विविधः क्रत्वर्थः पुरुषार्थश्चेति। क्रत्वर्थः पुनर्नैमित्तिकानैमित्तिकभेदेन द्वेधा भवति। तत्राद्यो यथा 'भिन्ने जुहोती'ति। एतदुदाहरणं शास्त्रदीपिकाया द्वादशाध्याये दर्शितम्। तत्र विध्यतिक्रमे हि दोषः, अङ्गनाशे चापि विध्यतिक्रमः प्रतिपादितः। अन्त्यस्तु द्विविधोः विहितातिक्रमनिमित्तको निषिद्धाचरणनिमित्तकश्चेति।

पुरुषार्थेऽधिकारविधिस्त्रिविधः काम्यो नैमित्तिकः संवलितश्चेति। काम्यो द्विविधः कर्मफलसम्बन्धपरो गुणफलसम्बन्धपरश्चेति। तत्राद्यो

यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति। द्वितीयो यथा 'दध्नेन्द्रियकामस्य जुहुयादि'ति। नैमित्तिकश्च द्विविधो नियतनिमित्तकोऽनियतनिमित्तकश्चेति। तत्राद्यो यथा 'यावज्जीवमग्निहोत्रं जुहोती'ति। अन्त्यो यथा 'यस्याहिताग्नेरग्निर्गृहान् दहेत् क्षामवतेऽग्नये पुरोडाशमष्टाकपालं निर्वपेदि'ति। संवलितश्चापि द्विविधः—निमित्तजन्यदोषनाशफलसम्बलित इतरफलसम्बलितश्चेति। तत्राद्यो द्विविधः—विहितातिक्रमनिमित्तको निषिद्धाचरणनिमित्तकश्चेति। विहितातिक्रमनिमित्तको यथा 'योऽमावस्यां पौर्णमासीं चातिपातयेदग्नये पथिकृतेऽष्टाकपालं निर्वपेदि'ति, निषिद्धाचरणनिमित्तको यथा 'यद्येकं यूपमुपस्पृशेत्, एष ते वायो' इति ब्रूयादिति। इतरफलसंबलितो यथा 'वैश्वानरं द्वादशकपालं निर्वपेदि'त्यादिः पुत्रजातेष्टिविधिः। साङ्गप्रधानकर्मप्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स च स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। अतो ह्यङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम्।

क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा यस्यापि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि षट् प्रमाणानि सन्ति। तत्र क्रमपरवचनं श्रुतिः। तच्च द्विविधं केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति। तत्र 'वेदं कृत्वा वेदिं करोती'ति केवलक्रमपरम्, वेदिकरणादेर्वचनान्तरप्राप्तत्वात्। 'वषट्कर्त्तुः प्रथमभक्ष' इति तु क्रमविशिष्टपदार्थपरम्, एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात्। सेयं श्रुतिरितरप्रमाणापेक्षया बलवती। प्रयोजनवशेन यः क्रमनिर्णयः सोऽर्थक्रमः। यथा 'अग्निहोत्रं जुहोति, यवागूं पचती'त्यग्निहोत्रयवागूपाकयोः। अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते। स च पाठक्रमाद् बलवान्।

पदार्थबोधकवाक्यानां क्रमः पाठक्रमः। ततः पदार्थानां क्रम आश्रीयते। स च द्विविधः—मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्यानां पाठाद् यः क्रम आश्रीयते स मन्त्रपाठादेव। स चायं मन्त्रपाठो ब्राह्मणपाठाद् बलीयान्। ब्राह्मणवाक्यापेक्षया

मन्त्रपाठस्यान्तरङ्गत्वात्। प्रयाजानां 'समिधो यजति', 'तनूनपातं यजति' इत्येवं विधिपाठक्रमाद् यः क्रमः स ब्राह्मणपाठक्रमादेव। यद्यपि ब्राह्मणवाक्यमर्थं विधाय कृतार्थं तथापि प्रयाजादीनां क्रमस्मारकान्तरस्याभावात् तदेव क्रमस्मारकत्वेन स्वीक्रियते।

स्थानं चोपस्थितिः। यस्य हि देशे सोऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथमानुष्ठानम्। प्रधान-क्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः। सहप्रयुज्यमानेषु प्रधानेषु संनिपातिना-मङ्गानामावृत्त्याऽनुष्ठाने कर्त्तव्ये हि द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद् यः क्रमः स तु प्रवृत्तिक्रमः। एवं संक्षेपतो निरूपितः षड्विधक्रमनिरूपणेन प्रयोगविधिः। पुनरपि विधिरेकादशविधः सामान्यविधिर्विशेषविधिः प्रतिप्रसव-विधिरभ्यनुज्ञाविधिरुपसंहारविधिर्व्यवस्थाविधिः पर्युदासविधिरभावविधिः साधारण्यविधिरुत्कर्षविधिरपकर्षविधिश्चेति। एष एकादशविधोऽपि विधि-र्द्विविधः क्रत्वर्थः पुरुषार्थश्चेति। इह तु तदुदाहरणानि ग्रन्थबाहुल्यभिया न दर्शितानि।

विधिस्वरूपनिर्देशानन्तरं मन्त्रलक्षणं वाच्यम्। प्रयोगसमवेतार्थस्मारका मन्त्राः। तेषां च तादृशार्थस्मारकत्वेनैवार्थवत्त्वम्। न च दृष्टस्यार्थ-स्मरणस्य प्रकारान्तरेणापि संभवान्मन्त्राम्नानं व्यर्थमिति वाच्यम्। मन्त्रैरेव स्मर्त्तव्यमिति नियमविधिसद्भावात्। एवं शास्त्रेषु मन्त्रमीमांसा निर्द्धारिता। प्रयोगसमवेतार्थं प्रति स्वार्थस्मारकत्वेन नमतीति नामधेयम्। तत्र च येषां हुंफट्वषट्कारादिमन्त्राणां प्रयोगसमवेतार्थस्मारकत्वं न सम्भवति, तदुच्चारणस्यानन्यगत्याऽदृष्टार्थकत्वं कल्प्यत इति न निष्प्रयोजनत्वम्। तदुक्तं—'यस्य दृष्टं न लभ्येत तस्यादृष्टप्रकल्पनमि'ति। नामधेयस्य विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम्। तथा हि—'उद्भिदा यजेत पशुकाम' इत्यत्रोद्भिच्छब्दो यागनामधेयं तेन च विधेयार्थपरिच्छेदः क्रियते।

नामधेयत्वं खलु मत्वर्थलक्षणाभयाद् वाक्यभेदभयात् तत्प्रख्यशास्त्रात् तद्व्यपदेशाच्च निमित्तभेदेन चतुर्धा भवति। तत्र 'उद्भिदा यजेत पशुकाम'

इत्यत्रोद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयाद् बोद्धव्यम्। वाक्यभेदभयात् तु 'चित्रया यजेत पशुकाम' इति। तत्र चित्राशब्दस्य कर्मनामधेयत्वध्रौव्यात्। 'अग्निहोत्रं जुहोती'त्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्राद् भवति। तद्गुणप्रख्यापकस्य शास्त्रस्य विद्यमानत्वात्। प्रख्यापकत्वं प्रापकत्वमिति यावद्। 'श्येनेनाभिचरन् यजेते'त्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशाद् भवति। यदा हि श्येनसंज्ञको यागो विधीयते तदाऽर्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्त्तुं शक्यत इति श्येनशब्दः कर्मनामधेयं तद्व्यपदेशादेव।

निवृत्तिपरं वाक्यं निषेधः। अनिष्टसाधनताबोधकत्वेन तद्वाक्यानामर्थवत्त्वम्। तथा हि यथा विधिः प्रवर्त्तनां बोधयन् स्वप्रवर्त्तकत्वनिर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन् पुरुषं तत्र प्रवर्त्तयति, तथा 'न कलञ्जं भक्षयेदि'त्यादिनिषेधोऽपि निवर्त्तनां बोधयन् स्वनिवर्त्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य परानिष्टसाधनत्वमाक्षिपन् प्रवृत्तिप्रतिबन्धद्वारेण पुरुषं ततो निषिध्यमानाद् निवर्त्तयति।

निषेधो द्विविधः—लौकिको वैदिकश्चेति। तत्र लौकिको 'विषं मा भुङ्क्ष्वे'ति। वैदिकस्तु न 'कलञ्जं भक्षयेत्', 'न सुरां पिबेदि'त्यादिः। अत्र कलञ्जभक्षणं सुरापानं वा नेष्टविशेषसाधनमपि तु अनिष्टसाधनमेवेति निषेधतात्पर्यम्। यथैकादश्यां न भुञ्जीतेत्यत्र भोजनाभाव एवेष्टसाधनत्वं प्रतिपादयति, भोजने तु विध्यर्थेष्टसाधनत्वाभावम्। अयमत्र विशेषः निषेधः स्वसमभिव्याहृतपदार्थविरोधिबोधको नञर्थः। स च नञर्थो द्विविधः प्रसज्यप्रतिषेधः पर्युदासश्चेति। प्रसज्य विधाय क्रियागुणौ ततः पश्चान्निवृत्तिं करोतीति प्रसज्यप्रतिषेधः। केचित्तु प्रसज्य प्रसक्तिमारोप्य प्रतिषेधः प्रसज्यप्रतिषेध इति। स एव धात्वर्थेनान्वितो नञा प्रत्याय्यते यथा विषं

तदेव 'न कलञ्जं भक्षयेदि'त्यत्र भक्षणक्रियाभावो नञा बोध्यते। अतोऽत्र विधेरप्राधान्यं नञ्गताभावस्य च प्राधान्यं बोद्धव्यम्। तेनैव तत्र निषेधे क्रियापदान्वयी नञ् प्रसज्यप्रतिषेधार्थकः। परि सर्वत उदास्यते विधिर्यत्र स पर्युदासः। स च सामान्यशास्त्रप्राप्तनिषेधात् फलप्रत्यवायशून्यतया समभिव्याहृतपदार्थभेद एव। अपि च

प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥ इति॥

तथाहि—'अमावस्यायां पितृभ्यो दद्यात्', 'रात्रौ श्राद्धं न कुर्वीते'त्यादौ रात्रौ श्राद्धे न फलं न वा प्रत्यवाय इति श्राद्धे रात्रिः पर्युदस्ता, तद्भिन्ने दिवस एव स विधिः पर्यवसीयते।

अत्र तु केचित्—

पर्युदासः स विज्ञेयो यत्र पूर्वपदेन नञ्।
प्रतिषेधः स विज्ञेयो यत्रोत्तरपदेन नञ्॥ इति॥

अयमभिप्रायः। उत्तरपदं प्रत्ययस्तदन्यत् पूर्वपदम्। तत्र यदा प्रत्ययार्थभावनया सह नञः सम्बन्धस्तदा प्रतिषेधः। यदा तु प्रत्ययार्थभावनाव्यतिरिक्तेन धात्वर्थेन पदार्थेन वा सह नञः सम्बन्धस्तदा पर्युदास इति। तत्र प्रथमस्योदाहरणं 'न कलञ्जं भक्षयेदि'ति। अत्र हि लिङर्थप्रवर्त्तनया सह नञः सम्बन्धः। नञश्चैष स्वभावो यत् स्वसम्बन्धिप्रतिपक्षबोधकत्वम्। तदत्र प्रवर्त्तनाप्रतिपक्षभूता निवर्त्तना प्रतिपाद्यते। तथा च कलञ्जकर्मकभक्षणनिवर्त्तनेति बोध उत्पाद्यते। द्वितीयस्योदाहरणं तु 'नेक्षेतोद्यन्तमादित्यमि'ति। अत्र हि धात्वर्थेन सह नञः सम्बन्धः। नञीक्षतिभ्यामी-क्षणविरोध्यनीक्षणसंकल्पः प्रतिपाद्यते। प्रसज्यपर्युदासयोरुदाहरणं पुनरेकत्र यथा—

पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद् बुधः।
भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते॥ इति।

अत्र रोगीति निन्दाश्रवणात् प्रसज्यता, नोपतिष्ठत इति श्रवणात्तु पर्युदासता।

———

# प्रश्नोत्तरक्रमेण शिष्यं प्रति गुरोरुपदेशमञ्जरी

[ निबन्धकः—श्रीउपेन्द्रनाथविद्याभूषणः ]

अपारसंसारसमुद्रमध्ये सम्मज्जतो मे शरणं किम् अस्ति ।
गुरो कृपालो कृपया वदैतद्। [ गुरुः ] विश्वेशपादाम्बुजदीर्घनौका ॥

शिष्यः। किम् उपादेयं भगवन् ?
गुरुः । गुरुवचनम् एव वत्स ।
शिष्यः। अपि च हेयं किम् ?
गुरुः । हेयम् अकार्यम् एव सर्वविधम् ।
शिष्यः। को गुरुर्भवेद् भगवन् ?
गुरुः । स एव गुरुर्यः सततम् अधिगततत्त्व उद्यतः शिष्यहिताय तत्त्वतः ।
शिष्यः। क इह शुचिः ?
गुरुः । स एव शुचिर्वत्स यस्य मानसं शुद्धम् अनुक्षणम् ।
शिष्यः। कः पण्डितः ?
गुरुः । नित्यविवेकी जन एव पण्डितः ।
शिष्यः। विषं किम् ?
गुरुः । अवधीरणा गुरुषु महाविषम् एव सत्यम् ।
शिष्यः। मदिरेव मोहजनकः को गुरुदेव ?
गुरुः । संसारासक्तिरेव वत्स सुरेव महामोहजननी धरायाम् ।
शिष्यः। के च दस्यवो भगवन् ?
गुरुः । विषया एव महादस्यवः संसारिणाम् ।
शिष्यः। को वास्ति घोरो नरको गुरुदेव ?
गुरुः । स्वदेह एव घोरनरको वत्स ।
शिष्यः। स्वर्गपदं किम् अस्ति तर्हि ?

गुरुः । तृषाक्षय एव स्वर्गपदं साधो ।

शिष्यः । किं गुरुताया मूलं देव ?

गुरुः । यद् एतद् अप्रार्थनं नाम वत्स।

शिष्यः । किं तर्हि दारिद्र्यं भगवन् ?

गुरुः । अतोष एव दारिद्र्यं विषमं जनानां वत्स ।

शिष्यः । किं लाघवं गुरुदेव ?

गुरुः । अन्यधनपरा याच्ञैव महती लघुता वत्स ।

शिष्यः । किं तर्हि जीवितं गुरुदेव ? किंवा जाड्यम् ? को जागर्त्ति ? का च निद्रा ?

गुरुः । अनवद्यं जीवितम् एव श्लाघ्यं जीवनं साधो, पाटवेऽपि यदऽनवधानन्तदेव जाड्यम् ; नित्यविवेकी जन एव जागर्त्ति, नित्यमूढतैव निद्रा जीवस्य ।

शिष्यः । नलिनीदलवत्तरलं किं तात ?

गुरुः । यौवनं धनम् आयुश्च सर्वेषाम् ।

शिष्यः । के पुनः शशधरकरनिकरा इव विश्वविमोदिनः सर्वे ?

गुरुः । सज्जना एव वत्स शशिकरनिकरा इव विश्वविमोदिनः सर्वे ।

शिष्यः । कस्तर्हि नरको भगवन् ?

गुरुः । परवशतैव घोरो नरको वत्स ।

शिष्यः । किं सौख्यम् आर्य ?

गुरुः । सर्वसङ्गतिविरतिरेव परमं सौख्यं भद्र ।

शिष्यः । किं तर्हि साध्यं देव ? किमु प्रियं प्राणिनाम् ?

गुरुः । भूतहितं हि साध्यं परमं सर्वस्य वत्स । असव एव प्रेष्ठा जीवानां सर्वत्र ।

शिष्यः । किं दानम् ?

गुरुः । आकाङ्क्षावर्जनम् एव दानं प्रधानम् ।

शिष्यः । किं मित्रम् ?

गुरुः । यत् पापाद् निवर्त्तयति सततं तदेव मित्रं परमम् ।

शिष्यः । कोऽलङ्कारः ? किं च वाचां मण्डनम् ? किम् अनर्थफलम् ?

गुरुः । शीलम् एव श्रेष्ठालङ्कारः, सत्यम् एव वाङ्मण्डनम्, मान एव अनर्थफलः इति जानीहि वत्स ।

शिष्यः । का सुसङ्गतिः ? कोऽन्धः ? को वा बधिरः ?

गुरुः । सुखावहा मैत्री सुसङ्गतिरेव, अकार्यरत एव यः सोऽन्धः । हितानि यो न शृणोति स एव बधिरः ।

शिष्यः । को मूकः ? किं मरणम् ? किम् अनर्घम् ?

गुरुः । काले प्रियाणि वक्तुं यो न जानाति स एव मूकः । मूर्खतैव मरणम् । यच्च दत्तम् अवसरे तदेव श्लाघ्यम् अनर्घम् ।

शिष्यः । आ मरणात् किं शल्यं प्रच्छन्नम् ? शल्यं परं किम् ?

गुरुः । गूढं पापम् एव प्रच्छन्नम् आमरणं शल्यम् । निजमूर्खतैव परमं शल्यम् ।

शिष्यः । कुत्र विधेयो यत्नः सततम् ? के के ह्युपास्याः ?

गुरुः । विद्याभ्यासे यत्नो विधेयः सततम् । गुरु-देव-वृद्धा हि परमोपास्याः ।

शिष्यः । अवधीरणा क कार्या ? अहर्निशं च काऽनुचिन्त्या ?

गुरुः । खलेषु परधनेषु च सततम् अवधीरणा कार्या । ईशभक्तिश्च दिवारात्रम् अनुचिन्त्या ।

शिष्यः । कः पूज्यः ? अधमम् आचक्षते कम् ?

गुरुः । सद्वृत्त एव सर्वेषां पूज्यः ; चलितवृत्तम् एव जनम् अधमम् आचक्षते सुधियः ।

शिष्यः । केन जितम् एतत् त्रिभुवनम् ? कुत्र विधेयो वासो गुरुदेव ?

गुरुः । सत्य-तितिक्षावता पुंसा जितम् एव त्रिभुवनं सर्वम् । सज्जन-सन्निधाने भगवच्चिन्तालये वा वासो भवतां कर्त्तव्यः सततम् ।

शिष्यः। कस्य वशे प्राणिवर्गो भगवन् ?

गुरुः। सत्यप्रियभाषिणो विनीतस्य वश एव प्राणिवर्गः।

शिष्यः। विद्युद्विलसित-चपलं किं गुरुदेव ?

गुरुः। दुर्जनसङ्गतिरेव विद्युच्चपला वत्स।

शिष्यः। किं शोच्यं किं च प्रशस्यम् ?

गुरुः। विभवेऽपि कार्पण्यं शोच्यं सततम्। औदार्यम् एव प्रशस्यम् अनुक्षणम्।

शिष्यः। तनुतरविभवस्य प्रभविष्णोर्वा किमु कर्त्तव्यम् ?

गुरुः। स्वल्पविभवस्य बहुविभवस्य च सहिष्णुता प्रशस्या।

शिष्यः। चिन्तामणिरिव दुर्लभम् इह किम् ?

गुरुः। दानं सूनृतवागन्वितम्, ज्ञानम् अगर्वम्, शौर्यं क्षमासमन्वितम् वित्तं च त्यागसमेतम् दुर्लभम् एतच्चतुर्भद्रम्, वत्स श्रूयतां सावधानम्।

शिष्यः। किं दुर्लभं भुवने गुरुदेव ?

गुरुः। सद्गुरुरेव सुदुर्लभो लोके, सत्सङ्गतिस्तथा ब्रह्मविचारणा च द्व सुदुर्लभे।

कण्ठं गता वा श्रवणं गता वा प्रश्नोत्तराख्या गुरुशिष्यवार्त्ता।
तनोतु मोदं विदुषां सुरम्यं रमेशगौरीशकथेव सद्यः॥

# कालसिद्धान्तदर्शिनी

( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीहाराणचन्द्र-शास्त्री ]

"धर्माधर्मकालपुद्गलजीवाश्च सन्ति यावत्याकाशे स लोकः। तथा चोक्तम्—लोक्यन्ते दृश्यन्ते जीवादिपदार्था यत्र स लोक इति। तस्माल्लोकाकाशात् परतो बहिर्भागे पुनरनन्ताकाशमलोक इति।—द्रव्यसंग्रहवृत्तौ। २०।

जैनानां तावद् द्वावाम्नायौ—दिगम्बराम्नायः श्वेताम्बराम्नायश्च। तत्वार्थसूत्रे कचिदाम्नायभेदेन पाठभेदः समुपलभ्यते—

"कालश्चे"ति (५।३८) सूत्रे श्वेताम्बराणां "कालश्चेत्येके" इत्येवं पाठः। एवं च कालपदार्थो जैनसिद्धान्ते न सर्वसम्मत इति सिद्धम्।

सुश्रुतसंहिताटीकायामाचार्य-डल्लणेन कालस्य सत्वरजस्तमोरूपगुणत्रयात्मिकायां प्रकृतावेवान्तर्भाव उपपादितः(१)—

"परमार्थतस्तु गुणत्रयात्मिका प्रकृतिरेव कारणम्"।

* * * * * *

कालोऽपि चन्द्रार्कादिगतिक्रियालक्षणः, तत्र तु महाभूतानां परिणामविशेषाच्छीतोष्णादयो भवन्ति; तदुक्तम्;—

'महाभूतविशेषांस्तु शीतोष्णद्वयभेदतः।
काल इत्यध्यवस्यन्ति न्यायमार्गानुसारिणः॥ इति।

क्रियात्वेन रजोगुणपरिणामत्वान्महाभूतपरिणामविशेषत्वाच्च न कालस्य प्रकृतेरन्यत्वम्।" इति।

पुरातनाः केचन वादिनो वर्त्तमानः कालो नास्तीति प्रत्यपद्यन्त।

(१) शरीरस्थाने प्रथमाध्याये ११श श्लोकव्याख्यायाम्।

तेषां सिद्धान्तो न्यायदर्शने सूत्रभाष्यवार्त्तिकादिषु व्याकरणमहाभाष्ये चोपन्यस्तः पूर्वपक्षत्वेन। तत्र न्यायदर्शने तावत्--

"वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः।"

[ गौतमसूत्रे २।१।३६ ]

इति वर्त्तमानकालाभावप्रतिपादकं सूत्रम्। अत्र भाष्यकारैः प्रतिपादितम्—

"वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा तत्संयुक्तः कालः पतितकालः, योऽधस्तात् स पतितव्योऽध्वा, तत्संयुक्तः कालः पतितव्यकालः नेदानीं तृतीयोऽध्वा वर्त्तते यत्र पततीति वर्त्तमानः कालो गृह्येत, तस्माद्वर्त्तमानः कालो न विद्यते--इति।"

अत्र वार्त्तिकेऽपि निरूपितमेतत्।

अत्रत्यसूत्रभाष्यवार्त्तिकानामाशयः संक्षिप्योपपादितो वाचस्पतिमिश्रैः—

"कारकव्यङ्ग्यः कालः, तस्य निष्पन्नतया व्यक्तिसाधनत्वोपपत्तेः। न तु क्रियाव्यङ्ग्यः, तस्याः साध्यतया असिद्धत्वाद्व्यक्तिं प्रति हेतुत्वाभावात्। तथा चातीतानागतमात्रदर्शनाद्वर्त्तमानाभावेन न त्रैकाल्यविषयमनुमानं तयोश्च पितापुत्रवत् परत्वापरत्ववद् ह्रस्वदीर्घवच्च परस्परापेक्षा सिद्धिरन्तरेणापि वर्त्तमानं कालमिति पूर्वः पक्षः।

[ न्यायवार्त्तिकतात्पर्यटीका ( २८१-२८२ )

न्यायमञ्जर्यामनुमानसूत्रे ( १।१।५ ) संक्षिप्यैतदुक्तम्—

"यदुच्यते वृक्षात् पततः पर्णस्य भूतभविष्यन्तावध्वानौ दृश्येते न वर्त्तमानः, तस्माद्वर्त्तमानः कालो नास्तीति।"

व्याकरणमहाभाष्यकारैरपि "वर्त्तमाने लट्" (पा० ३।२।१२३) इति सूत्रे वर्त्तमानकालाभाववादिनां मतमुपन्यस्त सूत्रानुपपत्तिप्रदर्शनाय पूर्वपक्षरूपेण—

"अपर आह नास्ति वर्त्तमानः काल इति।"

अत्र कैयटोपाध्यायैरेतस्य मतस्योपपादनार्थमभिहितम्—

"निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य भावित्वान्निष्पन्नानिष्पन्न-व्यतिरेकेण रूपान्तरस्याभावः।" इति।

पूर्वोक्तानामेतेषां ग्रन्थानां परस्परं संवादादध्यवसीयते—"आसन् केचन पुरा वर्त्तमानकालाभाववादिन इति। के त इति विशेषजिज्ञासायां क्षणभङ्गवादिनस्तेऽभवन् इति कैयटीयव्याख्यापर्यालोचनया प्रतीयते। नागेशभट्टस्तु महाभाष्यप्रदीपोद्द्योते प्रथमतः कैयटानुसारेण भाष्याक्षराणि योजयित्वा पर्यवसाने—

"क्षणभङ्गवाद्येवात्र वक्तेति न युक्तम्"

इत्यादिना कैयटीयव्याख्यायामस्वरस उद्भावितः।

महाभाष्ये वर्त्तमानकालाभाववादिनां मतप्रदर्शनाय "अपि चात्र श्लोकानुदाहरन्ति"—इत्युपक्रम्येमे श्लोकाः समुपन्यस्ताः—

"न वर्त्तते चक्रमिषुर्न पात्यते
न स्यन्दन्ते सरितः सागराय।
कूटस्थोऽयं लोको न विचेष्टिताऽस्ति
यो ह्येवं पश्यति सोऽप्यनन्धः॥

मीमांसको मन्यमानो युवा मेधाविसम्मतः।
काकं स्मेहानुपृच्छति किं ते पतितलक्षणम्॥
अनागते न पतसि अतिक्रान्ते च काक न॥
यदि संप्रति पतसि सर्वो लोकः पतत्ययम्॥" इति॥

"अथ पदार्थानां स्थिरत्वेऽपि वर्त्तमानकालाभावमुपपादयति भाष्ये" इति नागेशभट्टलेखदर्शनेन स्थिरपदार्थवादिनां केषांचित् सुप्राचीन-दार्शनिकानामयं सिद्धान्त इति प्रतीयते।

एताश्च कारिका नाधुनातनेषु ग्रन्थेषु क्वचिदप्युपलभ्यन्ते। यैरयं सिद्धान्त आस्थिषत, तेषामेव ग्रन्थान्तर्वर्त्तिन्य इमाः स्युः, स च ग्रन्थोऽधुना विलुप्त इति सम्भावनामात्रं मनसि विपरिवर्त्तते।

वर्त्तमानकालाभाववादिमतोपन्यासानन्तरं महाभाष्ये सर्वथा कालाभावप्रतिपादकोऽयं श्लोकः पठितः—

"अनागतमतिक्रान्तं वर्त्तमानमिति त्रयम्।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते ॥" इति।

अत्रेयं कैयटव्याख्या—एक एव क्षण उपलभ्यते, नातीतो नाप्यनागतो न चैकस्य क्षणस्य गमनादिक्रियावेशः सम्भवतीति भावः।" इति अतीतानागतयोरभावेन तत्सापेक्षं वर्त्तमानत्वमपि दुर्घटमिति कारिकाशयः। एतच्च क्षणभङ्गवादिनां बौद्धानां मतमिति प्रतिभाति। बौद्धाश्च नास्तिका इति प्रसिद्धम्। तथा चैतत्साहचर्येण पूर्वोक्तो वर्त्तमानकालाभावसिद्धान्तोऽपि केषांचिन्नास्तिकानामेव भवेदिति सम्भावयितुं शक्यते नातोऽधिकं किञ्चित्।

पुरा केचन चेतनकारणतावादमनङ्गीकृत्य स्वमत्यनुसारेण कालमेव जगत्कारणत्वेनाभ्युपगच्छन्ति स्म। स्वभाववादेन सह कालवादस्यैकत्रोपवर्णनात् कालवादिनो नास्तिका इत्येव प्रतिभाति—

"स्वभावमेके कवयो वदन्ति
कालं तथाऽन्ये परिमुह्यमाणाः।" ( श्वेताश्व० उ० ६।१ )

स्वभाववादिनश्चार्वाका इति वरदराजकृतन्यायकुसुमाञ्जलिबोधिन्यां प्रथमस्तबकपञ्चमकारिकाव्याख्यानावसरे वर्णितम्। तत्साहचर्येण कालवादिनोऽपि परमेश्वरमनङ्गीकुर्वाणाः केचनेत्येव समीचीनतया बुद्धिपथमधिरोहति। अत एव श्वेताश्वतरोपनिषदि पश्चार्द्धेन चेतनकारणतावादः समर्थितः—

'देवस्यैष महिमा तु लोके
येनेदं भ्राम्यते ब्रह्मचक्रम्।" ( ६।१ ) इति।

---

# सुभाषितानि

[ श्रीजानकीनाथ-साहित्यशास्त्रिमहोदयात् प्राप्तानि ]

ऊर्ध्वः पदं प्राप्तवतोऽपि तस्य
समुल्लसत्कोकिललालसस्य ।
श्यामस्य नम्राम्रफलस्य दैवाद्
रूपान्तरं तत्पतनाय जातम् ॥

दिङ्मण्डलं परिमलैः सुरभीकरोपि
सौन्दर्यमावहसि लोचनलोभनीयम् ।
हंहो रसालतरुवर्य तथाऽपि दूये
यद् ग्रन्थिलं च हृदयं कठिनं बिभर्षि ॥

येऽमी ते मुकुलोद्गमादनुदिनं त्वामाश्रिताः षट्पदा-
स्ते भ्राम्यन्ति फलाद् बहिर्बहिरहो दृष्ट्वा न सम्भाषसे ।
ये कीटास्तव दृक्पथञ्च न गतास्ते त्वत्फलाभ्यन्तरे
धिक् त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥

प्रेमा स्वच्छहृदो वरः पुनरिदं धिक् प्रेम यत् प्रेयसः
प्रस्थाने सखि शङ्किते न सहसा प्राणाः पुरः प्रस्थिताः ।
आत्मानं परिदह्य तोयमवति क्षीरं तदग्नौ पयो-
विच्छेदेन पतत् परन्तु पयसः प्राप्त्यैव शान्तिं भजेत् ॥

सरलयोः सखि सौख्यमनाविलं
कुटिलयोर्घटनैव न जायते ।
यदि भवेत् सरले कुटिले तदा
न चिरमस्ति धनुःशरयोरिव ॥

# प्राड्विवाकस्योपाख्यानम् *

प्राड्विवाकः कथयामास, समुच्चेऽस्मिन्नासने समासीनो व्यवहारान् परिचालयन्नहमासम्। कश्चन स्पेन्देशीयो दुरात्मा परमदर्शनीयायाः समुज्ज्वलकान्तेः कस्याश्चन मेक्सिकोदेशसमुद्भवाया रमण्याः पतिं घातयामासेत्यभियुक्तः। सुदीर्घोऽयमासीन्निदाघवासरः सर्वकर्मप्रवृत्तिविघातको जाड्यापादकश्च, साक्षिणश्चातिमात्रं वृथाजल्पिनः समुद्वेजकाश्च। तां च मेक्सिकोवासिनीं चिन्तादीनां दानवीं वर्जयित्वाऽपरस्य कस्यापि लेशतोऽपि व्यवहारेऽस्मिन् मनो नालगत्। आसां च मेक्सिकोवासिनीनामनुरागोऽपि यथा गरीयान् विद्वेषोऽपि तथैव। एषा च सर्वात्मना पत्यावनुरक्ताऽसीत्, इदानीं सोऽनुरागो विद्वेषात्मना विपरिणतः। सा च तत्र स्पेन्वासिनं प्रति लोचनाभ्यां विद्वेषविषमुद्गिरन्त्यतिष्ठत्। अन्तरान्तरा च स्वीयया निदाघविधुता मामपि सा चालितवती। ग्रीष्मातिरेकाच्च मया परिहृतमुत्तरीयम्, पदद्वयञ्चोपरि काष्ठासने संस्थापितम्। स्वेदखिन्नाखिलावयवश्चाहं धूमवर्तिकां संसेवमानः स्वासने परिवर्तमानश्चासम्। व्यवहाराजीवैरप्युत्तरीयाणि त्यक्तानि, धूमवर्तिकाश्च संसेविताः, साक्षिभिरपि तथैव क्रियते स्म।

यत् सत्यं तदानीं नरहत्याव्यवहारः कस्यापि मनो नावर्जितवान्। जुरीपदवाच्यैर्विचारकमहाशयैरव्यभिचारेणैवाभियुक्तस्य निर्दोषत्वमेव ख्याप्यते स्म। यदि कदाचिद् भागधेयविपर्यासात् एषामपि कश्चित् कदाचिद्राजद्वारेऽभियुज्येत तदानीमनेनापि साम्प्रतमभियुक्तेन जुरीनिविष्टेन तस्य निर्दोषत्वं ख्याप्येतेति। यद्यपि साक्ष्यबलेन स्पेन्वासिनोऽस्य दोषो विस्पष्टमेव प्रमाणितस्तथाऽपि—विदितमेवास्माभिर्यत् इमञ्चेद्दण्डेन योजयेम तर्हि सर्व एवास्मान् प्रजापीडकत्वेन सम्भावयेयुः। सा पुना रमणी स्पेन्वासिनोऽस्य वधदण्डे मनः समाहितवती, मुहूर्तं च तं लोचनानलेन दग्धवती,

---

* मार्कटोयेन् महोदयस्याख्यायिकाया अनुवादः।

ततश्चान्तर्गतप्रार्थनं साकूतं मां निर्वर्णितवती, ततश्च निमेषपञ्चकं जुरी-महोदयानां मुखानि परीक्षितवती, क्रमेण च जातनिर्वेदेव वदनकमलं पाण्योर्निवेशितवती, क्षणेनैव पुनर्मुखमुन्नमय्य पूर्ववदेव व्याकुला चञ्चला चाभवत्।

यदा तु जुरीमहोदयेन स्वीयं मतं प्रकटितं निर्दोषोऽयमभियुक्त इति, मया चोक्तः कारास्थेः मुक्तोऽसि, यथेच्छं गच्छ इति, सा किल नारी परित्यज्य स्वीयमासनम् उदतिष्ठत्, तस्याश्चाङ्गयष्टिर्गगनतलं स्पृशन्तीव प्रत्यभात्, अपृच्छच्च:

प्राड् विवाक, अपि नामैतदेव भवदीयं मतं यज्जनोऽयं निरपराध इति? येन खलु पश्यन्त्या एव मम मिषतां च मत्पुत्राणामकारणमेव घातितो मे भर्त्ता, अपि नाम न्यायेन व्यवहारेण च यत् कर्तव्यं तत् सर्वं सम्पन्नम् इति।

मयोक्तम्, एवमेव।

तदा च किं प्रतिपन्नं तया? कथं तावन्मन्यध्वे यूयम्? सा हि वन्यबिडालीव स्पेनदेशीयस्य बालिशस्याभिमुखीभूय राजसभायामेव सर्वेषां पुरतस्तं गुलिकया निहतवती।

काममेतत् सत्त्वसम्पन्नायाः कार्यम्।

प्राड्विवाकेनापि सहर्षविस्मयमभाणि, सर्वथा तथैवेदम्। एतद्दर्शनेन परां कोटिमधिरूढोऽहं प्रमोदस्य। तदात्व एव सभाकार्यं निरुध्य, उत्तरीयाणि च समासज्य राजसभातो विनिर्गत्य तस्यास्तत्पुत्राणां च कृते सर्वेषां सकाशात् धनानि संगृहीतवन्तो वयम्। ततश्च प्रभूततरेणार्थेन संयोज्य महीयसीं तां नारीं तदीयान् पुत्रांश्च पारेपर्वतं बन्धुजनपार्श्वं प्रेषितवन्तः। अहो! सत्त्वमस्य नार्याः।

---

# सभापतेरभिभाषणम् *

महाभाग सम्राट्प्रतिनिधे ! मान्या महिलाः ! सभ्यमहोदयाश्च !

समागतानां संस्कृतभाषासेविनां, सशिष्याणामध्यापकानां, प्राच्यज्ञानानुशीलने च समुत्साहवतां सर्वेषामेवार्थे मया सानन्दं सर्वात्मना स्वागतसम्भाषणं निवेद्यते । "कलिकातासंस्कृतएसोसियेशन" इत्याख्याया महासभाया वात्सरिकमानदानपरिषदो विगतमधिवेशनम् १९२९ खृष्टाब्दे मार्चमासे त्रयोदशदिवसे समभवत् । अन्तरा व्यतीतेषु चतुर्षु वर्षेषु महास्वभासंस्थानपरिवर्त्तनाद्वा, अर्थकृच्छ्राद्वा, सभाया अस्याः समाह्वानं नाभूत् । निवेद्यमेव तावदिदमस्माभिर्यत् सभाया अनाह्वानाद् बहूनामेव चेतस्यधुना राजसचिवाः संस्कृतशिक्षाविस्तारे मन्दादराः संवृत्ता इति वितथबोधः पदमधत्त । अद्य तु महनीयानामत्रभवतामस्मत्सविधे समागमनेन तादृगयथार्थबोधः सुतरां निरस्यत इत्यपि मया निःसंशयं वाच्यम् ।

प्रसङ्गान्तराणां पर्यालोचनात् प्रागेव कासाञ्चन शोकवार्त्तानां प्रकाशनं मम दुःखावहं कर्त्तव्यतापथमवतरति । "एम्, ए," "सि, आइ, इ,"— इति विरुदद्वयभाजः प्राच्यविद्यावतां वरेण्यस्य प्रत्नतत्त्वानामुद्धर्त्तुः कलिकाताराजकीयसंस्कृतमहाविद्यालयस्य तथा संस्कृतपरीक्षाणामष्टवर्षमध्यक्षपदमलङ्कुर्वाणस्य महामहोपाध्यायस्य श्रीहरप्रसादशास्त्रिणः, प्रथितयशसः संस्कृतभाषानिष्णातस्य वर्षचतुष्टयं कलिकाताराजकीयसंस्कृतविद्यालयस्य संस्कृतपरीक्षाणां चाध्यक्षपदमधिष्ठितस्य महामहोपाध्यायस्य श्रीमत आशुतोषशास्त्रिणश्च वियोगेन संस्कृतशिक्षाक्षेत्रे महत्येव हानिः सञ्जाता । एवमन्ये च बहवः पण्डितवर्याः स्वर्गताः, यथा—महामहोपाध्याय-श्रीचण्डीचरणस्मृतिभूषणो महामहोपाध्याय-श्रीकृष्णचरणतर्कालङ्कारो महामहोपाध्याय-श्रीपार्वतीचरणतर्कतीर्थो महामहोपाध्याय-श्रीशशिभूषणस्मृतिरत्नो

* वङ्गीयसंस्कृतएसोसियेशनस्य त्रयस्त्रिंशदुत्तरैकोनविंशतिशततमखृष्टाब्दीयमानदानपरिषदि ।

महामहोपाध्याय-श्रीकैलासचन्द्रकाव्य-पुराण-सांख्यतीर्थौ महामहोपाध्याय-द्राविडलक्ष्मणशास्त्री महामहोपाध्याय-श्रीवामाचरणन्यायाचार्यश्च । सर्व एव ते नत्तद्विषयेषु वैदुष्यप्रोद्भासितदिग्भागा आसन् । एतेषां महाभागानां लोकान्तरगमनेन संस्कृतभारत्या या हानिः संवृत्ता, सा कदापि न शक्या समपनेतुम् ।

उक्तं हि धर्मशास्त्रेषु यज्जन्मत एव विप्रो मनुष्येभ्योऽवश्यनिर्यातनीयं किमपि ऋणं धारयति । तद्धि सर्वात्मना शिष्याणामशुल्केनाध्यापनेन निस्तार्यम् । दृश्यते चास्माभिर्यत् पुरेह भारते वर्षे सर्वत्र सर्वदा अनेनैव विधिना छात्रा गुरुकुले प्रेषिताः षोडशावराणि वर्षाणि गुरुभिरर्थादानं विनैव अन्नादिना संवर्द्धिता विद्यया चानुगृहीता बभूवुः । तेभ्यो गुरुभ्यस्तु राजानो महाधना भूम्यधिकारिणो वणिजश्च निष्करभूमिं प्रादुः । एवमधिगतविशिष्ट-विद्याः शिष्या अपि गृहस्थाश्रमं प्रविश्यानेनैव क्रमेण निर्मूलिकां विद्यां वितेरुः । समृद्धेऽस्मिन् देशे तदा नासीत् साम्प्रतिको जीवनधारणायासो न वा जडप्रकृत्या सह श्रमक्लिष्टानामन्नाच्छादनार्थैव मानुषतासुलभः कठिनः संघर्षः, नालक्ष्यत तस्मिन्नार्जवमण्डिते प्राचीनकाले अन्यनराणां प्रकृतेश्चोपरि बलवानीदृगाधिपत्यलाभलोभः, न चासीत् अनियन्त्रितेषा धनागमतृष्णा लाभपरतन्त्रा च बुद्धिः । इह हि विद्यार्ज्जनं जीविकानिर्वाहे उपायमात्रत्वेन वा सम्प्रदायान्तरैः सह संघर्षे अव्यर्थशस्त्रत्वेन वा कदापि न परिगणित-मासीत् । एवं विद्यानुशीलनमिह स्वे महिम्न्येव प्रतिष्ठितं समवर्त्तत । तद्धि सुसन्निकृष्टाद् गुरुसंपर्कात् कार्त्स्न्येन शिष्यस्य वृत्तिनिचयानां सम्यक् स्फुरणायाकल्पत । मनो हि बाल्य एव समवतिष्ठते ग्रहणसमर्थम् । तदैव शिष्यो गुरुकुले लब्धप्रवेशस्तत्रत्यप्रभाववशात् स्वं चारित्रं लेभे । तत्र तावत् प्रथमं स शास्त्राणां मूलतत्त्वान्यधिगम्य ब्रह्मज्ञाने प्राथमिकीं दीक्षामलभत । तत्रैव स सब्रह्मचारिभिर्जीवितावधिस्थायिनं सख्यसम्पर्क-मापादितवान् । तत्रैव स गुरुपत्न्याः पावनप्रभावानुबन्धिना मातृस्नेहेन सदयं संवर्द्धितः । तत्रैव स प्रकृष्टमानुष्यकस्य प्रोद्भिन्नस्वातन्त्र्यस्य च

विकाशे उपकारकान् विनयाज्ञानुवर्त्तित्वसंयमस्वावलम्बन-राजभक्तिप्रभृतीनन्यानपि लोकव्यवहारे सर्वथोपादेयान् गुणानशिक्षत। शिष्यार्भकः कालेन प्राप्तयौवनः शिक्षां समाप्यापरमिव पितरं बहुमतमाचार्यमापृच्छ्य गृहमगात्। गुरुशिष्ययोः पवित्रसम्बन्धस्य पवित्रस्मृतिस्तु शिष्यस्य हृदयमन्दिरे यावज्जीवं सादरं संरक्षितेवाभूत्। गुरुस्तं पालनेनान्नदानेन च समवर्द्धयत्। सर्वं त्वेतन्नहि स्वलाभकाम्यया परं शास्त्राणां नियोगादेव प्रावर्त्तिष्ट। समावर्त्तनात् परं द्विजकुमारस्य गुरुगृह एव विकाशोन्मुखीनां मनोवृत्तीनां सम्यक्स्फुरणमजायत मानसिके नैतिके आध्यात्मिके च क्षेत्रे। एवं सोऽप्यचिरादेव स्वकीयैः शिष्यैराचार्यत्वेन ऋषित्वेन वा समदृश्यत। न हि तदा शिक्षा निर्दिष्टनियमानुसारिणी व्यवस्थिता। परमासीद् गुरोः शिष्याणां नैतिकमानसिकोन्नतिविधानाय यथा तथैव शास्त्रव्याख्याने स्वातन्त्र्यम्। ये नाम विद्यार्थिनो मानपत्रादिग्रहणार्थमिह सम्मिलितास्तेषां पुरतो नान्यदस्ति मे समुपस्थापनीयमुज्ज्वलतरं वस्तु ऋते निःस्वार्थशिक्षार्थमेव शिक्षोन्नतिविधाने नैतिकधर्ममयजीवनावस्थासमुन्नतिविधाने च स्वीयपूर्वपुरुषाणां पदाङ्कानुवर्त्तनम्। केवलेन तेनैवोपायेन ते नितरामलंभविष्यन्ति समुज्ज्वलीकर्त्तुं मुखानि महतां पूर्वपुरुषाणाम्, पारयिष्यन्ति च याथार्थ्येन सम्पादयितुं सुमहद् गौरवं मातुर्वसुन्धरायाः।

ब्राह्मणानामुक्तलक्षणां शिक्षापद्धतिमपेक्ष्य बौद्धशिक्षापद्धतेरिदमेव वैलक्षण्यमासीत्, यथा नालन्दा-तक्षशिला-विक्रमशिलाप्रभृतिषु बौद्धस्थापितेषु शिक्षाकेन्द्रेषु बहव एव आचार्याश्छात्राश्च एकत्र न्यवात्सुः। तेभ्यः स्थानेभ्यः प्रचारका अध्यापकाश्च बौद्धज्ञानधर्मविस्ताराय जगति बहुषु देशेषु प्रेषिता अभूवन्। यदि च ब्राह्मणसम्प्रदायेऽपि कुलपतिनाम्ना प्रधानाचार्येणान्नदानादिनाऽध्यापितानां दशसाहस्रमनुश्रूयते, तथाऽपि ब्राह्मणपद्धतौ प्रायेण कर्त्तव्यबुद्धिमात्रप्रणोदितानां स्वातन्त्र्यमेवासीन्नीतिधर्माध्यात्मविषयेषु शिष्याणामुपदेशे। एकादशे द्वादशे च खृष्टाब्दशतके बौद्धधर्मस्य बौद्धशिक्षाकेन्द्रसमूहस्य च विनाशादूर्द्ध्वं ब्राह्मणानां शिक्षा-

पद्धतिरेकैवासीद् भारते वर्षे। आसन् सर्वेष्वेव ग्रामेषु नगरेषु च स्वल्पगुणा वा, अनल्पगुणा वा, असाधारणगुणाः प्रथितयशसो वा अध्यापकाः। शिष्या हि तेभ्यो विद्याः समधिजग्मुः। वेदा व्याकरणं काव्यं गणितशास्त्रं ज्योतिस्तर्कविद्या नीतिर्बहुशाखं दर्शनं धर्मशास्त्रं चेत्येतेऽध्याप्यविषया आसन्।

षोडशे खृष्टशतके पूर्वभारते वाकूला-मिथिला-नवद्वीप-विक्रमपुरेषु प्रधानभूतानि शिक्षाकेन्द्राण्यासन्। १८२८ अष्टाविंशत्युत्तराष्टादशशततमे खृष्टाब्दे राजपुरुषाः पाश्चात्त्यशिक्षाविस्तारसाहचर्येण प्राच्यविद्यानामपि प्रोत्साहनप्रयोजने दृढप्रत्यया बभूवुः। तस्मिन्नेव वर्षे पाश्चात्त्यविद्यायोगेन मुख्यतः संस्कृतशास्त्रानुशीलनार्थं कलिकातास्थसंस्कृतमहाविद्यालयः संस्थापितः। १८७८ अष्टसप्तत्युत्तराष्टादशशततमे खृष्टाब्दे वङ्गीयैं राजपुरुषैरुपाधिपरीक्षाव्यवस्था प्रवर्त्तिता। परीक्षा पुरा प्राधान्येन मौखिकी परीक्षार्थिनोऽध्यापकाधीना चासीत्। राजपुरुषैरुपाधिपरीक्षायां व्यवस्थापितायां तदैव प्रतिष्ठित-ढाकासारस्वतसमाज-बोयालियाधर्म-सभाध्यक्षाः पण्डिता अपि पाठ्यग्रन्थान् स्थिरीकृत्य परीक्षकांश्च नियुज्य परीक्षाफलानुवर्त्तनेन स्वनिर्वाचितानुपाधीन् वितेरुः। १८८४ चतुरशीत्यु-त्तराष्टादशशततमे खृष्टाब्दे साम्प्रतिकविश्वविद्यालयानां बी, ए, इत्युपाधितुल्यो राजदत्तस्तीर्थोपाधिः सममेव सर्वेषु विषयेषु प्रवर्त्तितोऽभूत्। १८९२ द्विनवत्युत्त-राष्टादशशततमे प्रथमपरीक्षा द्वितीयपरीक्षेति च संज्ञितं परीक्षाद्वयमपि समारब्धम्। तदा हि वङ्गविहारोत्कलेषु साकल्येन पञ्चदश पण्डित-सभाः परीक्षाग्रन्थपरीक्षकनिर्वाचने स्वतन्त्रा एवाऽऽसन्। ताभिः प्रेषितानि परीक्षोत्तीर्णानां फलान्यनुसृत्यैव कलिकाताराजकीयसंस्कृतमहाविद्यालयाध्यक्षो "डिरेक्टर" महोदयानां सम्मतिक्रमेण कृतिभ्यश्छात्त्रेभ्योऽध्यापकेभ्यश्च वृत्तिपारितोषिकादिदानं व्यधात्। १८९७ सप्तनवत्युत्तराष्टादशशततमे खृष्टाब्दे परीक्षाजातं कलिकाताराजकीयसंस्कृतमहाविद्यालयाध्यक्षस्य साक्षादधिकारे न्यस्तम्। प्रश्नकर्त्तृणामुत्तरपत्रपरीक्षकाणाञ्च नियोगे तथा

परीक्षाकेन्द्रेषु प्रश्नपत्राणां सम्प्रेषणे स एवाध्यकारि। परीक्षाव्यापारस्तु डिरेकटर्-महोदयाधीनपरिदर्शकवृन्दैर्निरवाह्यत। ततः १९०८ अष्टोत्तरोनविंशतिशततमे खृष्टाब्दे संस्कृतमहाविद्यालयाध्यक्षस्य सम्पादकत्वाधीना "संस्कृतपरीक्षा-परिषत्"नाम परीक्षाग्रहणव्यापारा मन्त्रणासभा सृष्टा। तया परिषदा परीक्षितानां संख्या तेषु दिनेषु किञ्चिदधिकं सहस्रचतुष्टयमासीत्, परीक्षाकेन्द्राणि च प्रायेण विंशतिरभवन्। विगतैः पञ्चविंशतिदेशीयैर्वर्षैश्छात्रसंख्या किञ्चिदधिकं नवसाहस्रं परीक्षाकेन्द्राणि च भारतवर्षे सर्वेष्वेव प्रदेशेषु स्थितानि परःषष्टीनि। यथापूर्वम् अधुनाऽपि अल्पवेतनकर्मलेखकत्रयमात्रसहायः संस्कृतविद्यालयाध्यक्ष एक एव गुरुत्वभूयिष्ठे कार्यजाते अधिकृतः सम्पादकत्वेन।

पूर्वोक्तसंस्कृतपरीक्षापरिषदः स्थाने १९१८ अष्टादशोत्तरोनविंशतिशततमे खृष्टाब्दे पञ्चशतसभ्यात्मिका कलिकातासंस्कृतमहासभा नाम विपुलसंस्थाना मन्त्रणासभा प्रवर्त्तिता। महासभा-"काउन्सिला"भिधं च तस्या एव कार्यनिर्वाहकं संस्थानान्तरं विंशत्या सभ्यैः प्रकल्पितमभूत्।

१९२३ त्रयोविंशत्युत्तरैकोनत्रिंशतिशततमखृष्टाब्दीयागष्टमासे वङ्गीयराजपुरुषैः "कलिकातासंस्कृतएसोसियेशन" इत्याख्यायाः सभायास्तथा राजकीयसहाय्यभागिनां संस्कृतविद्यालयानां कृत्यजातमधिकृत्य पर्यालोचनानन्तरं कस्यचिद् विवृतिपत्रस्य प्रणयनार्थं तथा तेषां कृत्यपद्धतेः समुन्नतिविधानार्हाणां संघटनाय च एका समितिः संस्थापिता। १९२६ षड्विंशत्युत्तरोनविंशतिशततमस्य खृष्टाब्दस्याक्टोवरमासे प्रभवतां तत्रभवतां श्रीमतां स्यार् देवप्रसादसर्वाधिकारिणां सभापतिमहोदयानां नेतृत्वेन परिचालितेयं समितिः सयत्नं सर्वं विविच्य तथा मिथः समालोच्य एसोसियेशनसभायाः परिचालनपद्धतेः परिवर्त्तन-प्रस्तावादीन् अस्या अभिलषितान् विषयान् राजद्वारे विनिवेदितवतवती। १९३० त्रिंशदुत्तरोनविंशतिशततमखृष्टाब्दे मार्चमासस्य अष्टमदिवसे वङ्गीयराजपुरुषैरनुमतः परिचालन-पद्धतेः परिवर्त्तनप्रस्तावः। अनेन परिवर्त्तनेन विगतमस्याः सभायाः "कलिकाता-

संस्कृत-एसोसियेशन्" इति प्राचीनं नाम, समभवच्च तत्पदे "वङ्गीयसंस्कृत-एसोसियेशन" इति नवीनमभिधानम्। पञ्चशतसंख्यकसभ्यानां समवायेन संघटिता प्राचीना "कन्भोकेशनसभा" च परिवृत्त्या नवनवतिसंख्यकानां निर्वाचितानां राजपुरुषैर्निर्द्धारितनाम्नाञ्च सभ्यानां समवायेन संघटिता नवीनं "सेन्ट्राल् अरगेनाइजेशन् सभा" इति नाम परिजग्राह। अपेक्षितानामर्थानामनागमात्, सत्यपि अस्माकं सुमहति यत्ने वर्षत्रयं यावत् अस्माकं सभापतित्वेन परिचालितेयं सेन्ट्राल् अर्गेनाइजेशनसभा न समाहूता।

यद् भवतु तद् भवतु, वयं सानन्दं निवेदयामो यदियं वार्षिकी सभा प्राथम्येन विगतदिवस एव सम्मिलिता सती अस्याः कृत्यजातं सुसम्पादितवती। इतः प्राक् "कलिकाता एसोसियेशनसभा" तत्रभवतां स्यार् आशुतोषमुखोपाध्यायानां शिक्षातरणीकर्णधाराणां सभापतित्वेन परिचालिता आसीत्। अप्राप्तकालमेव स्वर्यातेषु तेषु प्राड्विवाकवर्यैस्तत्रभवद्भिः श्रीमद्भिः नलिनीरञ्जनचट्टोपाध्यायैरस्याः सभापतिपदं समलङ्कृतम्। अस्मदीयसमये तु अस्याः सभाया गणतन्त्रानुगतानां परिवृत्तीनामनुरोधान्नामापि विपरिवर्त्तितमभूत्। यद्धि सुमहत् कर्म तत्रभवद्भिः स्यार् आशुतोषमुखोपाध्यायैः तथा स्यार् नलिनीरञ्जनचट्टोपाध्यायैः सम्पादितं, तत् खलु अस्मदीयस्कन्धे समापतितमिति सविनयं सभयञ्च प्रवर्त्तामहे।

अस्ति किल भारते वर्षेऽस्मिन् वङ्गीयसंस्कृतएसोसियेशनसभायाः तुलारोहणयोग्यमन्यत् प्रतिष्ठानद्वयम्। एकं वाराणस्याम् अन्यद् विहारप्रान्ते। वाराणसीसंस्कृतमहाविद्यालयपरिचालितासु परीक्षासु नवसहस्राधिकसंख्याकाश्छात्रा वेद-स्मृति-न्याय-साङ्ख्य-वेदान्त-साहित्य-पाणिनि-व्याकरणविषयेषु परीक्षार्थिनो भवन्ति। परिचालकानाञ्च त्रयः "प्रभिन्सियेल सार्भिस्" इति पदाधिकारिणः, एकः कर्मसहायः "रेजिष्ट्रार" इत्याख्यः, एकः प्रधानलिपिरक्षकः, अष्टौ सहकारिलिपिरक्षकाः एकादश अधस्तनपदाधिकारिणः। विहार-संस्कृतएसोसियेशनसभायाञ्च न्यूनाधिकाश्चतुःसहस्रसंख्यकाःपरीक्षा-

र्थिनो भवन्ति। परिचालनकार्ये च एकः सुपारिण्टेण्डेण्ट अव् सान्स्कृट् ष्टडिस् ( संस्कृतशिक्षासदस्य ) नामकः बी, इ, एस्, पदाधिकृतः, द्वौ सबर्डिनेट् पदाधिकृतौ, षट् लिपिरक्षकाः चत्वारो भृत्याश्च। ढाकासारस्वत-समाजाभिधानप्रतिष्ठानं समक्रियाकार्यप्यतीव क्षुद्रायतनम्। सहस्रसंख्याका श्छात्रास्तत्र परीक्षिता भवन्ति।

वङ्गीयसंस्कृतएसोसियेशनसभाप्रदत्तोपाधेर्गौरवं समधिकमिति भारत-वर्षस्य सर्वत्रैवास्या अपेक्षितत्वं दरीदृश्यते, तदिदमस्मादेव शक्यं ज्ञातुम्; —यथा मोहमय्यां, पुण्यपत्तने, पेट्लाड्प्रान्ते, वेवरप्रदेशे, वृन्दावनक्षेत्रे, इन्दोरनगर्याम्, यामनगर्याम्, नागपुरे, शिवपुर्यामन्यत्र च सुदूरे प्रान्ते एसोसियेशनसभायाः केन्द्राणि वर्त्तन्ते। कलिकाताएसोसियेशनपरिचालि-तासु परीक्षासु न केवलं पुरुषा हिन्दुधर्मावलम्बिनो वा, परं बहुला नार्यः बह्वो महम्मदीयाश्च समवतरन्ति। विश्वविद्यालयेषु कृतविद्याश्च बहवश्छात्राः स्वेषां संस्कृतशिक्षामसम्पूर्णां मन्यमानाः पूर्णतासम्पादनार्थं शिक्षाया अस्यामेव एसोसियेशनसभायाम् परीक्षार्थिनो भवन्ति। अनुपममिदं प्रतिष्ठानं भारतेऽस्मिन् सर्वप्रादेशिकसंस्कृतविश्वविद्यालयश्रियं समवलम्बते।

प्रतिशास्त्रं प्रथमपरीक्षायां द्वे प्रश्नपत्रे, द्वितीयपरीक्षायां च प्रश्नपत्रद्वयम्, उपाधिपरीक्षायान्तु चत्वारि प्रश्नपत्राणि। आसु वङ्गीयसंस्कृतएसोसियेशन-सभाप्रवर्त्तितासु परीक्षासु पञ्चदशसंख्यकानि तत्तत्प्रदेशीयविभिन्नविभाग-प्रचलितानि व्याकरणानि, सप्तविधाः स्मृतयः, द्विविधौ वेदान्तौ, पञ्चविधा न्यायाः, सांख्यम्, उपनिषत्, पुराणम्, ज्योतिषम्, चतुर्विधा वेदाः, मीमांसा, साधारणदर्शनम्, वैष्णवदर्शनम्, पौरोहित्यम्, त्रिविधाः पालिग्रन्थाश्चेति विषयाः, प्रश्नपत्राणि च समष्ट्या प्रायेण ३४० चत्वारिंशदधिकत्रिशतसंख्या-कानि भवन्ति। मातृभाषायाः संस्कृतभाषयाः अनुवादकरणाय हिन्दी-वङ्गीयोत्कलासामीयगुजरातमहाराष्ट्रतेलेगुकानारिसभाषामयाणि प्रश्नपत्राणि विरचितानि भवन्ति।

वङ्गीयसंस्कृतएसोसियेनसभानुमतानां द्विसहस्रसंख्यकानां संस्कृतविद्या-

प्रतिष्ठानानामुपरि—सभाया अस्याः प्रभुता वर्त्तते। कलिकाताविश्वविद्यालयेतरस्य यस्य कस्यापि विश्वविद्यालयस्य कर्मणोऽपेक्षया कथमप्यन्यूनं सुबृहदिदं कृत्यं कलिकाताराजकीयसंस्कृतमहाविद्यालयाध्यक्षाणामतिरिक्तकर्मरूपेण निरूपितमास्ते। स च कलिकाताराजकीयसंस्कृतमहाविद्यालयस्याध्यक्षत्वादेवास्याः सम्पादकः। वर्त्तमानसम्पादकमहोदयस्तु संस्कृतशास्त्रनिष्णातो विश्वविश्रुतकीर्त्तिश्च, सुनिपुणा मतिस्तस्य कर्त्तव्यार्थेषु। परं यदि समुचितकर्मचारिविवर्द्धनादिना सम्पादककार्यभारो न सुष्ठुरूपेण लघूक्रियेत, तदा एसोसियेशनसभाकृत्यानां सम्यक् सम्पादनमसम्भाव्यमेवेति।

राजपुरुषैः प्रतिष्ठापिता निरुक्ता विचारसमितिरपि निरुक्तेषु अपेक्षितविषयेषु सम्यगुरुबुद्धा सत्येव सम्पादकस्य एकां वृत्तिम्, विद्यालयेषु समधिकां वृत्तिम्, अध्यापकवृत्तेः परिमाणसंवर्द्धनम् संख्यावर्द्धनञ्च, छात्रवृत्तेः संख्यावर्द्धनम्, प्रश्नपत्रविरचनस्य तथा उत्तरपत्रपरीक्षायाः पारिश्रमिकद्रव्यपरिवर्द्धनमनुमेने। समितिरियं प्रदेशेऽस्मिन् विभिन्नेषु स्थानेषु आदर्शसंस्कृतविद्यागारेषु त्रिंशत्संख्याकानां सवृत्तिकानामध्यापकासनानां प्रवर्त्तनम्, गवेषणाच्छात्रवृत्तिम्, आदर्शविद्यालयेषु प्रायेण ३०० त्रिशतसंख्यकेभ्यो विद्यालयेभ्यो वृत्तिवितरणञ्चानुमोदितवती। एतेषु समित्या अनुमतेषु विषयेषु केचन प्रस्तावा राजपुरुषैरंशतो गृहीताः, अन्ये च परित्यक्ता एव। निर्द्धारितेषु अर्थेषु च अपेक्षितार्थसाहाय्यो न कोऽपि प्रस्तावोऽद्यापि कर्मणि परिणतः।

यदा तु पृथिव्यां प्रायेण सर्वा एव भूमिरज्ञानतिमिरावृता आसीत्, तदैव संस्कृतसभ्यतालोक उपनिषद्वाक्यैर्बौद्धवचनैश्च प्रोज्ज्वलन् देशाद्देशान्तरं प्रतिगतस्तत्रत्यान्धकारं विदूरीचकार। दृश्यते चास्माभिर्यदियं महती धर्मविषयिणी, नीतिविषयिणी, दर्शनविषयिणी, कलाविद्याविषयिणी च सभ्यता पश्चिमायाम् आलेग्जेन्द्रियां यावत्, उत्तरस्यां मङ्गोलियां यावत्, पश्चिमोत्तरखण्डे च आ-कस्पियान्समुद्रतीरं, पूर्वस्यां जापानद्वीपं यावत् पूर्वदक्षिणखण्डे च आ-यवद्वीपम् आ-वालिद्वीपम् आ-सुमात्राद्वीपञ्च

दक्षिणस्याम् आ-सिंहलद्वीपम् दक्षिणपश्चिमप्रान्ते च मदगस्करं यावत् विस्तृतिमापन्ना।

भारतीयभावधारायामेतादृशं किमपि अध्यात्मरहस्यं विद्यते, यदर्थं साम्प्रतिके जडविज्ञानालोकसमुद्भासिते कर्मभूयिष्ठे जडवादाधिकृतेऽपि समाजे पाश्चात्त्यानामपि अभिज्ञानां सर्वदैव भारतीयऋषीणां ज्ञानगर्भां वाचं श्रोतुमौत्सुक्यमुत्कण्ठा च वरीवर्त्ति। नव्या भावधारा कृत्य-सम्पादनपटीयसी। कृत्यसम्पादिका शक्तिश्च संयमेन विनाकृता विनाश-बीजमेव स्वयं संवहति। अत एव सभ्यतायामपि संयमः सम्यगेवापेक्षितः। भारतसभ्यतायाश्चात्रैवावसरः। भारतान्तरात्मनः श्लक्ष्णा मधुरा च वाणी, या मर्मरायमाणैर्मारुतपूर्णरन्ध्रैः कीचकैर्नारिकेलवनानिर्लङ्घ्य श्रवणपथ-मायाति, नवीनानां स्थगयति च गतिं त्वरिताम्, आदिशति च नवीनान् कृष्णवंशीनिनादं प्रति कर्णावर्त्तनाय, यश्च निनादस्तदीयहृदयकन्दरात् तान् समाह्वयति, उपदिशति च निवृत्तये सर्वस्माद् विरोधात्, लोभात् तथा कार्पण्यात्, शिक्षयति च तम् उपायम् येनोपायेन स स्वार्थविसर्जनेन प्रेम्णा च स्वात्मानं लब्धुं समर्थो भवति। एतस्य उपदेशस्तु न "शठे शाठ्यं समाचरे"दिति, परं "न हि वैरेण वैरं शाम्यती"ति। सर्वजनीना करुणा, मैत्री, क्षमा च सर्वेषां संस्कृतशास्त्राणां संस्कृतदर्शनानाञ्च हृदयम्। दुःखपरिपूरितेऽस्मिन् भारतवर्षे संस्कृतशिक्षाया स्थैर्यगाम्भीर्य-विधायिनी शक्तिर्न केनाप्याधिक्येन वर्णयितुं शक्यते। साधारणः कोऽप्यध्यापको राजवृत्तिं नैव लभते। असाधारणा अपि चतुर्भ्यः षड्भ्यो वा रूप्यकेभ्यो नाधिकं किञ्चिल्लभन्ते राजकोषात्। उदयादस्तं यावत् अध्यापकानां परिश्रमः, तेषां कश्चन येन केनाप्युपायेन यदेवो-पार्जयति, तत् सर्वं स्वगृहे विद्यार्थिनां भरणार्थं प्रयच्छति। पूर्वपुरुष-सन्दीपितस्य दीपस्य रक्षणेन स्वकर्त्तव्यसम्पादनं विना न क्वापि लौकिके विषये कामना तेषां हृदये प्रवहति। स्वभावेनैव ये खलु पूर्वपुरुषप्रदर्शितां रीतिमनुसृत्य स्वार्थरहिता विद्यार्थिनामध्यापनेन धर्ममयं जीवनं यापयन्ति,

तेषां ब्राह्मण्यधर्मावलम्बिनां जनसमाजे सुमहान् प्रभावो दरीदृश्यते। दृश्यते च अभिनवशिक्षासरणिमवलम्ब्य ये विद्यासु कृतश्रमास्ते पामर्वाचीनानामपि शिरांसि प्राचीनसरणिमाश्रितानामध्यापकानां सविधे विनतानि भवन्तीति। शास्त्राध्यापना यदि अवज्ञामधिगच्छेत्, अध्यापकाश्च यदीश्वरकल्पानां राजपुरुषाणाम् आपेक्षिकमौदासीन्यमवहेलनं वा अनुभवेयुस्तर्हि ते स्वतो नितरामेव निरुत्साहतामधिगच्छेयुः। तथा च सति अद्यापि ब्राह्मण्य-धर्मावलम्बिनाम् आदर्शनिर्माणे भाग्यविधाने च प्रभवतोऽध्यापकसमाजस्य स्थैर्यसाधनपटीयांसं प्रभावं तज्जन्यमुपकारञ्च नैव लब्धुमलं भविष्यन्ति राजपुरुषा इत्यत्र नास्ति सन्देहः।

स्वल्पमेवापेक्षितमस्माकम्। यदि हि नाम राजपुरुषैर्ढाकाविश्व-विद्यालये, कलिकाताविश्वविद्यालये समाजविशेषस्य विशेषशिक्षणविधौ च प्रतिवर्षं लक्षेभ्योऽप्यधिका मुद्रा दीयन्ते, तर्हि स्वत एवास्माभिः सम्भाव्यते,—यद् यादृशं नाम भवतु अर्थकृच्छ्रं राजकोषे, सत्यभिलाषे राजप्रतिनिधीनाम् —एसोसियेशनकार्यालयस्य सुव्यवस्थितिसम्पादनार्थम्, प्रश्नकर्त्तृभ्यः पत्रपरीक्षकेभ्यश्च अनुरूपपारिश्रमिकप्रदानार्थमध्यापकानां छात्राणाञ्च वृत्तिसंख्यायाः परिवर्द्धनार्थम्, सति सम्भवे सवृत्तिकाध्यापकासनसंस्थापनार्थञ्च किञ्चित् किञ्चित् कर्त्तुं समर्था भवन्त्येव राजपुरुषा इति। यदि भवत्-समागमावसरं लभमानैरस्माभिरस्माकमपेक्षितानाम् अर्थानां तथा वस्तु-जातानां प्रार्थनाभिरेव भवन्तः क्लेशितास्तर्हि श्रीमद्भिर्भवद्भिः सम्राट्प्रति-निधिभिर्वयं क्षन्तव्याः। "एसोसियेशनसभा" न सर्वदैव भवतां समागमं लब्धुं समर्था भविष्यति। भवन्तस्तु राजपुरुषाणां मूर्ध्नि स्थिताः सम्राट्प्रतिनिधयः; भवद्भिर्विना को वाऽन्योऽस्माकम् आशास्थानम् अस्मदीयान् अपेक्षितान् विषयान् सानुकम्पं श्रोष्यतीत्यलम् प्रपञ्चेनेति शम्।

---

# विपाकः

[ निबन्धकः—श्रीनरेन्द्रनाथचतुर्धुरीणः, एम्० ए० ]

एकदा, सायम्, इन्द्रप्रस्थस्य सुरम्ये कुत्रचिदुद्याने परिभ्रमन् गणेशः, पुरतो दिनेशमागच्छन्तमालोक्य, सत्वरं तमुपसंगम्य 'अये सौम्य दिनेश' कत परमानन्देन तस्य हस्तग्रहणमकरोत्, प्रावादीच्च—'अयि बन्धो, बहोः' इालित् परं दृष्टोऽसि। अपि नाम कुशलं ते? लवपुरात् कदागतम्? तत्र ते पठनं कीदृशं भवति? किमस्ति तत्र कश्चिन्नूतनो वृत्तान्त' इति। दिनेशोऽपि मित्रदर्शनानन्देन पल्लवितचेता मन्दहासं मित्रस्य करकम्पनं तरसा विधाय, प्रत्यवोचत्—'वयस्य, परमेशकृपया कुशलिनं मामवगच्छ। ह्यः खलु आगतं मया। अध्ययनं मे शोभनं संपद्यते। परन्तु अस्माकं विद्यालयस्यं अध्यापकमेकमधिकृत्य अस्ति कश्चिदतिकरुणस्तावदुदन्त' इति।

गणेशः—कथमिव सः? शीघ्रं कथ्यताम्, नितरां समुत्सुकं श्रवणविधौ मे चेतः, न कालव्याजं सहते।

दिनेशः—वयस्य, याथातथ्येन न सर्वम् आदित आरभ्य ज्ञायते मया। तथाऽपि लोकमुखेभ्यो यथाकर्णितं तथोपवर्ण्यते श्रूयताम्।

आसीदस्माकं विद्यालये श्रीसतीशचन्द्रवन्द्योपाध्यायो नाम अत्युदारः सुजनः प्रथितयशाः कश्चिदध्यापकः।

एकदा विद्यालयं गतवता मया श्रुतम्—वन्द्योपाध्यायस्य सहकर्मिणा मिस्टार दासेन सह तदीया पत्नी सुबाला, पतिगृहं परित्यज्य क्व गतेति नास्ति काचित् प्रवृत्तिरिति। अस्माभिस्तु 'कथमेतदभूदि'ति दुःखायितमानसैरितस्ततः खलु अन्वेषणमारब्धम्, न पुनः किंचिदुपलब्धम्। ततः कतिपयैरहोभिरेतदवगतम्—दुरात्मनो दासस्य मायापाशपतिता वराकी सुबाला देवं परित्यज्य दानवं श्रितेति। उपाधानस्याधस्तात्

सुबालायाः पत्रकमपि वन्द्योपाध्यायेन प्राप्तम्। तत्र लिखितमासीत्—'स्वेच्छया मिस्टार दासेन समं गच्छामि ; न मयि ते किंचिन्नाम प्रभुत्वम् ; मम पुनर्ग्रहणाय मा यतितव्यम्' इति।

अथ सहयोगिनो बन्धोर्मिस्टारदासस्य, प्रियायाः सुबालायाश्च, अनेन स्वप्नेष्वपि असंभावितेन अतीवारुन्तुदेनाचरितेन, नितरामन्तर्ज्वलन्नपि, तयोर्महापापिनोर्नामस्मरणमपि विनिपातैककारणमिति मन्यमानो वन्द्योपाध्यायः प्रतीकारविधौ परमौदास्यमेवाभजत। ततः खलु अधिकरणं गत्वा व्यवहारं लेखयितुमनिच्छत्यपि वन्द्योपाध्याये, सर्वमेतद् वृत्तं पत्रमारोप्य अस्माकमध्यक्षवर्येण राजपुरुषेभ्यो विज्ञापितम्। अथ वन्द्योपाध्यायस्य परमौदासीन्येन दुःसहराजदण्डात् कथमपि निष्क्रान्तोऽपि दासः शिक्षाविभागात् निष्कासितः समभवत्। तत इतस्ततो भ्रमन् स कर्णपूरे कस्यापि वणिजः पण्यशालायां किमपि लेखकस्य कार्यमासाद्य तत्रैव सुबालया सार्धमेकस्मिन्नावसथे समयाकुर्वन्नासीत्। अथ गच्छति काले, सुबालाया एका कन्यका जाता। दासेन प्रतिमासं वणिजः सकाशात् यत्किञ्चिद् धनं लब्धं तद्धि तेषां ग्रासाच्छादनार्थमपि नालमभूत्। अतः सुरमा, पूर्वं पतिगृहाल्लब्धं हैममाभरणमन्तरान्तरा विक्रीय, तस्माल्लब्धेन धनेन, कथमपि भोजनादिव्ययजातं सम्पादयन्ती, तत्र न्यवसत्।

अथैकदा सुबालायाः सुतां मसूरिकया समाक्रान्तामालोक्य दासो भीतभीतस्तं वासं तदैव परित्यज्य कुत्रापि पलायिष्ट। सुबाला खलु सम्प्रति पश्चात्तापानलेन दंदह्यमाना भयविह्वला किंकर्त्तव्यतामूढा संजाता। रात्रिन्दिवं तनयां शुश्रूषमाणा सा दिनत्रयं निराहारनिद्रं तत्रैवागमयत्। अथ चतुर्थेऽहनि साऽपि मसूरिकया विलीढावयवा जाता। ततस्तत्रत्यस्य कस्यापि परमकारुणिकस्य राजपुरुषस्य साहाय्येन सकन्यका सा राजकीयमसूरिकाचिकित्सागारं प्रापिता। परन्तु तस्याः कन्यका दिनत्रयाभ्यन्तर एव तत्र पञ्चत्वमवाप। सा मासेन रोगमुक्ताऽपि तथा विकृतरूपा संवृत्ता यथा सुबालेति तां न कोऽपि प्रत्यभिज्ञातुं प्राभूत्। सा

चिकित्सालयाद् बहिरागत्य, महता कष्टेन तं पूर्वमावासं प्राप्य, तं वासं विजनं भग्नद्वारं हृतसर्वस्वं चाद्राक्षीत, अश्रौषीच्च तत्रत्येभ्यो यत् तस्यां चिकित्सालयं गतायां, दासस्तद्भवनं पुनरागच्छत्; ततः स तत्रत्यां कामपि साध्वीं देवीं कुपथं नेतुं यतमानस्तया रोषकषायितनेत्रया कृत्तकर्ण-नासः, पलायमान एकस्मिन् प्रान्तरे मृतः, शृगालसारमेयादि-भक्ष्यतां गत इति। निशम्यैतत् सर्वं, सा उन्मादिनीव तारहासं जगाद—'अहो बत, नूनं महतः पाप्मनः फलमेतत्; नूनं तस्य मम च महतः पाप्मनः फलमेतदिति।' इत्थं वदन्त्येव सा तस्मात् स्थानात् निरगात्। तदनु, बहून् मासान् नासीत् तस्याः काचित् प्रवृत्तिः। अथ गते चतुर्थेऽहनि, सा लक्ष्णपुरे तस्याः पत्युर्गृहद्वारि पतिता मुमूर्षुश्चादृश्यत। वन्द्योपाध्यायस्तु तां कामपि भागधेय-हतक-विलसित-कवलितां मन्यमानस्तस्याः सकाश-मागत्य सकरुणमपृच्छत्—'का त्वम् अबले? कथमियं ते समवस्था? कुत्र गच्छसि? किं याचसे' इति। सा नेत्रद्वयमुन्मील्य पतिं पुरतो दृष्ट्वा, महता क्लेशेन, सगद्गदं, शनैः शनैरभणत्—'त्वम्! अहं सुबाला; क्षमस्व, मां क्षमस्व नाथ' इति। मुहूर्तेनैव वन्द्योपाध्यायः सर्वं वृत्तं स्पष्ट-मबुध्यत। स सहसैव सुबालायाः सविधे उपविश्य तस्याः शिर उत्सङ्गोपरि न्यधारयत्। साऽपि परमानन्दसंफुल्लनेत्रा तं पश्यन्ती चिराय नयनयुगलं मुकुलितमकरोत्। अथ पत्न्याः पावकसंस्कारं विरचय्य वन्द्योपाध्यायः कुत्र गत इति न जाने।

अतोऽहं ब्रवीमि—'करुणतरः खलु कश्चिद् वृत्तान्तः संजात' इति।

गणेशः—बन्धो, नितरां दुःखाकरोऽयमुदन्तः। अहो शिक्षितेति-नामधारिणो मानवापसदस्य दासस्य सुबालायाश्च पाप्मनो दारुणः परिणामः! अहो वन्द्योपाध्यायस्य दैवदुर्विपाकः! सत्यं हृदयमर्मच्छिदः खलु इमे संसारवृत्तान्ताः।

इत्थं रमेशस्य निर्माणभागधेयमधिकृत्य एव जल्पन्तौ तौ सखायौ,

'रात्रिरागते'ति परस्परमभिवाद्य, पुनर्दर्शनाय, यथाभिमतदेशं प्रति प्रस्थितौ।

अथ यत्नशतान्यपि कुर्वाणैरस्माभी 'रमेशः कुत्र गतः, तस्य किमभवदि'ति काचिदपि प्रवृत्तिरद्यापि नोपलब्धा।

अहो विपाकः!

---

# वेदना

[ निबन्धकः—श्रीयोगेन्द्रमोहनविद्यारत्नः ]

निजकर्मवशेन मानवः फलमाप्नोति शुभं तथाशुभम्।
अनभीप्सितलाभदुःखितः परमीशं कुरुतेऽत्र दोषिणम्॥१॥

सुखभोगशतैः सुलालितो भगवन्नाम न जातु चिन्तयेत्।
अथ दुःखमुपैति चेदिमं कतिधा स्तौति तदायमीश्वरम्॥२॥

अहमस्मि तथाविधो नरो भृशमार्त्तो बत दुःखकोटिभिः।
चरणं शरणं तवाद्य मे ननु माता तनये न निर्द्दया॥३॥

सुतरां सुतदुःखकातरा जननी स्नेहपरा स्वभावतः।
अतएव सुतस्य साहसं जननीमाश्रयितुं कृतागसः॥४॥

प्रतिगेहमहो समन्ततो बत शोकानलशौर्य्यनिर्ज्जितः।
मनुजो मरणं नु शान्तिदं मनसीत्थं कुरुते विनिश्चयम्॥५॥

पतिपुत्रसहोदरादितः प्रवियुक्ता मनुजा निरन्तरम्।
नयनाम्बुनिरुद्धदृष्टयो विलपन्तो गमयन्ति वासरान्॥६॥

अगदैरनिवार्य्यविक्रमः कतिधा रोगचयो दिने दिने ।
कुरुते शमनालयातिथीन् जननीक्रोडगतान् नरान् भृशम् ॥७॥

ननु संयमशून्यमानसा ऋषिवाक्यामृतहीनलालसाः ।
हठकारितया पदे पदे विपदं यान्ति जनाः परां सदा ॥८॥

नियतं किल भोगवासना परिपुष्टहृदये दुरायतिः ।
सुपथान् मनुजान् प्रसह्य धिक् कुपथं हा गणिकेव कर्षति ॥९॥

अधुना विनयं प्रसूयते न च विद्या मनुजाय कर्हिचित् ।
न च पात्रपदेन भूषितो धनधर्म्मादिकमेति कोऽपि वा ॥१०॥

पथिकप्रमदा प्रमोदते न च होमानलधूमदर्शनात् ।
पतिसङ्गतिलाभलोलुपा जलमुग् भ्रान्तिवशेन कुत्रचित् ॥११॥

अतिथिप्रणयान्न चाधुना पितरौ पुत्रशिरः प्रयच्छतः ।
न च पक्षिविमुक्तये नृपो बत दत्ते पललं स्वगात्रतः ॥१२॥

न च तातनिदेशतः सुतस्तृणवद्राज्यसुखं विहाय हा ।
वनमेत्यधुना मुनेः समः पितृभक्तिं परिपालयन् पराम् ॥१३॥

सकलं किल पूर्व्वकालतो विपरीतं परिदृश्यतेऽधुना ।
फलमस्य तथैव दुःखदं क्रमशः पुष्टिमुपैति सर्व्वथा ॥१४॥

पुनरत्र तवानुकम्पया सकलं पूर्व्ववदेव जायताम् ।
वसुधा बहुशस्यभूषणा वसुवृष्टिं कुरुतां समन्ततः ॥१५॥

तव मातरनुग्रहेण नो विलयं दुःखचयोऽद्य गच्छतु ।
बहुतर्षसमाकुलात्मनां तव पादे मतिरस्तु नः सदा ॥१६॥

पुनरत्र तथैव नृत्यतु प्रतिगेहं परिपुष्टदेहभृत् ।
तव भक्तिगृहीतमानसः शिशुसङ्घः पितरौ प्रमोदयन् ॥१७॥

जनता सततं स्वधर्म्मभाग् गतिरेका जननि ! त्वमेव नः ।
इति बुद्धिमुपेत्य शाश्वतीं तव तुष्टिं विदधातु पुष्कलाम् ॥१८॥

इह संयमकल्पपादपो जननि ! त्वत्कृपया प्ररोहतु ।
पुनरत्र तथैव तत्फलैर्बुधान्वर्थतमा विराजताम् ॥१९॥

पुनरेव च सामशब्दिता धरणी होमपवित्रगन्धधृक् ।
नरचित्तगतां सुदुष्टतां परिमार्ष्टु प्रसभं चिरेण ताम् ॥२०॥

रोगशोकजराभीतमभीतं त्वत्पदाम्बुजम् ।
भ्रमरायितचित्तं मां कृतार्थय हरप्रिये ॥२१॥

———

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| September, 1933. | १८५५ शकीये भाद्रे १६श-वर्षस्य ५म-संख्या | Vol. XVI No. 5 |


## उद्भटश्लोकः

विदितमेवैतत् प्रायेण व्याकरणतन्त्रनिष्णातानां यत् सन्ति खलु संस्कृतभाषायाम् 'इयत्' 'अधुना'प्रभृतयः केचन शब्दाः केवलप्रत्ययरूपा इति। तथा हि इदं परिमाणमस्या इति इदंशब्दात् "किमिदंभ्यां वो घः" [पा० ५।२।४०] इति वतुप्, वस्य घादेशश्च। "आयनेयीनियियः फढखछघां प्रत्ययादीनाम्" [पा० ७।१।२] इति घस्य इयादेशः। "उपदेशेऽजनुनासिक इत्" [पा० १।३।२] इति उकारस्येत्त्वम्, "हलन्त्यम्" [पा० १।३।३] इति पस्य इत्त्वम्। "तस्य लोपः" [पा० १।३।९] इति उकारपकारयोर्लोपः। ततश्च इदम् इय् अत् इति स्थिते "इदंकिमोरीश्की" [पा० ६।३।९०] इति इदम ईशादेशः। "हलन्त्यम्" इति ईशः शकारस्येत्त्वम्। शित्त्वात् "अनेकाल्शित् सर्वस्य" [पा० १।१।५५] इति सर्वादेशः। ततश्च ई इयत् इति स्थिते "यस्येति च" [पा० ६।४।१४८] इति ईकारस्य लोपः। ततश्च इयत् इति प्रत्ययमात्रमवशिष्यते। अधुनाशब्देऽप्येवम्। तथा च पाणिनीयं सूत्रम्—"अधुना" [पा० ५।३।१७]। व्याख्यातं चैतट्टीकाकृद्भिः—

इदमः सप्तम्यन्तात् कालवाचिनः स्वार्थे अधुनाप्रत्ययः। "इदम इश्" [ पा० ५।३।३ ] इति इश्। "यस्येति च" इतीकारलोपे प्रत्ययमात्रमवशिष्यते। एतत् सर्वमभिसमीक्ष्य इयच्छब्दमधिकृत्य केनापि कवयितम्—

**उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ**
**गतवति विलयञ्च प्राकृतेऽपि प्रपञ्चे।**
**सपदि पदमुदीतं केवलः प्रत्ययो यत्**
**तदियदिति मिमीते को हृदा पण्डितोऽपि॥**

इति। कैश्चित् पुनरधुनाशब्दसञ्जिघृक्षयाऽत्रत्यश्चतुर्थश्चरणः "तदियदिति मिमीते कोऽधुना पण्डितोऽपि" इत्येवमपि पठ्यते।

अस्यार्थः। शास्त्रं व्याकरणं वेदादिकञ्च योनिः कारणं यस्य, प्रत्ययादीनां व्याकरणमूलकत्वात्, सिद्धानामेव शब्दानां प्रकृतिप्रत्ययकल्पनया व्याकरणेनान्वाख्यानात्, ब्रह्मज्ञानस्यापि शास्त्राधीनत्वात्। परस्मिन् प्रत्यये परवर्त्तिनि प्रत्ययसंज्ञके। यद्यपि "परश्च" [ पा० ३।१।२ ] इति सूत्रेणोत्सर्गतः प्रत्ययानां परभावित्वमेव सिद्धम्, तथाऽपि द्वैतीयीके पक्षेऽस्योपयोगः। पक्षे परस्मिन् ब्रह्मणि, प्रत्यये तद्विषये ज्ञाने च उदितवति प्रादुर्भवति सति। प्रत्ययस्य प्रादुर्भावानन्तरं प्राकृतेऽपि प्रपञ्चे प्रत्ययस्य प्रकृतेरिदमः सम्बन्धी यः प्रपञ्चो विस्तारः 'इदंकिमोरीश्की' इत्याद्यनुशासनकार्यम् ईशादेशादिस्तस्मिन् इत्यर्थः। विलयं नाशं गतवति प्राप्तवति, "यस्येति च" इति सूत्रेणेति शेषः। पक्षे प्राकृते मायामये प्रपञ्चे जगदादिके विलयं गतवति, ब्रह्मज्ञानसमधिगमानन्तरं प्रपञ्चस्य ब्रह्मणि एव विलीनत्वात्। सपदि सद्य एव केवलः प्रत्ययः प्रकृतिभागविनाकृतशुद्धप्रत्ययस्वरूपम्, पक्षे केवलं ज्ञानमयमेव यत् पदं पदसंज्ञकं ब्रह्मरूपं च वस्तु उदीतं प्रादुर्भूतं तत् इयत् इत्येतत् पदम् एतावत् इति च कः पण्डितोऽपि, मूर्खस्य तु कथैव नास्तीत्यपिशब्दार्थः। कः हृदा मनसा मिमीते जानाति। अर्थद्वयस्यैकवृन्तावलम्बिफलद्वयन्यायेन प्रतीतेः

## IMPORTANT NOTICE.

The July number of the Sanskrit Sahitya Parishad contains a hitherto unpublished commentary on the Uttara-Megha and will consist of 64 pages. We regret very much it could not be published in time. It is expected that the number will come out of the press at the end of this month and despatched immediately.

Editor, Sanskrit Sahitya Parishad

1. 11. 33.

## विशेषतो द्रष्टव्यम्

विषीदामस्तमां तावद्वाचकमहोदयेभ्यो विज्ञापयितुं यत् कुतश्चित् प्रतिबन्धकात् ६४ पृष्ठात्मिका संस्कृत-साहित्य-परिषत्-पत्रिकाया आषाढसञ्चिका नाद्यापि विनिर्गता मुद्रणालयात् इति । आशास्यते च मार्गशीर्षस्य प्रारम्भे एव कविकुलचूडामणेः कालिदासस्य सरस्वतीनिष्यन्दं वहन्त्यसौ समलङ्करिष्यति करसरोजानि पाठकमहाभागानामिति ।

संस्कृत-साहित्य-परिषत्-पत्रिका-सम्पादकः ।

श्लेषोऽत्रालङ्कारः। वैयाकरणे वैदान्तिके वा वक्तरि शब्दशक्तिमूलको ध्वनिः, प्रकृताप्रकृतोभयश्लेषे विशेष्यश्लेषानङ्गीकारात्।

अलङ्कारसर्वस्वस्य समासोक्तिप्रकरणेऽपि ईदृशमेव श्लोकान्तरमुपलभ्यते। तथा च तत्र आगमशास्त्रप्रसिद्धे वस्तुनि व्याकरणशास्त्रप्रसिद्धवस्तुसमारोपस्योदाहरणम्—

**यैरेकरूपमखिलास्वपि वृत्तिषु त्वां**
**पश्यद्भिरव्ययमसङ्ख्यतया प्रवृत्तम्।**
**लोपः कृतः किल परत्वजुषो विभक्ते-**
**स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये॥**

अत्र परमेश्वरेत्यामन्त्रणपदमूहनीयम्। यैः अखिलासु सर्वासु वृत्तिषु चित्तवृत्तिषु कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु च एकरूपं रूपान्तरमभजमानम्, अत एव च असंख्यतया प्रवृत्तं संख्यातीताकारैः परिदृश्यमानम्, असत्त्ववचनत्वात् संख्याया अप्रतिपादकम्, अत एव अव्ययम् अविनाशिनं पदभेदं च पश्यद्भिः वेदान्तिकैः वैयाकरणैश्च परत्वजुषः विभक्तेः अन्यत्वं भजमानस्य जगत्प्रपञ्चरूपस्य विभागस्य, नियमेन प्रातिपदिकात् धातोर्वा परदेशवर्त्तिनः सुपस्तिङो वा लोपः कृतः विलोपः संसाधितः तैः समधिगततत्त्वज्ञानैः न तु वासनाजालविनिरुद्धचित्तवृत्तिभिः पामरैरित्यर्थः, तव लक्षणं साक्षात्करणं व्यावर्तकधर्मश्च कृतं ध्रुवं निश्चितं कृतं मन्ये। अत्र श्लेषवशेन विशेषणसाम्यं निमित्तं समासोक्तेः। न चात्रापि शब्दशक्तिमूलो ध्वनिरेवास्त्विति वाच्यम्, अत्र विशेष्यस्याश्लिष्टत्वात्।

---

# कातन्त्रस्य वैशिष्ट्यम्*

सहृदयाः, कस्य वा भारतवर्षीयस्य न विदितं कातन्त्रं तन्त्रम्? केन वाऽक्षरमुखेण नाकर्णितं कातन्त्रव्याकरणगता किंवदन्ती? परं विरला एव तथाविधा भारतीया यैः सावधानेन मनसा पर्यालोचितानि कातन्त्रसूत्राणि, तन्त्रान्तरतुलनया च प्रतिपन्नममीषां वैशिष्ट्यम्। अत एव पाणिनितन्त्रपक्षपातिभिरप्यस्माभिः कातन्त्रसमुत्कर्षविमोहितमानसैस्तद्-वैशिष्ट्यमवश्यमेव प्रकाशनीयं विपश्चितां पुरत इत्येव चिरं स्थिरीकृतम्। एतदर्थं च प्रकटनपत्रमपि प्रेषितं पारिषद्यानां सविधे। परं शरीरस्य अस्वास्थ्यान्नैव प्रभूयते विस्तरेण सर्वं विवरीतुम्, केवलं भवतामाराधना-यातिमात्रं संक्षेपेण किञ्चिदुच्यते।

न खल्वेतन्न विदितं विदुषां वर्याणां भवतां यद् भाषायामुपलभ्यमाना एव शब्दा व्याकरणेनान्वाख्यायन्ते, न सृज्यन्ते नूतनाः शब्दा न वार्थेष्वनु-विधीयन्ते। शब्दानामन्वाख्याने च लाघवमेव सर्वथा समाद्रियन्ते वैयाकरणाः। अत एव जागर्त्ति तेषां परिभाषा अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः इति। एतल्लाघवव्यसनितयैव पाणिन्यादिभिर्महर्षिभि-ष्टिघुभादयः संज्ञाः समुद्भाविताः, एतद्वशवर्त्तितयैव च प्रत्ययानामपि विपर्यासः सम्पादितः। अत एव स्वादिपञ्चसु नकारस्य विस्पष्टतया समुच्चारणेऽपि शतृप्रत्ययः प्रकल्पितः पाणिनिना महर्षिणा। परमौत्सर्गिकस्य गौरवस्य प्रयत्नसहस्रेणाप्यपह्नोतुमशक्यत्वात् तदर्थं नकारागमस्वीकारोऽपि आवश्यकीभूतः। अत्र महर्षेरयमाशयः—शतृप्रत्ययस्थले स्वादिषु पञ्चसु नकार उपलभ्यते, शसादिषु षोडशसु पुनर्नोपलभ्यते, अत एव पञ्चस्वेवोप-लम्भात् षोडशसु चानुपलम्भात् आधिक्येन व्यपदेशा भवन्ति इति न्यायेन

* संस्कृतसाहित्यपरिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः।

प्रत्ययस्य नकारशून्यत्वं सर्वनामस्थानेषु च नकारागमः कल्पनीयम् इति। परन्तु जगति सर्वत्र लाघवं नैव सन्दृश्यते। अत एवोक्तमालङ्कारिकवर्य्येणाऽऽशाधरभट्टेन "स्त्रीपुंसयोरन्यतरो लाघवाच्छिशुकुन्न किम्।" अत्रैतदपि विचार्यम्—यद्यादितस्तत्र नकारो नाभविष्यत् तर्हि कुतो वोड्डीयाऽऽगत्य स्थानमधिकृत्य समुपावेक्ष्यत्। आदितो वर्तमानश्चेत् स्वरसञ्चारवशेन तस्याक्षरस्य निघाते सति द्रुततरोच्चारणक्रमेण नकारात् पूर्वस्य स्वरस्य लोपे सञ्जाते व्यञ्जनस्यास्य स्वरेणाव्यवहितस्योच्चारणसौकर्यार्थं व्यञ्जनस्यापि नकारस्य स्वरप्रायत्वं विहितम्। स च स्वरप्रायो वर्णः संस्कृतभाषायां ग्रीक्भाषायां च स्वररूपेण परिणतः लातिनादिभाषासु पुनः स्वरसहितानुनासिकरूपेणैव समवस्थितः। अत एव मन्धातोः क्तप्रत्यये मत इति रूपम्, न तु मन्त इति। एवञ्च कातन्त्रसमनुशिष्टः शन्तृङ्प्रत्यय एव भाषातत्त्वस्य नियममनुरुध्यते न तु पाणिन्यादिकल्पितः शतृप्रत्ययः।

पारिभाषिकशब्दस्थलेऽपि स्वत एवार्थप्रतिपादिकाः संज्ञाः सर्ववर्माचार्येण समादृता न पुनर्यदृच्छाकल्पिताष्टिघुभसदृशाः। अग्निश्रद्धादयोऽपि विनैवायासं शक्यन्ते बोद्धुम्। पारिभाषिकशब्दाश्चेमे प्रातिशाख्यादिषु प्राचीनतमेषु वैयाकरणप्रबन्धेषु बाहुल्येनोपलभ्यन्ते, तेनैषामपि प्राचीनत्वं सिध्यति। केवलं सप्तमी-पञ्चमीत्येतद्द्वितयस्थले व्यभिचारः सन्दृश्यते। अत्रैतदपि सुतरामाश्चर्यकरं यदादौ सप्तम्युपनिबद्धा तत ऊर्द्ध्वं च पञ्चमी। सप्तमी पञ्चमी इत्येव संज्ञाद्वयं प्रकल्पनीयमित्याग्रहेऽपि प्रथमोपस्थितस्य परित्यागे कारणाभावात् आदौ पञ्चमी संज्ञा सन्निवेशनीया तत ऊर्द्ध्वं सप्तमीति स्फुटमेव विदुषाम्। अत एवात्र केनापि कारणेन भवितव्यं यद्वशतः पारिभाषिकशब्दान्तरवैषम्यमुररीकृत्य प्रथमोपस्थितन्यायं च सुदूरमुत्सार्य सप्तमी पञ्चमीति संज्ञाद्वितयं विहितम्। इतरासां संज्ञानामन्वर्थत्वं व्याख्याकृद्भिः प्रतिपादितं परं संज्ञाद्वयस्यास्य व्युत्पत्तिनिमित्तं कुत्रापि नोदलेखि। प्रयोगरत्नमालाकारेणापि पुरुषोत्तमेनात्र कारणपौष्कल्यमपश्यता वर्त्तमानालिङ्लोट्ह्यस्तनीत्यादिरूपेण तिङ्विभक्तयः

प्रदर्शिताः। मया तु चिरं पर्यालोच्यैवमत्रावधारितम्। सप्तमीसंज्ञा तावत् लिङ्संज्ञा पाणिनीयानां पञ्चमी च लोट्। पाणिनिना लकारोत्तरस्थ-स्वरक्रमेण तत ऊर्द्ध्ववर्तिटङक्रमेण च संज्ञा विहिताः। लेटश्छन्दोमात्र-गोचरत्वात् लेटं वर्जयित्वा संज्ञानां परिगणने लोटः पञ्चमत्वं लिङश्च सप्तमत्वं व्यक्तमेव। अत एव कारणविशेषवशेन समुच्छिन्ने स्वीये संज्ञा-द्वितये पाणिनीयक्रमानुसारेणाभिनवं संज्ञाद्वितयं समुद्भावितम्। न च सर्वत्रै-वाभिनवं वर्त्म कर्षतां सर्ववर्माचार्याणां पाणिनिसरण्यनुसरणं सुतरामसम्भाव्य-मित्याशङ्कनीयम्, पाणिऽनेरपि विषयविशेषे कालापमार्गानुसरणसन्दर्शनात्। तथा हि-सु औ जस् अम् औ इति पञ्चकस्य पाणिनिना सर्वनामस्थानमिति संज्ञा विहिता। विपुलाया अस्याः संज्ञायाः करणे कारणं प्रदर्शयितुं नैव प्राभावि निपुणतमेनापि व्याख्यात्रा। अत एव सर्वात्मना प्रयतमानैरपि संज्ञाकारणं विनिर्देष्टुमशक्नुवद्भिर्व्याख्याकृद्भिरुक्तम्—पूर्वाचार्यानुपालब्धु-मेषा महती संज्ञा क्रियते इति। एतत् खलु प्रकारान्तरेण सूत्रकारस्याशयस्फोरणे स्वासामर्थ्यनिवेदनम्। अस्मन्मते स्वादिषु पञ्चसु सर्वं नाम तिष्ठति, तदितरेषु पुनर्नकारलोपादिकमनुभवति अत एव स्वादीनां सर्वनामस्थानमिति संज्ञा। सार्वधातुकस्थलेऽपि एषैव रीतिः। एषा तु संज्ञा पाणिनिमतेन नैव सङ्गच्छते पाणिनिना शतृप्रभृतीनां विधानात्, सर्ववर्माचार्यमतेन पुनः सम्यक्तया लगति। अत एवात्र महर्षिणा पाणिनिना यस्य तावन्मतं सर्ववर्मणा समनुसृतं तस्यैव मतमनुसृतमिति प्रतिभाति।

कस्तावद् ग्रन्थः सर्ववर्मण आदर्शस्थानीय आसीदिति विचारे ऐन्द्रमेव व्याकरणमनुसृतं सर्ववर्मणा इति प्रतिपद्येरन् सर्वे। अत एव वोपदेवेन बुधवरेण प्राचीनवैयाकरणपरिगणनावसरे—

> इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः
>
> पाणिन्यमरजैनेन्द्रा जयन्त्यष्टाऽऽदिशाब्दिकाः॥

इति कारिकायां सर्ववर्मणो नाम नोदलेखि। सर्वथा सर्ववर्मण एव

मतानुसारिणो वोपदेवस्य तन्नामानुल्लेखे अन्यत् किमपि कारणमुपन्यस्तुं न शक्यते।

सहृदयाः दिङ्मात्रमद्यात्र प्रदर्शितम्। कातन्त्रस्य सारल्यं समीचीनत्वञ्चाधिकृत्य सुविस्तरतरः प्रबन्धोऽचिरादेव प्रकाश्यते इति शिवम्।

---

# रसमयी

### प्रथमः परिच्छेदः

सहधर्मिण्या साकं विगृह्णता सन्दधता च क्षेत्रमोहनमहोदयेन नीतमष्टादशवर्षव्यापि दाम्पत्यं जीवनम्। विरलाः खलु वङ्गेष्वेवंविधा रणरङ्गिण्यः सहधर्मिण्यः।

क्षेत्रमोहनस्य वयस्तावदिदानीं चत्वारिंशद्वर्षाणि पत्न्याश्च रसमय्यास्त्रिंशत्। रसमयी—अहो प्रकर्षस्तस्य प्रतिभाया येन नामेदं दत्तम्! अथवा रसा अपि बहुविधा वर्त्तन्ते—अत्र तावद्रौद्रो रसः।

क्षेत्रमोहनः खलु वङ्गभाषाभिज्ञो मोक्तारपदवाच्यो व्यवहाराजीवः। हुगुलीप्रदेशमधिवसन्नसावनल्पं वित्तमुपार्जयति। तस्याभिजनस्तु हुगुलीप्रदेशादन्यत्र कुत्रचित् पल्ल्याम्। परं नगर्यामेव गृहं निर्माप्य तत्र निवसतस्तस्य व्यतीतानि कतिचिद्वर्षाणि।

एतत्त्वतिमात्रं विषादस्थानं यदद्यापि क्षेत्रमोहनस्य सन्तानो न सञ्जातः—यथा च पत्न्या वयस्तथेत ऊर्द्धं भविष्यतीत्यपि न सम्भाव्यते। तस्य मातृष्वसृपितृष्वसृप्रभृतयो बन्धवश्चिरं तं पत्न्यन्तरपरिग्रहाय निर्बध्नन्ति, क्षेत्रमोहनस्यापि वर्त्तते तत्राऽऽन्तरोऽभिलाषः, परं रसमय्यास्त्रासादत्रापि प्रयासमास्थातुं नोत्सहते।

अवसरे चास्मिंस्तुच्छं कमपि वृत्तान्तमन्तरेण रसमयी महान्तं विक्षोभं संजनय्य क्षेत्रमोहनं दिनद्वितयं गृहभ्रष्टं व्यदधात्। अन्ततश्च स्वयमपि हालिसहरावस्थितं पित्रालयमगच्छत्। ततश्च क्षेत्रमोहनः प्रतिपन्न-धैर्यो गृहं प्रत्याववृते, प्रतिजज्ञे च—न खलु पुनरपि द्रक्ष्यामि रसमय्या मुखम्, अन्यत्र दारान् परिग्रहीष्यामि, गृहे चास्मिन् रसमय्या पुनः प्रवेशश्च न सहिष्ये अयमेवान्तिमस्तस्या गृहत्याग इति।

---

द्वितीयः परिच्छेदः

हालिसहरो ग्रामस्तावद् हुगल्या एवापरस्मिन् पारे समवस्थितः, अन्तरा च प्रवहति भागीरथी। चतुर्धुरीणपल्ल्यां रसमय्याः पित्रालयः। महान् खलु कालस्तस्याः पित्रोरुपरतयोः। इदानीं भवने तस्मिन् रसमय्या विधवाऽन्तिका विनोदिनी कनिष्ठौ च भ्रातरौ नवीनसुबोधौ निवसन्ति। भ्रात्रोर्नवीनः काँचरापाडास्थनिर्माणशालायां कर्मकरः, सुबोधः पुनर्विद्यालयं परित्यज्य गृहमेवाध्यास्ते, अद्यापि किमपि कर्म तेन नाधिगतमिति।

व्यतीतस्तावन्मासतोऽप्यधिकः कालो रसमय्या हालिसहरमाव-सन्त्याः। इतः पूर्वमेवंविधेषु व्यतिकरेषु द्वित्रैरेव दिनैः—सर्वथा चिरं चेत् सप्ताहत एवोर्द्ध्वं—क्षेत्रमोहनो दन्तयोस्तृणमादाय समुपस्थितोऽभवत्, अनुनीतिसहस्रपुरःसरं च सहधर्मिणीं पुनरपि गृहमनयत्। अवसरे चास्मिन्नेतस्य व्यतिक्रमं सन्दृश्य लेशत उद्विग्ना सञ्जाता रसमयी।

पल्लीस्थः कश्चन बालकः प्रतिदिनं नावा गङ्गां तीर्त्वा हुगलीशाखा-पाठशालायामध्ययनार्थं गच्छति। तेन च ग्रामे प्रचारितम् प्रत्यासन्नः क्षेत्रमोहनमहोदयस्य पुनरुद्वाहः, दिनमपि निर्धारितमिति।

तच्छ्रुत्वा रसमय्या अन्तिका विनोदिन्येकदा बालकं तं स्वगृहे समाहूय, विविधानि च मृष्टान्नानि भोजयित्वोवाच—"वत्स, श्रुतमिव

जनमुखात् क्षेत्रमोहनः पुनरपि परिणेतुमुद्यत इति। किमेतत् सत्यम् ?"

बालकोऽवदत्, अथ किम्। बाढं सत्यमेवैतत्। श्रेण्यामस्माकं सुरेशनामैको बालकोऽधीते। इतो नातिदूरवर्त्तिनि चुचडाग्रामे तस्य मातुलालयः। तस्य मातुलसुतया साकं परिणयः।

अपि सम्यग् ज्ञायते ?

सम्यगेव विजानामि। सुरेशेनैव तावन्मत्सविधे प्रोक्तम्। दिनमपि निर्धारितम्।

किं तावत् तस्य मातुलस्य नाम ?

नाम तावत् हरिश्चन्द्रचट्टोपाध्यायः। धर्माधिकरणेऽसौ कर्मकररूपेण नियुक्तो वर्त्तते।

अपि जानासि वत्स तेषां गृहम् ?

अथ किम्। जानाम्येव। कति वारान् सुरेशेन साकं तत्र गतवानस्मि।

कियत्तावद् वयः कन्यायाः ?

"अस्माकं समवयस्कैव स्यात्।" बालकस्य वयस्त्रयोदश वर्षाणि।

" कीदृशी तस्या आकृतिः ?"

"परमरमणीयैव।"

विनोदिनी कालं कञ्चिच्चिन्तितवती। ततश्चोक्तवती—भवतु। श्वस्तावदावां—भगिन्यौ द्वे तत्र नेतुं प्रभवेः ?

किमिति ?

वारमेकंताननुनीय पश्यावः। विवाहश्चेद् घटेत, मम भगिन्या अप्यसुखम्, तस्य कन्यकाया अपि सलिले समर्पणम्। श्वस्तावदावां तत्र नय।

कदा ?

भोजनादित ऊर्ध्वम्।

तर्हि पाठशालायां मेऽनुपस्थितिः स्यात्।

दिनस्यैकस्य कृतेऽध्यापकादवकाशं ग्रहीष्यसि। अहं तावत् तुभ्यं रूप्यकमेकं प्रदास्यामि, तेन क्रीडनकादीनि क्रेष्यसि। बालकः सोत्सुकं सम्मतिं विज्ञापयामास।

---

तृतीयः परिच्छेदः

परेद्यवि मध्याह्न एकादशवादनकाले बालकोऽसौ भगिनीद्वितयेन सह चुँचुडां प्रस्थितः। तीर्त्वा गङ्गां भाटकित्वा च घोटकशकटं सम्प्राप्तो हरिश्चन्द्रमहोदयस्य भवनम्। पक्षद्वारस्य च पुरतः शकटं संस्थापयामास।

रसमय्यवदत्, इदमेव गृहम्?

अथ किम्।

भवतु! त्वं तावच्छकटाभ्यन्तर एव उपविश। आवां पुनर्भगिनीं साक्षात्कृत्य समागच्छावः। इत्युक्त्वा द्वे एव शकटादवतीर्य प्राविशतां भवनाभ्यन्तरम्।

भवनस्थासु च स्त्रीषु कापि तदानीं स्नाति, कापि भुङ्क्ते, कापि वा भोजनान्ते प्राङ्गणे समुपविश्य केशान् वापयति। सपदि च अपरिचितं भद्रस्त्रीद्वितयं प्रविशद्विलोक्यैकया सविस्मयमुक्तम्, के युवाम्, भद्रे।

विनोदिन्यवदत्, आवां हालिसहराद् युष्मान् साक्षात्कर्तुं प्राप्ते इति।

स्त्रिया समुपजातसंशयया प्रोक्तम्—आगच्छतम्, उपविशतम्, ततश्च ताभ्यामलिन्दमारुह्योपविश्योक्तम्— का तावद् गृहस्य गृहिणी?

कामपि प्रौढां विनिर्दिश्य सर्वाभिरुक्तम्—इयमेव गृहिणीति।

गृहिण्योक्तम्—किमिच्छन्त्योर्युवयोरत्रागमनम्?

विनोदिन्यवदत्—युष्माकं कन्यकाया विवाह इव?

गृहिण्योक्तम्—अथ किम्। मदीयकनिष्ठकन्यकाया एव विवाहः।

कदानीम्?

माघमासस्य विंशतितम एव दिवस इति निर्धारितम्।

कस्तावद् वरः ?

क्षेत्रमोहनचक्रवर्त्ती। हुगल्यां व्यवहाराजीवः।

विद्यमानायामपि सपत्न्यां तत्र कन्यां समर्पयितुमुद्यताऽसि ?

प्रतिवाक्यमेव परिवर्धमान आसीद् गृहिण्या विस्मयः। साऽपृच्छत्—अपि ज्ञायते युवाभ्याम् ?

कथं न जानीवः—बलवदेव विजानीवः। अस्माकमेव ग्रामे तेन परिणीतम्।

गृहिण्योक्तम्—सत्यम्। कामं वर्तते सपत्नी, परं सा पत्नी तेन परित्यक्ता।

कालमेतावन्तं रसमयी तूष्णीमुपविश्य सर्वं श्रुतवती। तस्याश्च मानसः क्रोधः क्रमेणैव वर्धते स्म। एतच्छ्रुत्वा तस्याः पाणिपादं ठकूठकायते स्म लोचनयुगलमपि ताम्रतामभजत्।

विनोदिन्यपृच्छत्, अपि नाम श्रुतं कथं सा परित्यक्तेति ?

श्रुतम्, सा खल्वतीव कलहरतेति।

प्रविष्टमात्र एव वाक्येऽस्मिञ्छ्रवणविवरं रसमयी तटदित्युल्लम्फितवती। अलिन्दस्य कोणे सम्मार्जनीशलाकैकासीत्। निमेषमात्रेण तां हस्ताभ्यां धृत्वा गृहिण्यां शप्शप्शब्दपूर्वं प्रहर्त्तुमुपचक्रमे। किमिति किमिति। किं मरणायान्यत् स्थानं न लब्धम्। मम स्वामिनं वर्जयित्वा तव कन्याया अन्यो वरो न लब्धः ? न लब्धः—

स्वप्नेऽप्यसम्भावनीयेनानेन व्यतिकरेण क्षणं गृहस्थाः सर्वे प्रतिपत्तिमूढाः सञ्जाताः। ततश्च प्रारब्धो महान् कलकलः, अल्पवयसो बालिकाः क्रन्दन्त्यो धावन्त्यश्च का अपि पर्यङ्किकातले का अपि पुनर्मञ्जूषाया अन्तराले निलीनाः। गृहदासी उपविष्टा भोजनादिपात्राणि संस्कुर्वाणासीत्। सा पात्राणि परित्यज्य अब्रह्मण्यम्, अब्रह्मण्यम्, रक्षिपुरुषाः, रक्षिपुरुषाः इत्यारटन्ती द्रुतं विधावन्ती रथ्यामेवागच्छत्।

गृहस्थाश्चान्याः स्त्रियः समागत्य रसमयीमगृह्णन्। ततश्च रसमयी विहाय गृहिणीं तास्वेव तलमुष्टिनिष्ठीवनवृष्टिं प्राक्रमत। एकस्या वस्त्रं छिन्नवती अन्यस्याः केशाल्लुँञ्चितवती, अपरां नखेन निर्भिन्नवती तदितरां पुनरदशत् प्रयासातिरेकेण, द्रुतं श्वासं मुञ्चन्त्यवदत्, कन्यका तावत् कुत्र गता? सकृत् समानीयतां तावत् सा। नेत्रद्वयं तस्या निगाल्य गच्छामि, नासां तस्या निकृत्य गच्छामि, दन्तांस्तस्या भङ्क्त्वा गच्छामि।

कालमेतावन्तं विनोदिनी तूष्णीं स्थिता। क्रमेण च बहिर्द्वारि जनाः सम्मिलिताः कोलाहलं कर्त्तुं प्रारेभिरे। ततश्च तयोक्तम्, अन्तिके विरम, विरम। यथेष्टं संवृत्तम्. गच्छ, गृहं गच्छ।

दासी द्रुतं गृहं प्रविश्य प्रोवाच, मा देह्येतान् गन्तुम्। रक्षिकपुरुषाणां सविधे विज्ञापितं मया। राष्ट्रियः समागच्छति।

रक्षिकपुरुषशब्दमाकर्ण्य रसमयी प्रोवाच आगच्छ, अन्तिके, साधयावः। कुत्र गमिष्यसि। आगच्छतु तावद्राष्ट्रियस्ततो गमिष्यसि। एवमुक्त्वा इत्राः स्त्रियो रसमयीं धर्तुमग्रे प्रासरन्।

रसमयी लम्फप्रदानेन प्राङ्गणकोणात् मत्स्यकुट्टनीं कर्त्तरीमुपगृह्य मस्तकोपरि वेगेन घूर्णयन्त्युवाच, नरहत्योन्मादेनाऽऽविष्टाऽस्मि। अहं नरहत्योन्मादेनाऽऽविष्टाऽस्मि। सर्वान् निहत्य राज्ञा निहन्येय।"

तद्दर्शनेन सर्वाभिरेव स्त्रीभिः "हा हतास्मि" इत्युक्त्वा द्रुतं गृहं प्रविश्य द्वारमर्गलनिरुद्धं विहितम्। रक्षिपुरुष, भो रक्षिपुरुष, पलायतेऽपराधी इत्याक्रोशन्ती पुनरपि दासी रथ्यां समाक्रामत्।

ततश्च रसमयी भगिन्या सार्धं पक्षद्वारेण विनिर्गत्य शकटं समारुह्यावोचत्—नदीतरणस्थानं गम्यतामिति।

---

चतुर्थः परिच्छेदः

हरिश्चन्द्रमहोदयः क्षेत्रमोहनाय नैव सम्प्रददे कन्यामिति नैतत् पृथग् वक्तुमावश्यकम्। तस्य गृहिण्योक्तम्, सा खलु नरघातिनी। तत्र चेद्विवाह्यते कन्या, नूनं सा दुहितरं मे निहनिष्यति। त्वं तावदन्यत्र वरमन्विष्य इति।

परेद्यवि धर्माधिकरणं गतः क्षेत्रमोहनो हरिश्चन्द्रस्य मुखेन समशृणोन्निखिलं वृत्तान्तम्। क्रोधेनाऽऽपादमस्तकं सर्वाङ्गं तस्यादह्यत।

धर्माधिकरणतो गृहं प्रतिनिवृत्तः प्रक्षालितपाणिपादो यावदन्तःपुरमध्यासीनो क्षेत्रमोहनस्ताम्रकूटं निषेवते तावत् सपदि स्फटिकोपसारमुपसृत्य प्रविवेश भवनं रसमयी। कतिपयांश्च निमेषान् अनुत्सृज्य वाचं तूष्णीमेव क्षेत्रमोहने निचिक्षेप दृष्टिम्—तादृशीं दृष्टिम्, यया पुरा यतिभिर्ऋषिभिश्च भस्मीभावमापादिता जनाः।

क्षेत्रमोहनमहोदयोऽवदत्, "केन मनोरथेन समागताऽसि ?" रसमयी तावदसम्भाव्येन संयमेन प्रत्युत्तरितवती, "श्राद्धस्य कस्यचित् समुद्योगं विधातुमिति।" क्रोधेनास्फुरतां तस्या ओष्ठौ।

ताम्रकूटमासेवमानेन क्षेत्रमोहनमहोदयेनोक्तम्—"कस्य तावच्छ्राद्धम् ?"

"हरिश्चन्द्रचट्टोपाध्यायस्य कन्यायाः, कन्यायाश्च मातुः।"

'तर्हि श्राद्धद्वितयमित्युच्यताम्। तेन साकमात्मनोऽपि किमिति न निर्वर्त्यते ?"

"तत् खलु नेदानीं भविष्यति। पश्चिमे वयसि विवाहं करोषि किल ? !

ताम्रकूटसेवनयन्त्रमवनमय्य दरसमुद्दीपितेन क्षेत्रमोहनेनोक्तम्, "करोम्येव। कथं न करिष्यामि। किं त्वत्तो भयात् ?"

रसमयी हस्तौ सञ्चाल्य तारस्वरेण प्रोवाच, "कुरु तावत्। कृत्वा च तत्फलं पश्य।"

किं करिष्यसि त्वम् ?"

"न खलु विशेषतः किमपि। केवलं मत्स्यकुट्टन्या तस्याः कन्याया

नासां छेत्स्यामि—वक्षसि च दशमणसम्मितं प्रस्तरखण्डमेकं स्थापयिष्यामि।"

"तत्रापि कर्णनासं केनापि छिद्यते चेत्?"

"आगच्छ, ननु छिन्धि, त्वमेव तावच्छिन्धि किमन्येन?" एवमुक्त्वा रसमयी कट्यां हस्तद्वितयं सन्निवेश्य शरीरस्य पूर्वार्धं पुरतः प्रसार्य स्वमुखं क्षेत्रमोहनस्यातिमात्रं सन्निहितं व्यधात्।

पत्न्याश्चेदृशं विनयातिशयं समवलोक्य क्षेत्रमोहनः पुनरपि ताम्रकूट-सेवनयन्त्रमुत्थाप्य मनसि किमपि विचिन्तयंस्ताम्रकूटं निषेवमाणः स्थितः। पूर्वकायस्य प्रसारणेन यावत् क्लान्तिः समुपाजायत तावदपसार्य मुखं पुनरपि ऋजुभावेन दण्डायमाना स्थिता रसमयी। उवाच च, तर्हि गत्वा शीशांसिष्ये मत्स्यकुट्टनीम्? सम्बन्धे स्थिरीकृते वार्त्तां मे प्रेषय। मा खलु निभृतमेव निर्वर्तय शुभकर्म" इति।

क्षेत्रमोहनोऽवदत्, "न खल्वमृतायां त्वयि पुनरपि करोमि विवाहम्। कदा नु त्वं मरिष्यसि?"

एतच्छ्रुत्वा रसमयी सविद्रूपं हाः हाः इति उच्चैर्हसितवती। कदा मरिष्यामीति पृच्छसि? न खलु रसी ब्राह्मणी पुरा म्रियते। तस्य तावन्महान् विलम्बः। यदा ते विवाहयोग्यं वयो व्यतीतं स्यात्, यदा त्वं वार्धकेन जीर्णतरः स्याः, यदा मुखं ते भूमिं स्पृशेत्, यदा कोऽपि कन्याप्रदानं तुभ्यं नानुमन्येत, तदैवाहं मरिष्यामि।

यावद्दाम्पत्यो रसालाप इयतीं काष्ठामारूढस्तावद् बहिर्द्वारि शकट-नियन्त्रणशब्दोऽश्रूयत। रसमयी प्रोवाच, तर्हि एतदेव व्यवस्थितम्। साधयामीदानीम्। अन्तिका मे समीपवर्त्तिन्यां पल्ल्यां यातुर्गृहमगच्छत्। तया साकमागत्य त्वया सह मनोरथविनिमयं करोमीत्यचिन्तयम्।" एवमुक्त्वा रसमयी प्रस्थिता।

---

पञ्चमः परिच्छेदः

प्रोक्तपूर्वायाः सङ्कथाया अनन्तरं मासषट्कं व्यतीतम्। न खलु साफल्यमुपगतो रसमय्या अवलेपः। साम्प्रतं सा मृत्युशय्यामधिशयाना वर्तते।

वार्त्तामुपलभ्य क्षेत्रमोहनमहोदयो हालिसहरं प्रस्थितः। चिकित्सादि-विषये किमपि न पर्यहीयत, परं नैवाजीवद् रसमयी।

गङ्गातीरं प्रापय्य क्षेत्रमोहनमहोदयो निरवर्तयत् पत्न्या मुखाग्निक्रियाम्। अहो प्रभावो मायायाः! यया तावदेतादृशं कष्टं प्रतिपादितं तस्या अपि कृते आबद्धधारं प्रावर्तताश्रु क्षेत्रमोहनमहोदयस्य।

ततोऽपि मासषट्कं व्यतीतम्। क्षेत्रमोहनस्य पार्श्वचराः कुटुम्ब-बान्धवा नानादिगुद्देशेषु कन्यान्वेषणे व्यापारितवन्त आत्मानम्। अन्ततश्च हुगल्याः सविधवर्त्तिन्येव कस्मिंश्चिद् ग्रामे कन्याया वार्ता अधिगता। क्षेत्रमोहनः स्वयं गत्वा तामपश्यत्। बालासौ यौवनपदवीमुपारूढा कमनीयदर्शना च। विशेषतश्च कन्यायाः पिता धनिकधुर्यस्य कस्यचिद् भूस्वामिनो मन्त्री—सम्बन्धेनानेन तत्रत्या व्यवहारा अपि क्षेत्रमोहन-महोदयस्य करायत्ताः स्युः। कन्यायाः पिता रजनीकान्तघोषाल आङ्गलभाषायामपि व्युत्पन्नः।

विवाहगतं सर्वं दृढतया निर्णीतम्। वरस्य खुल्लतातो ग्रामात् समायातः, श्वस्तावत् कन्यावरयोराशीर्वादो वाग्दानञ्च। प्रातर्बहिःप्रकोष्ठे समासीन उपजीव्यैः साकं संलपन्नासीद् व्यवहाराजीवमहोदयः, खुल्लतातमहोदयोऽपि 'वङ्गवासि'पत्रमेकमादाय गृहकोणे ताम्रकूटं सेवमान आसीत्। अवसरे चास्मिन्, पत्रप्रापकः पुरुषः समागत्य क्षेत्रमोहनमहोदयस्य च पाणौ पत्रमेकं समर्प्य विनिर्गतः।

पत्राधारस्थं हस्ताक्षरं सम्पश्यतो व्यघूर्णत क्षेत्रमोहनस्य मस्तकम्। द्विस्त्रिश्चक्षुषी परिमृज्य पुनः पुनर्बाह्यनाम पर्यैक्षतासौ। समीपमानीय सुदूरं चावस्थाप्य विविधया रीत्या परीक्षामासासौ लेखम्।

अन्ततश्च वेपथुगृहीतपाणिः पत्रमुद्घाटितवान्। वाचनत ऊर्ध्वं विवर्णभावं प्रपेदेऽस्य वदनम्। उवाच च व्यवहारार्थिनः, "भवतु, इदानीं गम्यतां तावत्। अद्य शीघ्रतरमेव धर्माधिकरणं गमिष्यामि, तत्रैव सङ्कथादिकं भविष्यति" इति।

व्यपगतेषु व्यवहारार्थिषु खुल्लतातेनोक्तम्, पत्रमागतं क्षेत्तर ? इति।

भग्नकण्ठेन क्षेत्रमोहनेनोक्तम्, आर्य, अथ किम्।

"कुत्रत्यं पत्रम् ?"

"तदेव चिन्त्यते।"

क्षेत्रमोहनस्याऽऽकारं कण्ठस्वरस्य च विकृतिमुपलक्ष्य क्षुद्रकतातमहोदयः स्वासनादुत्थाय तत्समीपमुपागच्छत्। तदानीं च क्षेत्रमोहनो द्वितीयं वारं वाचयन्नासीत् पत्रम्। निरुद्धप्राया तस्य श्वासक्रिया, नेत्रद्वितयमप्यारूढं ललाटदेशम्।

खुल्लतातमहोदयः ससम्भ्रममवोचत्, "किम् ? किं तावदापतितम् ? न खलु काऽप्यशुभा वार्त्ता ?"

क्षेत्रमोहनमहोदयस्तूष्णीमेव समार्पयत् पत्रं खुल्लकतातस्य हस्ते। स च पत्रमादायोपनेत्रमन्विष्याऽऽमुञ्चन्नेत्रयोः। वातायनसविधे च स्थितस्तातमहोदयो वाचयितुमारेभे पत्रम्। साधारणे एव सूक्ष्मे लेखपत्रे नीलवर्णमस्या विलिखितम्, स्थानतिथ्यादिसमुल्लेखविरहितं तत् पत्रं च यथा—

ॐश्रीश्रीदुर्गा

स्वहायः।

प्रणामपूर्वकं नीवेदनञ्च वीसेसः,

मतीभ्रमस्ते सञ्जातः। मोन्यसे मृता रसमयी, व्यतिगता म आपत्, इदानीं विवाहं करवाणि इति। काममहं मृता तथाऽपि तावता लब्धा त्वया निष्कृतिरिति लेशतोऽपि मैवं मंस्थाः। भवनस्य पुरतो यस्तावद्वीशालो वटवृक्षो वर्तते तत्रैवाहमिदानीं निवसामि। त्वं किं करोसि कुत्र गच्छसि सर्वमेवाहं तत्रोपविष्टा पश्यामि। रात्रौ च वृक्षादवतीर्यान्तरान्तरा त्वदीयं

शयनगृहं गच्छामि। तव पर्यङ्कस्य च परितो भ्रमामि। अन्तरान्तरा चोपजायते मनोरथः कण्ठं ते विनिष्पिष्य त्वामपि सहचरं मे विदध्यामिति। अत्र च सहचराभावान्नितरां सीदामि। आकृतिश्च मे इदानीमतिमात्रं कुत्सिता सञ्जाता। नेदानीं मे गात्रेषु मांसं वा चर्म वा किमपि विद्यते। अस्थिमात्रमवशिष्यते, तदपि न पाण्डुरम्। गङ्गायास्तीरे यत्त्वं दग्धवानसि मां तेनास्थीनि मे कृष्णवर्णानि संवृत्तानि। यथा तथा वा भवतु, न खलु स्वमुखेनैव स्वरूपवर्णनं शोभते कस्यापि। मा कुरु विवाहम्। करोसि चेत् नूनमशेषा दुर्गतिर्लिखिता ते ललाटे विधात्रा। रसमयी।

पत्रपठनसमनन्तरं खुल्लतातमहोदयस्यापि वदनं मसीवर्णं सञ्जातम्। भीतभीतकण्ठोऽसावपृच्छत, "कस्येदं हस्ताक्षरम्? अपि प्रत्यभिजानासि त्वम्" इति।

"बाढं प्रत्यभिजानामि। तस्या एव हस्ताक्षरम्।"

"भगवानेव विजानाति।"

खुल्लतातमहोदयः समीपस्थे काष्ठासने समुपाविशत्। क्षणं च उपरि विनिक्षिप्य दृष्टिमवोचत्, जयति रामः, सीतारामौ, राम राघव रावणारे राम राम राम।

खुल्लतातमहोदयं च तदवस्थं वीक्ष्य क्षेत्रमोहनस्य समधिकैव भीतिरुपजाता। उवाच चासौ, ननु पृच्छामि, खुल्लतातमहोदय, भूतं कदापि विलिखति पत्रम्?

खुल्लतातमहोदयेन ससम्भ्रममुक्तम्, "शान्तं पापम्! न खलु भूतमिति वक्तव्यम्. उपदेवतेत्युच्यताम्। जयति राघवः रामचन्द्रः।"

उभावेव निर्वाचौ। अन्ततश्च खुल्लतातमहोदयोऽवोचत्, पश्य तावत्। कच्चित् कस्यचिद्दौरात्म्यमेतत्? एतदपि कथमपि सम्भवति? विविधास्तावद् भौतिकोपद्रववृत्तान्ता आकर्णिताः, परमीदृशं तु कदाऽपि नाऽऽपतितं श्रवणपथम्। भवतु। वधूमातुर्हस्तलिखितं पुरातनं पत्रादिकं किमपि वर्तते वा? तेन लेखस्य संवादः क्रियते चेत् सम्यक् स्यात्।"

क्षेत्रमोहन उवाच, पुरातनानि पत्राणि वर्तन्त एवेति। इत्युक्त्वा प्रविश्य भवनाभ्यन्तरं चतुःपञ्चानि पत्राणि बहिरानयत्।

खुल्लतातमहोदय उपनेत्रस्य काचद्वितयं कच्छप्रान्तेन सम्यक् परिमृज्य, पत्राणि च परिगृह्यावधानातिरेकेण लेखं संवादयितुमुपचक्रमे। अन्ततश्च तानि काष्ठासनोपरि निक्षिप्य दीर्घमुष्णं च निःश्वस्यावदत्, "एकमेव हस्ताक्षरं पश्यामि!" ततश्च पत्रवेष्टनमितस्ततो विपरिवर्त्य परीक्षितुमारेभे। तत् खलु शुभ्रं पत्राधारपुटकं यानि किल षडेव ताम्रमुद्रया लभ्यन्ते। तस्योपरि ताम्रखण्डद्वितयसम्मितं राजकीयपत्रखण्डमेकं विन्यस्तम्। क्षेत्रमोहनस्य हस्ते पुटकं समर्प्यावोचत्, दृश्यतां तावत् कुत्रत्या मुद्रा इति।

यद्यपि क्षेत्रमोहनमहोदयो वङ्गभाषाभिज्ञो "मोक्तार" आसीत्, तथाऽपि मुद्रितान्याङ्ग्लाक्षराणि वाचयितुमलमासीत्। मुद्रां तां परीक्ष्यावदत्, हुगल्या एव मुद्रा। ह्यस्तनी च तिथिः।

खुल्लतातमहोदयस्तूष्णीमुपविष्टः स्थितः। केवलमन्तरान्तराऽस्फुटमुवाच जयति रामः श्रीरामः सीतारामौ।

प्रत्यासीदति धर्माधिकरणगमनकाल इति दृष्ट्वा मोक्तारमहोदयो निर्वर्तितस्नानविधिरुपविष्टो भोजनाय, परं न प्रबभूव किमपि भक्षयितुम्। महानसस्यालिन्दे यत्र स भुञ्जान आसीत् ततो दृशोर्गोचरीभवति वटवृक्षस्याग्रभागः। भक्षयति च अन्तरान्तरा च निक्षिपति दृष्टिं तस्मिन् न्यग्रोधपादपे। एकदा च वृक्षस्य काचन शाखा खडखडायमानाऽकम्पत। कस्यचन हास्यकलकल इव चाश्रूयत। न खलु तत ऊर्ध्वं प्राचलद् भोजनं क्षेत्रमोहनमहोदयस्य। स तदात्व एव समुत्थितो भोजनासनात्। मुखं चाऽऽक्षाल्य बहिरागत्य कालं कञ्चित् वटवृक्षं प्रेक्षमाणः स्थितः। द्वित्राः काष्ठमार्जारा अनुशाखं परस्परमनुधावन्तो भ्रमन्ति। केचन च वायसाः समुच्चशाखासु सन्निषण्णा गायन्ति जातीयसङ्गीतम्। एतद्व्यतिरिक्तमपरं किमपि नापश्यत्।

( क्रमशः )

# बार्णार्ड् शमहोदयः

ये तावद्विपश्चित्प्रवराः परिमण्डयन्तीदानीं जगन्मण्डलं तेष्वेवायमन्यतमो बार्णार्डशमहोदयः। महात्मना किलानेन विरचितानि सुबहूनि नाटकानि यानि प्रतिदिनमेवाग्रहातिशयेन पठ्यन्ते परःकोटिभिः पुरुषैः। एतस्य च धर्मसमाजविषयकाण्यभिमतानि विलक्षणान्येव प्रचलितमतेभ्यः। वक्रोक्तिष्वस्य पाटवातिशयो न केवलं हर्षस्थानं विदुषां परं भीतिस्थानमपि। अस्मै यत् किमप्याख्यायतां वा विलिख्यतां वा तथा किल तीक्ष्णं परुषतमवचनगर्भमुत्तरमनेन प्रदीयते यथाख्यातुर्वा लेखितुर्वा मानसं खेदातिशयमनुविन्दति। केवलमेकदा लेडी राण्डल्फ् चार्चिलमहोदयया तीक्ष्णदंष्ट्राग्राण्येतस्य भग्नानि। कदाचित् कस्मिंश्चिदुत्सवसमाजे Lady Randolph Churchill महोदययोपनिमन्त्रितोऽयं तडिद्वार्तावहेन तस्यै विज्ञापितवान्—"मा तावत्। किं वा मयाऽपराद्धं येन मम सर्वजनविदितस्याभ्यासस्यैवं प्रातिकूल्यमाचर्यते" इति। तदुत्तरेण च चार्चिलमहोदययाऽपि वैद्युतिकवार्तावहेनोक्तम्—"सर्वथाऽविदिता एव मे भवतोऽभ्यासाः। आशास्यते च न खलु ते भवदाचरितानि इव कुत्सितानीति।" अयं किल निरामिषाशी निमन्त्रितश्चाऽऽमिषभोजने, अत एव समुद्दीपितामर्षेणैतेन तथोत्तरं प्रतिपन्नम्। परं महिलायाः सविधे यद्वक्तव्यं तत् सप्रश्रयमेव वक्तव्यम्, अनेन तु प्रत्युत्तरं ददता सर्वथैव लङ्घिता शिष्टजनमर्यादा। अत एव चार्चिलपत्न्या अपि दुर्विनयमेतस्याधिकृत्य सुनिपुणमुपालब्धम्।

प्रसङ्गतश्च चार्चिलमहोदयाया अपरमपि सरसं समीचीनं चोत्तरमत्रोपनिबध्यते। एकदा कस्मिंश्चिदुत्सवे सम्प्रवृत्तायां सन्ध्यां चार्चिलपत्न्याः समनन्तरसमुपविष्टेन केनचनाभिजातेन तस्याः कृपाकटाक्षपातार्थिना तदीयं सुकोमलकरपल्लवमेकं मनाक् स्पृष्ट्वा प्रशंसितुकामेनोच्चारितं कविवचनम्—पाणी इमौ साम्राज्यदण्डमपि परिचालयितुं प्राभविष्यताम् (Hands that

the rod of empire might have swayed). श्लोकशेष एव पाणिस्वामिन्याः सलज्जं प्रत्युत्तरमासीत्—अथवा नैपुण्यातिशयापादितप्राण-परिस्पन्दां विपञ्चीं ( धरमाणं मिथ्यावादिनं ) प्रहर्षभरपरवशां विदध्याताम् (or waked to ecstasy the living lyre). अत्रोच्चारणसाधर्म्याद् वीणावाचिना lyre शब्देन मिथ्याभाषणशीलवाचि liar शब्दस्य प्रतीति-रित्यलं प्रसक्तानुप्रसक्त्या ।

सोऽयं विश्वविश्रुतकीर्त्तिर्बार्णार्डशमहोदयो नातिचिरमुपागतो भारतवर्षम् । मुम्बापुर्य्युपकूले च समुद्रवक्षसि प्रासादायमाने कस्मिंश्चित् पोतविशेषे च सप्ताहमात्रमवस्थितः । तत्रैव च कस्यचिद् वृत्तपत्रसेवकस्य सविधे प्रोक्तम्—मम पिता तावदाहारादिविषये नितरामनवहित आसीत्, तेनाकाले एव तस्य स्वास्थ्यभङ्गः समजनि । ततः प्रभृति मया शरीररक्षार्थं सविशेषमेव प्रयत्यते । प्रतिदिनं महत्येव प्रत्यूषे परित्यज्यते शय्या, यथाकालं च परिमितमेव भुज्यते, मत्स्यमांसादीनि च विषवत् परित्यज्यन्ते । अन्तराऽन्तरा च पोतवक्षसि सप्ताहकालं यावत् सूर्यरश्मिषु स्नानं विधीयते । तेन च पश्चिमेऽपि वयसीदृशं मे शरीरसौष्ठवमिति ।

अनेन च महाभागेन कथमधिगम्येत महत्त्वमित्यधिकृत्याऽऽङ्ग्लभूमौ किमपि सरसरमणीयं भाषणं प्रदत्तम् । संख्यान्तरे तस्यानुवादः प्रकाशयिष्यते ।

---

## उत्तरचरितस्य प्रथमः श्लोकः

प्राथमिकस्यास्य श्लोकस्य पाठविषयेऽर्थविषये च बहुधा विप्रतिपद्यन्ते विपश्चितः। तत्र

'इदं गुरुभ्यः पूर्वेभ्यो नामोवाकं प्रशास्महे।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥'

इति विद्यासागरधृतः पाठः।

"पूर्वेभ्यो गुरुभ्य आदिगुरवे वाल्मीकये। गौरवाद्बहुत्वेन निर्देशः। लोकोत्तरस्य रामचरितस्य प्रथमोपनिबन्धनात् कविसम्प्रदायप्रवर्तनाच्च वाल्मीकेरादिगुरुत्वम्। नमोवाकं नमःशब्दोच्चारणपुरःसरम् आदिगुरुं वाल्मीकिं नमस्कृत्य इति यावत्। नमः नमःशब्दस्य वाक उच्चारणं यस्मिन् कर्मणि तद् यथा तथा। प्रशास्महे इति क्रियाया विशेषणमिदम्। वाक इति भावविहितघञ्प्रत्ययान्तस्य वचिधातोः प्रयोगः। पूर्वेभ्यो गुरुभ्यो वाल्मीकिवेदव्यासप्रभृतिभ्य इति बहुसम्मतं व्याख्यानम्। इदं प्रशास्महे आशंसामहे प्रार्थयामहे इति यावत्। इदं किमित्यपेक्षायामाह—अमृतां नित्याम्। मीमांसकनये शब्दस्य नित्यत्वाभ्युपगमान् तदधिष्ठातृदेवतायाः सरस्वत्या नित्यत्वमर्थादायाति। आत्मनो ब्रह्मणः कलाम् अंशं मूर्त्तिभेदमिति यावत्। वाचं देवतां वाग्देवीं विन्देम अनुग्रहीतृत्वेन लभेमहि। वाग्देवी प्रसन्ना भूत्वा मयि काव्यप्रणयनशक्तिं वितरत्वित्यर्थः। ब्रह्मणः शब्दमूर्त्तिधरत्वे विष्णुपुराणम्—

काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च।
शब्दमूर्त्तिधरस्यैतद्वपुर्विष्णोर्महात्मनः ॥ १।२२।८३।"

इति च तद्व्याख्यानम्।

यद्यपीश्वरचन्द्रविद्यासागरसन्दृष्टेषु चतुर्ष्वेव हस्तलिखितेषु पुस्तकेषु प्रायेणायमेव पाठ उपलभ्यते तथाऽपि प्राचीनालङ्कारनिबन्धेषु टीकान्तरेषु चान्यविध एव पाठः सन्दृश्यते। द्वितीयार्धं प्रायेण सर्वत्रैव "वन्देमहि च

तां वाणीममृतामात्मनः कलाम्" इति पठ्यते। परं तत्र चकारस्यावकरत्वं प्रयत्नसहस्रैरप्यन्यथयितुं न शक्यते। प्राथमिके च पद्ये वाक इत्यप्रसिद्ध-पदप्रयोगः, प्रशास्महे इति च्युतसंस्कृतिः, च इति निरर्थकनिपातसन्निवेशश्च न खलु कवेर्गौरवाय न वा श्रोतॄणां सौमनस्याय सम्पद्येरन्। किञ्च उपनिषदादिषु सर्वत्र वाक्शब्द एवाऽऽम्नातो न तु वाणीशब्दः। तेन

इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे।
वन्दामहे च तां वाचममृतामात्मनः कलाम्॥

इत्येव पाठः समीचीनतया प्रतिभाति। अत्र चकारस्य सार्थक्याय वन्देमहीत्यत्र वन्दामहे इति पाठोऽस्माभिः परिकल्पितः। अमात्यानुवर्त्तन-पुरःसरराजदर्शनन्यायेन गुरुवन्दनपूर्वकदेवतावन्दनविधिना वाचोऽपि पूर्वं प्राचेतसादिनमस्कार उपपद्यते। 'अमृतां कलाम्' इति पदद्वितीयं व्याख्यातं वाक्यपदीयटीकायाम् ( १।१४५ ) उद्धृतैः श्लोकैः—

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी॥
केवलं बुद्ध्युपादानक्रमरूपानुपातिनी।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्त्तते॥
अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तः सैषा वागनपायिनी॥
सैषा सकीर्यमाणाऽपि नित्यमागन्तुकैर्मलैः।
अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते॥
तस्यां दृष्टस्वरूपायामधिकारो निवर्त्तते।
पुरुषे षोडशकले तामाहुरमृतां कलाम्॥ इति।

शास्तेरुभयपदित्वस्य वेदेषु प्रसिद्धत्वात् शास्महे इतिपदस्य च श्रुति-वचनेषु बहुलमुपलम्भाद् वैदिकशिरोमणिना वश्यवाचा कविप्रवरेण प्रशास्महे इति प्रयुक्तम्। एतदनुरोधेन चार्वाचीनैर्वैयाकरणैः "आङः शासु इच्छायाम्" इत्यत्र आङः प्रायिकत्वमभ्युपगतम्। तथा च धातुवृत्तौ माधवः—"प्रायेणाय-

माङ्पूर्व इति नमोवाकं प्रशास्महे इति भवभूतिप्रयोगोपपत्तिरिति। श्रुतिपारदृश्वभिर्महाकविभिश्छान्दसान्यपि पदानि क्वचिद्भाषायां प्रयुज्यन्ते। यथा—त्रियम्बकं संयमिनं ददर्श, लावण्य उत्पाद्य इवास यत्नः इत्यादयः कालिदासप्रयोगाः। प्रायेण ह्यौद्धत्यपरिहाराय बहुवचनेनैवऽऽत्मानं निर्दिशन्ति ग्रन्थकृतः। नमोवाकमित्यत्रापि णमुलं केचिदिच्छन्ति। कृत्वं छान्दसमिति तेषामभिप्रायः। श्लोकोऽयं नमस्क्रियावत्या नान्द्या उदाहरणत्वेन रसार्णवसुधाकरे समुपन्यस्तः। तत्र च—'इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे। विन्देम देवतां वाचममृतामात्मनः कलाम्' इति पाठः।

---

# प्रतिवचनम्

स्मर्यत एव प्रायेण प्रियपाठकमहाभागैर्यत् पत्रिकाया व्यतीतायां संख्यायां पृच्छाद्वितयं प्रकाशितम्, तदानीं च स्थानाभावान्न पारितं स्वमतमस्माभिः प्रकटयितुमत एव सादरमाहूताः प्रियमहाभागाः प्रत्युत्तरदानाय। विषीदामस्तमां पुनर्निवेदयितुं यत् सत्स्वपि पाणिनितन्त्रपारावारपारीणेषु साहित्यार्णवकर्णधारेषु वाचकधुरन्धरेषु नैकेनापि प्रेषितं प्रत्युत्तरं प्रश्नद्वितयस्य। अत एव यथामत्यस्माभिः प्रयत्यते समाधानाय शङ्क्योः।

प्रथमतस्तावत् कुत्रपदस्य पाणिनीयत्वमपाणिनीयत्वं वा विचार्यते। तत्र प्राग्दिशो विभक्तिः [ पा० ५।३।१ ] इति सूत्रस्थत्यदादिविधयश्चेतिचतुर्थवार्त्तिकव्याख्यानावसरे भगवता भाष्यकृता कुत्रेत्युदाहरणरूपेणोपन्यस्तम्। सप्तम्यास्त्रल् [ पा० ५।३ । १० ] इति सूत्रभाष्येऽपि कस्मिन् कुत्र इत्युपलभ्यते। वैयाकरणेषु च भाष्यकारस्य प्रामाण्यं सर्वेषामेव सम्मतम्,

"यथोत्तरं मुनीनां प्रामाण्यम्।"

"यद्विस्मृतमदृष्टं वा सूत्रकारेण तत् स्फुटम् ।
वाक्यकारो ब्रवीत्येवं तेनादृष्टञ्च भाष्यकृत ॥"

इत्यादीनि वचनान्येवात्र साक्षिभूयमावहन्ति। अत एव नास्ति कुत्र-शब्दस्य पाणिनीयत्वे संशायलेशोऽपीति केचित् ।

परं सर्वमेतदापाततो रमणीयम्। यैर्हि कुत्रशब्दस्यापाणिनीयत्व-मुद्घोष्यते तैरपि भाषायामेवास्यापशब्दत्वमभिप्रेयते न तु च्छन्दसि। तत्र "वा ह च च्छन्दसि" [पा० ५।३।१३] इति सूत्रे "वा च" इति निपातद्वयो-पादानात् "विकल्पद्वयं पदत्रयम्" इति न्यायेन क कुत्र कुह इति पदत्रयस्य सर्वसम्मतत्वात्। अत एव कुत्रशब्दस्य भाषायां प्रयोगोऽपाणिनीय इत्येव प्रतिवादिन आशय इति निर्णीतम्। भाष्यवचनात्तु कुत्रशब्दस्य भाषागतत्वं निर्णेतुं न शक्यते भाष्येऽविशेषेणैव छान्दसपदानां भाषापदानां चोदाहरण-त्वेनोपन्यासात्। प्रागदिशो विभक्तिः [पा० ५।३।१] इति सूत्रस्यैव तृतीयवार्त्तिके इदमो विभक्तिस्वरश्चेत्यत्र स्वरार्थमेव इतः इह इति पदद्वयस्योपन्यासात्, स्वरस्य च प्राधान्येन छन्दोविषयकवात्। सप्तम्यास्त्रल् इत्यत्रापि यदुक्तं तत् पञ्चम्या-स्तसिल् [पा० ५।३।७] सप्तम्यास्त्रल् [पा० ५।३।१०] इति सूत्रद्वितयस्य भाष्यरूपेण। तत्र च—"इदं पुनर्विचार्यते इमे तसिलादयो विभक्त्यादेशा वा स्युः परे वेति" इत्युपक्रम्य प्रवर्त्तितो विचारः। तेन तत्रापि विचार-प्रसङ्गेनोदाहरणत्वेनोपनिबद्धस्य कुत्रशब्दस्य भाषाविषयत्वमवधारयितुं न शक्यते। अत एव भाष्यकारवचनमत्र कुत्रशब्दस्य भाषायां साधुत्वं प्रमापयितुं नालमिति सिद्धम्।

इदानीमाचार्यस्य सूत्राणि पर्यालोच्यन्ते। तत्र चाष्टाध्याय्याः पञ्च-माध्यायस्य तृतीये पादे चत्वारि सूत्राणि—

सप्तम्यास्त्रल् ॥ १० ॥
इदमो हः ॥ ११ ॥
किमोऽत् ॥ १२ ॥
वा ह च च्छन्दसि ॥ १३ ॥

अत्र "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति" इति न्यायेन "सप्तम्यास्त्रल्" इत्युत्सर्गः, "इदमो हः" "किमोऽत्" इति द्वौ चापवादौ। तेन यथा इदम्शब्दात् ह एव, न तु कथमपि त्रल्, तथैव किम्शब्दादपि अदेव, न पुनः कथमपि त्रल्। अत एव भाषायां किम्शब्दात् ह एव न तु त्रल् इति सूत्रकारस्वरस इति निर्विवादम्। कैश्चित् पुनर्दुराग्रहग्रहिलस्वान्तैः "प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित्" इत्यमरादिप्रामाणिकप्रयोगोपपत्तये कुशकाशावलम्बनन्यायेन "वा ह च च्छन्दसि" इत्युत्तरसूत्रात् पूर्वसूत्रे वाकारमनुकृष्य इदम्शब्दादपि विकल्पेन त्रल् विधीयते। तेषां मतस्यासमीचीनत्वं स्फुटमेव। न हि भाष्यकारवचनमन्तरेणास्माभिर्यथेच्छं योगविभागानुकर्षादिकं शक्यं विधातुम्। अत्र च नास्ति भाष्यकारवचनम्। यद्यपि 'स्वीयश्छागः शिरोभागेऽपि निकृत्येत जघनभागेऽपि निकृत्येत' इति वङ्गीयानामाभाणकस्तथाऽपि प्रयोजनविशेषमन्तरेण को वाऽनुन्मत्तो जघनभागे छागं निहन्याद्बल्यर्थम्। एवं को वा प्रेक्षावान् सूत्राणि विदधानः स्वायत्ते शब्दप्रयोगे केवलमाहोपुरुषिकामात्रदिदर्शयिषया पदानामयथाप्रयोगेण समुपजनयेद् व्यामोहं वाचकानाम्। कृताञ्जलिर्ह्याचार्यो दर्भपवित्रपाणिः शुचौ देशे प्राङ्मुख उपविश्य महता यत्नेन सूत्राण्यारचयति। अत एव मतमिदमेकीयमतत्वेनोल्लिखितं जयादित्येन। तथा च "किमोऽत्" इत्यत्र सूत्रे काशिका—"त्रलमपि केचिदिच्छन्ति। कुत्र। तत् कथम्? उत्तरसूत्राद्वावचनं पुरस्तादपकृष्यते।" अत्र केचिदित्यनेनास्वरसः सूचितः। अत्र हरदत्तः—"किमोऽद्वे"ति सूत्रं पठितव्यम्। "ह च च्छन्दसि" इत्यत्र चकारेण त्रत्तलोः समुच्चयादिष्टसिद्धिरिति तेषां भावः। भागवृत्तिकारस्तु भाषायामेतन्नेच्छति।" इति।

अयं भावः—पाणिनिप्रणीतानां सूत्राणां द्विविधः पाठ उपलभ्यते—दण्डपाठः खण्डपाठश्चेति। तत्र दण्डपाठे सूत्राणां प्रश्लिष्टपाठात् "इदमो हः किमोऽद्वा च च्छन्दसि" इत्येवं रीत्या पाठः। तस्य च द्वेधा विभागः सम्भवति। इदमो हः, किमोऽत्, वा ह चच्छन्दसि इत्येवंरूप एकः,

इदमो हः, किमोऽद्वा, ह च च्छन्दसि इत्येवंरूपो द्वितीयः। कुत्र-शब्दस्य भाषायां साधुत्वमिच्छद्भिर्द्वैतीयीक एव पाठः शरणीक्रियते। परन्तु प्रामाणिकस्य खण्डपाठस्य परित्यागे कारणविशेषासद्भावात् कालिदासादिमहाकविनिबन्धेषु च कुत्रशब्दस्यानुपलम्भात् प्रचलित एव पाठः स्वीकरणीयः। अत एव भागवृत्तिकृताऽन्वर्थनामधेयेन विमलमतिना भाषायां कुत्रशब्दो नेष्यते। तन्मते कुत्रादिशब्दाः कालदुष्टा एवापशब्दाः। भागवृत्तिकृतो जयादित्यादर्वाचीनत्वेऽपि तस्य सर्वथा भाष्यानुसारित्वं सुप्रथितमेव। प्रतिपादितं चैतत् प्रमाणोपन्यासपुरःसरम् Indian Historical Quarterly इत्यत्र विस्पष्टमेव।

यद्यपि कौमुद्यां दीक्षितचरणैः किमोऽत् इति सूत्रविवरणे उक्तम्—"वाग्रहणमपकृष्यते। सप्तम्यन्तात् किमोऽद्वा स्यात्। पक्षे त्रल्" तथाऽपि तट्टीकाकृद्भिः सर्वैरेवात्र प्रत्यवस्थितम्। तथा च लघुशब्देन्दुशेखरे नागेशः—वाग्रहणमिति। "साहचर्याच्च कुत्रचित्" [ अमर १।३ ] "नान्यत्र कुत्रापि च साभिलाषम्" [ नैषध ३।६७ ] इति बहुतरप्रयोगदर्शनादिदमुक्तम् भागवृत्तिकारादयस्तु किमो भाषायां त्रलं नेछन्ति। भाष्यस्वरसोऽप्येवम्" इति। बालमनोरमायां वासुदेवदीक्षितोऽपि—"केचित्तु किमोऽत् इत्यत्र उत्तरसूत्राद्वाग्रहणापकर्षे प्रमाणाभावात् त्रलं बाधित्वा नित्यमेवात्प्रत्ययः कुत्रेत्यपशब्द एवेत्याहुः" इति।

अत एव कातन्त्रकृता सर्ववर्मणा कुत्रशब्दस्य साधुत्वाय किमपि सूत्रं न प्राणायि। टीकाकृताऽपि "किमः" इतिसूत्रस्य टीकायामुक्तम्—अयमपि त्रापवादः। कुत्रेति कैश्चिदिष्यते, भाष्यकारस्य पुनरसाधुरेवेति। पञ्जी-कृताऽप्युक्तम्—कुत्रेति कैश्चिदिष्यते। तद् भाष्यकारस्याप्यसाध्विति।

एवञ्च कुत्रशब्दस्य व्याकरणान्तरेषु प्रयोगानुरोधात् साधुत्वे स्वीकृतेऽपि पाणिनिकात्यायनपतञ्जलिकाले भाषायां प्रयोगादर्शनात् पाणिनीयत्वं स्वीकर्तुं कथमपि न शक्यते इति विदुषां परामर्शः।

---

# समालोचनम्

**आभाणकमाला ।** श्रीमत्या उमादेव्या सङ्कलिता । श्यामवाजार-रथ्याया ६८ संख्यकभवनात् जे सी. चाट्टार्ज्जी एण्ड कों प्रकाशिता । मूल्यमाणकाष्टकमात्रम् । (Compiled by Srimati Uma Devi, B. A. Published by J. C. Chatterjee & Co., 68 Shambazar Street, Calcutta.)

अहो नु खलु कोऽप्ययं भागधेयोदयो गीर्वाणवाण्या यत् साम्प्रतं वङ्गीयविदुषीभिर्विशुद्धया संस्कृतभाषया प्रबन्धा विरच्यन्ते । सुष्ठु खलूक्तं राजशेखरेण—"पुरुषवद् योषितोऽपि कवीभवेयुः । संस्कारो ह्यात्मनि समवैति न स्त्रैणं पौरुषं वा विभागमपेक्षते ।" अत एव नैतदाश्चर्यं यत् समालोचनीयेऽस्मिन् पुस्तके शार्मण्यभाषागतानां प्रवादरत्नानां संस्कृत-भाषामया अनुवादा मनोहरतमया रीत्या समुपनिबद्धा ग्रन्थकर्त्र्या । अत्र न केवलं शार्मण्यभाषामयानामेवाभाणकानां सन्निवेशः, तत्सदृशा आङ्ल-वङ्गीयादिविविधभाषागता अप्याभाणका महता यत्नेन सम्पादिताः । अत्र च निदर्शनतया द्वित्राणि प्रवचनानि समुद्ध्रियन्ते—

Macht geht vor Recht.
Might is stronger than right.
"अति धर्माद् बलं मन्ये बलाद्धर्मः प्रवर्तते ।"
"धूमो वायोरिव वशे बलं धर्मोऽनुवर्त्तते ।
अनीश्वरो बले धर्मो द्रुमे वल्लीव संश्रिता ॥"
"बलवांश्च यथा धर्मं लोके पश्यति पूरुषः ।
स धर्मो धर्मवेलायां भवत्यभिहितः परः ॥"
"बलवन्तो ह्यनियमा नियमा दुर्बलीयसाम् ।'
"यस्यैव बलमोजश्च स धर्मस्य प्रभुर्नरः ।"

"वशे बलवतां धर्मः सुखं भोगवतामिव ।
नास्त्यसाध्यं बलवता सर्वं बलवतां शुचि ।।"

[ जोर यार मुल्लुक तार । व
शक्ते पुढे शहाणपण चालत नाहीं । म ]

182, Wie du mir, so ich dir.

Tit for tat. For the civil civility, for the saucy sauce.

"यस्मिन् यथा वर्त्तते यो मनुष्य-
स्तस्मिंस्तथा वर्त्तितव्यं स धर्मः ।
मायाचारो मायया वर्त्तितव्यः
साध्वाचारः साधुना प्रत्युपेयः ।।"

"सारल्यं सरले कुर्याच्छठे शाठ्यं समाचरेत् ।"

"पिशाचानां पिशाचभाषयैवोत्तरं देयम् ।"

[ अरे तर कारे अहो तर कायहो । म ]

एतद्दर्शनेनैव प्रतिपद्येरन् वाचकमहाभागा ग्रन्थस्यास्योपादेयत्वातिशयम् । न खलु पुस्तकस्यास्य पठनात् पूर्वं विज्ञातमस्माभिर्यत् Might goeth before right, tit for tat प्रभृतिपाश्चात्त्याभाणकानामनुरूपाण्येनावन्ति सुभाषितानि वर्तन्ते संस्कृतभाषायाम् इति । अन्ते च सन्निविष्टया शार्मण्यभाषोच्चारणप्रणाल्या परिवर्धित एव विशेषत उपयोगोऽस्य ग्रन्थस्य । न खल्वेतन्न विदितं वाचकमहाभागानां यद् विभक्त्यादीनां बाहुल्याच्छार्मण्यभाषाङ्गलादिभाषातो विषमतरा एव । तस्याश्चाध्ययनं प्रवचनादिद्वारेणैव सुकरम् । प्रवचनानि हि स्वल्पाक्षराणि निपुणतमया रीत्या संग्रथितानि अत एव गुडूचीलागं लगन्ति मानसे तेन विभक्त्यन्तानां शब्दानां स्मरणसौकर्यं भवति । अत एव यैः शार्मण्यभाषाऽल्पीयसा कालेनाधिगन्तुमिष्यते तेषामतीवोपयोगीदं पुस्तकम् । अवश्यं संग्राह्यतामयं ग्रन्थो वाचकमहाभागैरिति शिवम् ।

**काव्यालङ्कारसूत्रवृत्तिः।** श्रीवामनविरचिता। कामधेनुटिप्पणी-सहिता। श्रीमता नारायणजीनाथजीकुलकर्णिना सम्पादिता। पुण्यपत्तनतः ओरियेण्टाल् बुक् एजेन्सीसंस्थानः प्रकाशिता। मूल्यं सपाद रूप्यकम्। (Published from the Oriental Book Agency, Poona).

वामनाचार्यविरचिताऽलङ्कारसूत्रवृत्तिः प्राचीनालङ्कारनिबन्धेषु श्रेष्ठत्वमधिगच्छति इत्युक्तं स्वर्गतेन महेशचन्द्रन्यायरत्नमहोदयेन स्वसम्पादितस्य काव्यप्रकाशस्योपोद्घाते। अत एव बालानामुपकाराय कामधेनुटीकातः सारमुपादाय पादटीकारूपेण सन्निवेश्य सम्मुद्रितमिदं पुस्तकं कुलकर्णिमहाभागेन। अन्ते च पाठभेदा अपि प्रदर्शिताः। अन्तरान्तरा च श्लोकानामाकरस्थानान्यपि प्रदर्शितानि। तथाऽपि ग्रन्थोऽयं सुष्ठुतया सम्पादित इति वक्तुं न शक्यते, नापि छात्राणामुपयोगीति। निर्णयसागरे मुद्रितस्य पुस्तकस्य प्रमादपरम्पराऽत्रापि प्रायेण तदवस्थैवावस्थापिता। तथा हि निष्पन्द इति षत्वं चिन्त्यम् इत्यत्र निर्णयसागरपुस्तके मुद्राकरप्रमादाद्वा शोधकानवधानाद्वा निष्पन्द इत्येतस्य स्थाने निष्यन्द इति मुद्रितम्। अत्रापि निष्यन्द इत्येवोपलभ्यते। "अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु" [पा. ८।३।७२] इति सूत्रस्य जागरूकत्वेऽपि निष्यन्दशब्दस्य षत्वाभावकथनं संस्कर्तुरनाघ्रातव्याकरणगन्धत्वमेव संसूचयति। न जानीमः किमिति उपोद्घाते वामनस्य कालादिनिर्णये न प्रयतितं सम्पादकेन, न वा पाठगतानां प्रचलितानां प्रमादानां दूरीकरणे। आशास्यते केनचन परमार्थत एव साहित्यशास्त्रनिष्णातेन काव्यालङ्कारसूत्रवृत्तिः सुष्ठुतया परिशोध्य मुद्रापयिष्यते येनालङ्कारतत्त्वबुभुत्सूनां महानुपकारः स्यादिति शिवम्।

**A Brief History of Sanskrit Literature** by Kokileswar Sastri Vidyaratna, M. A. Published by U. N. Dhur & Co., 58, Wellington Street, Calcutta. Price Rupee one and annas eight only.

चिराय खलु व्यतीतः स कालो यदा प्राचीनकविकालादिनिर्णयप्रयासः काकदन्तगणनायासकल्पतया सुदूरमुदसार्यत विपश्चिद्भिः। साम्प्रतं हि पाश्चात्त्यैरिव प्राच्यैरपि विद्वद्भिः संस्कृतवाङ्मयेतिहासविरचने सर्वात्मना व्यापार्यत आत्मा, साभिनिवेशं चाधीयन्ते प्रबन्धा एवंविधा चुलुकीकृतशास्त्र-सागरैरपि मनीषिवर्यैः। संस्कृतसाहित्येतिहासविषयकाणां ग्रन्थानां पुनर्महार्घ-त्वाद् बहुभिरेव नैव प्रभूयते तेषामध्ययनेन समधिगन्तुं कवीनामाविर्भाव-कालादिकम्। अत एव यथा विनेवाऽऽयासं सर्व एव प्रभवेयुर्गीर्वाणवाणीविवरण-मधिगन्तुं तथा विरचितोऽयमितिहासः सर्वतन्त्रस्वतन्त्रधिषणेन श्रीमता कोकिलेश्वरशास्त्रिमहोदयेन। २०८पृष्ठात्मकेऽस्मिन् प्रबन्धे वैदिकस्य लौकिकस्य च साहित्यस्येतिवृत्तं समीचीनतमया प्रणाल्या समुपनिबद्धं शास्त्रिमहोदयेन। पाश्चात्त्यप्रत्नतत्त्वविशारदैर्म्यागडनेलकीथविण्टारनिट्सप्रभृतिभिर्यद् यदुक्तं तस्य सर्वस्य सारोऽत्र समाहृतः, ग्रन्थकृता च स्वप्रयत्नेन यद् यदधिगतं तत् सर्वमपि सन्निविष्टम्। अत्र वेदोपवेदरामायणमहाभारतपुराणतन्त्रषड्दर्शनादींश्चा-धिकृत्य विलसन्त्यतिमात्रं हृदयङ्गमानि प्रबन्धरत्नानि। Sanskrit Authors and their works ( संस्कृतग्रन्थकर्तारस्तेषां प्रबन्धाश्च ) इतिशीर्षके प्रबन्धे ख्रिस्तजन्मतः पूर्वं द्वितीयशतकादारभ्य ख्रिस्तीयाष्टादश-शतकं यावत् प्रादुर्भूतानां बुधवर्याणां नामानि तद्रचितग्रन्थानां च परिचय उपनिबद्धः। "प्राचीनभारतीयराजवंशानां संक्षिप्तम् इतिवृत्तम्" इतिशीर्षके प्रबन्धे ख्रिस्तजन्मतः प्राक् षष्ठशतके प्रादुर्भूतशिशुनागवंशमारभ्य सर्वेषामेव प्राचीनार्वाचीनप्रख्यातराजवंशानां विवरणं विलिखितम्। इत्थञ्च पुस्तकमिदं सर्वेषामेव संस्कृतसाहित्यप्रणयिनामतीवोपादेयं संवृत्तं विशेषतश्च छात्राणाम्। अस्य पत्राणि मुद्रणं बन्धनञ्चातीव हृदयहारीणि, मूल्यमप्यतिमात्रमल्पम्। यद्यप्यत्र वर्तन्त एव केचन मुद्रणप्रमादास्तथाऽपि ते विसृत्वरशिखासम्भार-भासुरस्य महामणेरिव कीटानुवेधादिदोषा नैवोपयान्ति दर्शनपथम्। अवश्यमेव संग्राह्यमिदं पुस्तकं गीर्वाणवाणीप्रणयिभिरिति शिवम्।

---

# ग्रन्थपरिचयः

**The Calcutta Oriental Journal**, vol. I. no. 1. October 1933. Edited by Kshitish Chandra Chatterjee, M. A. Published from 61A, Ramkanto Bose Street, Baghbazar, Calcutta. Annual subscription Rupees Six only inclusive of postage.

विदितमस्तु वाचकमहोदयानां यदक्टोबरमासादारभ्य प्रकाश्यतेऽस्माभिः Calcutta Oriental Journal समाख्यमाङ्लभाषामयं प्रत्नतत्त्वविषयकं मासिकं पत्रम्। तच्चास्मदीयमिति कृत्वा नेह तस्य गुणागुणौ विचार्येते, केवलं वाचकमहाभागानामवबोधाय लेशतोऽस्य परिचयः समुपनिबध्यते। अत्र प्रथममेव Pāṇini as a poet इति प्रबन्धे पत्रिकासम्पादकेन पाणिनीयत्वेन प्रख्याताः श्लोकाः परमार्थत एव पाणिनिप्रणीता वा न वा इति विचारितम्। केषाञ्चिच्च श्लोकानां सुभाषितादिग्रन्थेषु समुपलभ्यमानाः पाठा न सम्यग् लगन्तीति पाठान्तराण्यपि प्रदर्शितानि। सुदीर्घचतुर्विंशतिपृष्ठात्मकेऽस्मिन् प्रबन्धे विविधविषयविचारपूर्वकं श्लोकानामेषां

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः।

नमश्चाज्ञानजं भिन्नं

तेन पाणिनिना प्रणीतत्वं कथमपि न सम्भवतीति प्रतिपादितम्। जाम्बवतीविजयकाव्यं पातालविजयकाव्यञ्च परमार्थतोऽभिन्ने इत्यपि प्रदर्शितम्। ततश्च कलिकाताविश्वविद्यालयाध्यापकेन कोकिलेश्वरशास्त्रिमहाभागेन शिवावतारशङ्कराचार्यस्य मतेन प्रपञ्चस्य सत्ता पारमार्थिकी वा प्रातिभासिकी वेति प्रमाणोपन्यासपुरःसरं विचारितम्। ततश्च एम् एबिरुदविभूषितया श्रीमत्या मालतीदेव्या मध्यमव्यायोगस्य पाठादिकमधिकृत्य

स्वमभिमतं विवृतम्। "भोःशब्दोच्चारणादस्य ब्राह्मणोऽयं न संशयः" इत्यत्र शास्त्रीयं प्रमाणमुपनिबद्धम्। मध्यमव्यायोगस्य रामायणमहाभारत-मूलकत्वमपि प्रमाणान्युदाहृत्य विस्पष्टीकृतम्। ततश्च कलिकाताविश्व-विद्यालयाध्यापकेन D-es-lettres इति दुर्लभतमोपनामालङ्कृतेन श्रीमता प्रबोधचन्द्रवाग्चीमहोदयेनासङ्गविरचितसूत्रालङ्कारग्रन्थे समुपलभ्यमानस्य परावृत्तिशब्दस्यार्थविषये निराकृत्य विण्टार्निट्स्मतं स्वमतमेव संस्थापितम्। ततश्च सम्पादकेन कृतं ग्रन्थसमालोचनम्। नवेम्बरसंख्यायां सम्पादक-विरचिते मुग्धबोधव्याकरणस्य वैशिष्ट्यम् इति प्रबन्धे विविधव्याकरणगतानां प्रत्याहाराणां समावेशो वर्तिष्यते। प्रबोधचन्द्रवाग्चीमहोदयेन च तन्त्रशास्त्र-गतानां पारिभाषिकशब्दानां वेदादिविविधशास्त्रीयप्रमाणोपन्यासपुरःसरं विस्तृतं व्याख्यानं प्रकाशयिष्यते। न चिराच्च वामनीयकाव्यालङ्कार-सूत्रवृत्तीनामभिनवा व्याख्या सम्मुद्रयिष्यते, पत्रिकासम्पादकेन च संस्कृत्य वोपदेवविरचिता काव्यकामधेनुमुद्रणपथमवतारयिष्यते इति शिवम्।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत्-प्रतिभा रविः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| | | |
|---|---|---|
| October, 1933 | १८५५ शकीये आश्विने १६श-वर्षस्य ४र्थ-संख्या | Vol. XVI, No. 6. |


## पूजासारः

[ निबन्धकः कालीघट्टवास्तव्यः श्रीगुरुपदशर्मा हालदारः ]

सर्वतो विद्यमानस्य कथमावाहनं मतम्।
स्वागतं वा कथं तस्य सर्वाधारस्य चाऽऽसनम्॥
अपादस्य कथं पाद्यमर्घ्यं प्रेममयस्य च।
अमुखस्य कथं कल्प्यं विहिताचमनीयकम्॥
मधुपर्कः कथं वाऽपि नित्यमेकरसस्य च।
निर्मलस्य कथं स्नानमङ्गोपाङ्गसमन्वितम्॥
मायाचित्रपटाच्छन्ने वाससोर्योग्यता कुतः।
यज्ञसूत्रं निरालम्बे रम्ये चाऽऽभरणं तथा॥
अमूर्त्तस्य विलेपार्थं गन्धादेः कल्पना न हि।
कथं तृप्यति पुष्पाणां नित्यतृप्तिमयो विभुः॥
अगन्धस्यैव धूपेन कथमुद्वासनं मतम्।
सर्वावभासको देवो दीपेन भास्यते कथम्॥

वच्छिन्नप्रकारकप्रमात्मकनिश्चयत्वव्यापिका या परस्परोपश्लेषावगाहित्वावच्छिन्ना श्रमादिधर्म्मिकताहशानुपूर्व्वीयवच्छिन्नकोटिकसंशयप्रतिबन्धकता तद्दत्त्वस्य घत्वादिना वर्णान्तरावगाहिघटमित्याकारकनिश्चयसाधरणस्य व्याप्यत्वं कर्म्मताधर्म्मिकघटाद्यन्वयबोधहेतुतायाम् अक्षतमेवेति एतादृशनिवेशसूचनायैव निश्चयत्वनिवेशः।

न च तथाऽपि यादृशशब्दप्रकारकत्वावच्छिन्नप्रतिबन्धकताव्याप्यत्व निवेशेनैवोपपत्तौ तादृशनिश्चयत्वव्यापकप्रतिबन्धकतापर्य्यन्तनिवेशो व्यर्थ इति वाच्यम्; यत्र स्थलविशेषे यादृशानुपूर्व्वीयवच्छिन्नोत्तरसुबादिनिश्चयः प्रमात्मक एव भवति, तत्र सुबादिधर्म्मिकतादृशानुपूर्व्वीयवच्छिन्नप्रकारकनिश्चयत्वेन न संशयप्रतिबन्धकता, किन्तु विषयितासम्बन्धेन तादृशानुपूर्व्वीयवच्छिन्नोत्तरसुबादिविशिष्टनिश्चयत्वेनैव लाघवात् स्वीकार्य्यम्, तथा च तत्र तादृशानुपूर्व्वीयवच्छिन्नप्रकारकत्वावच्छिन्नप्रतिबन्धकत्वाप्रसिद्धया अव्याप्तिः स्यात्।

न चैतल्लक्षणं घटमित्यादिवाक्येऽतिव्याप्तमिति वाच्यम्, एतल्लक्षणे सार्थकत्वे सतीत्यस्य विशेषणीयत्वात् वाक्यस्य च "शब्दान्तरमपेक्ष्यैव सार्थकः स्वार्थबोधकृत्" [ शब्दशक्तिप्रकाशिका १।६] इत्युक्तसार्थकत्वलक्षणानाक्रान्तत्वादिति कृतं पल्लवितेन।

अथ लाघवमनुसरता ग्रन्थकृता द्वितीयं लक्षणमुपन्यासि—

स्वोपस्थाप्ययदर्थस्य बोधने यस्य निश्चयः।
तत्त्वेन हेतुरथवा प्रकृतिः सा तदर्थिका॥ [१।८]

अस्यायमर्थः—

स्वोपस्थाप्ययादृशार्थप्रकारककिञ्चिद्धर्म्मिकशाब्दबुद्धिजनकत्वं स्वाव्यवहितोत्तरत्वसम्बन्धेन यादृशानुपूर्व्वीयवच्छिन्नं तादृशानुपूर्व्वीयवच्छिन्न एव तथाविधार्थं प्रकृतिः। कर्म्मताधर्म्मिकघटाद्यन्वयबोधहेतुत्वस्य श्रमादिधर्म्मिकघटगतानुपूर्व्वीयवच्छिन्नप्रकारकनिश्चयत्वावच्छिन्नत्वात् घटादिप्रकृतिषु लक्षणसमन्वयः।

न च कर्म्मताधर्म्मिकपचनरूपप्रकृत्यर्थविशेषितकर्त्रादिरूप-णकप्रत्ययार्थप्रकारकशब्दबुद्धिजनकत्वस्य भ्रमादिधर्म्मिकपाचक--शब्दवत्तानिश्चयत्वावच्छिन्नस्य भ्रमादिधर्म्मिकाकशब्दवत्तानिश्चयत्वे-नाप्यवच्छिन्नत्वात् णकादिप्रत्ययेष्वतिव्याप्तिरिति वाच्यम्, किञ्चिद्ध-र्म्मिकयादृशानुपूर्व्व्यवच्छिन्नप्रकारकनिश्चयत्वपर्य्याप्तावच्छेदकताकत्वस्य तादृशान्वयबुद्धिजनकतायां विवक्षणीयतया कर्म्मताधर्म्मिक-पाककर्त्राद्यर्थप्रकारकशाब्दबुद्धिजनकत्वस्य भ्रमधर्म्मिकाकशब्दवत्ता-निश्चयत्वपर्य्याप्तावच्छेदकताकत्वविरहादतिव्याप्त्यनवकाशात्।

अथ घटमित्यादिनिश्चयस्य बलादिना वर्णान्तरावगाहि-भ्रमसाधारण्यानुरोधेन परस्परोपश्लेषावगाहित्वेनैव कर्म्मताधर्म्मिक-घटान्वयबुद्धिजनकत्वम्, न तु अखण्डघटगतानुपूर्व्व्यवच्छिन्न-प्रकारकामादिधर्म्मिकनिश्चयत्वेन, तर्हि कथं कर्म्मताधर्म्मिक-घटान्वयबुद्धिजनकत्वस्य भ्रमादिधर्म्मिकघटगताखण्डानु-पूर्व्व्यवच्छिन्न-प्रकारकनिश्चयत्वपर्य्याप्तावच्छेदकताकत्वमिति चेत्—स्वाव्यवहितो-त्तरत्वसम्बन्धेन यादृशानुपूर्व्व्यवच्छिन्नप्रकारककिञ्चिद्धर्म्मिकनिश्चयत्व-व्यापकत्वं तादृशान्वयबुद्धिजनकत्वे विवक्षणीयम्, न तु स्वरूप-सम्बन्धरूपावच्छेदकत्वम्; तथा च कर्म्मताधर्म्मिकघटाद्यन्वय-बुद्धिजनकत्वस्य भ्रमादिधर्म्मिकघटगतानुपूर्व्व्यवच्छिन्नप्रकारकप्रमा-त्मकनिश्चयत्वव्यापकत्वान्नासम्भवः। पचनादिरूपप्रकृत्यर्थविशेषित-कर्त्रादिरूप-णकप्रत्ययार्थप्रकारककर्म्मताधर्म्मिकान्वयबुद्धिजनकत्वस्य पाचकमित्याकारकाकशब्दवत्तानिश्चयाद्यवृत्तित्वेऽपि अकमित्या-कारकामादिधर्म्मिकाकशब्दवत्तानिश्चयसाधारणतादृशनिश्चयत्वव्यापकत्वं-नास्तीति णकादिप्रत्ययेषु अतिव्याप्तिशङ्काव्युदासः। आनुपूर्व्वी-संशयेऽन्वयबुद्धिजनकतावैधुर्य्यादेतत्कल्पे निश्चयपदव्यावृत्तिः सुतरा-मेवावगम्यत इति शम्।

---

श्रीश्रीभगवते रामचन्द्राय नमः ।

# मेघनादवधम्

[ अनुवादकः—श्रीनित्यगोपालविद्याविनोदशर्म्मा ]

## प्रथमः सर्गः

( १ )

श्रियं प्रणम्यातिनतेन भक्तितो
वचोऽधिदेवीं करुणामयीं मया ।
समीच्य काव्यं मधुसूदनोदितं
प्रयत्यते काव्यकृते यथाबलम् ॥

( २ )

निपीय काव्यस्य मधोर्मनोज्ञामधु
लिखामि काव्यं मधु-देवभाषया ।
मधु प्रकामं सरघामुखच्युतं
न पीयते कैः रसिकैर्भुवस्तले ॥

( ३ )

फलेन्मनाङ् मे यतनं कृती कवे-
र्यतेऽहमाशापरिमुग्धमानसः ।
सरित्समुद्रेषु नदेषु सत्स्वपि
नृणां हि कूपस्य कृतिर्न निष्फला ॥

---

(१) श्रियं सरस्वतीम् । तथा च व्याडिः—
'लक्ष्मी-सरस्वती-धी-त्रिवर्गसम्पद्द विभूति-शोभासु ।
उपकरणवेशरचनाविधासु च श्रीरिति प्रथिता ॥

(२) सरघाया मधुमक्षिकाया मुखात् च्युतः च्युत गलितम् ।

( ४ )

बभूव लङ्केति हिरण्मयी पुरी
तटे समुद्रस्य पुरीशिरोमणिः ।
सुरम्यहर्म्यावलिरत्नरश्मिभि-
र्जहास येन्द्रस्य पुरं समृद्धिभिः ॥

( ५ )

वनैः सुरम्यैः परितः सुशोभिता
समुच्चसालोदकगर्त्ततोरणैः ।
प्रतोलिसङ्कीर्णगृहामरालयै-
स्तथास्त्र-यन्त्रायुध-वेश्मभिर्युता ॥

( ६ )

विमानरूढा मणिरत्नभूषणा
भ्रमन्ति नार्यो रजनीचरप्रियाः ।
सुमेरु-शृङ्गाश्रित-देव-योषितां
भ्रमं दधत्यो मनुजन्मचेतसि ॥

( ७ )

नदन्ति सायं पटहा यदा यदा
सुरालये साम्ध्यवलेरनेहसि ।
नटन्ति हर्षाच्छिखिनस्तदा तदा
अकालमेघस्तनितातिशङ्किताः ॥

---

(५) (क) सालः प्राकारः। (ख) उदकगर्त्तः परिखा। (ग) प्रतोली रथ्या। (घ) वेश्मभिः गृहैः।

(६) मनुजन्मनां मानवानां चेतसि मनसि। (७) अनेहसि समये। नटन्ति नृत्यन्ति।

( ८ )

प्रवीरयोधाः शतशः सहस्रशो
धृतास्त्रशस्त्राः कवचैः सुसंवृताः ।
द्रवन्ति धावन्ति हसन्ति सर्व्वतः
पुरीं कृतान्तस्य भटा यथाऽभियः ॥

( ९ )

सभा तदीया मणिरत्ननिर्म्मिता
सितासितालोहितपीतरक्तक-
विचित्रसुस्तम्भवरोपरि स्थिता
छदिर्यदीया च भृशं विराजते ॥

( १० )

सभा धरायां तुलनाविवर्ज्जिता
चकास्ति यस्यां कृतिशिल्पशीलिता ।
विकासमाप्तैः कमलैर्यथा सरो
मनोरमं मानससंज्ञमद्भुतम् ॥

( ११ )

वितानशीर्षग्रथिताच्छमौक्तिकं
सवर्णरत्नान्तरलब्धविभ्रमम् ।
चलच्छ्रियं प्राप मनोहरस्रजो
विचित्रपुष्पस्य दिने व्रतोत्सवे ॥

---

(९) मणिरत्नैः मणिश्रेष्ठैः निर्म्मिता ।—"जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्ष्यते ।"

(१०) शीलिता घटिता ।

( १२ )

क्वचिद् विभा रत्नसहस्रसम्भवा
स्फुरत्प्रभा नृत्यति चारु सर्व्वतः ।
घनान्तराजच्चपला यथाऽस्थिरा
विदग्धदृष्टिः खरतापवर्षणैः ॥

( १३ )

सुवर्णपीठाऽऽसितरावणो बली
महाप्रतापो द्युतिदीपितालयः ।
सुवर्णकूटाख्यगिरेः परां रुचिं
जिगाय शृङ्गस्य मरीचि-मालिनः ।

( १४ )

अमात्यमित्रैः शतशो नताननैः
सभासदां मुख्यतमैश्च ^ंहितः
रराज दैत्यैर्विजितैः सुपर्व्वभिः
समं सुधर्म्माश्रित-वासवोपमः ॥

( १५ )

विषादगाढान्धतमिस्रसंवृता-
ननश्रियः सभ्यगणाः शुगाहताः ।
तुषार-सञ्छन्न-सहस्रपत्रका
ह्रदा इवातीव हृश्यामशोभनाः ॥

---

(१३) रुचिं शोभाम् ।

(१४) (क) सुपर्व्वभिः देवैः । (ख) सुधर्म्मा देवसभा ।

( १६ )

सितात-पत्रैर्व्यजनैश्च सुन्दरै-
र्निषेवितो राक्षसराजपुङ्गवः ।
पुनः पुनः किङ्करसेवकैरपि
ववर्ष बाष्पं नभसो घनोपमः ॥

( १७ )

स भग्नदूतो मकराक्षनामको
रजोभिराच्छन्नसमग्रविग्रहः ।
असृग्विलिप्तो नयनाम्बुविप्लुतो
व्यतिष्ठताग्रे यतवाक् कृताञ्जलिः ॥

( १८ )

उवाच शोकातिशयातिगद्गदं
वधं सदुःखं युधि वैरवाहवम् ।
नतानमं नाशितसैन्यसम्पदि
स्वमात्मशेषं हतभाग्यदोषतः ॥

( १९ )

निशम्य सन्देशहरस्य तद् वचः
स वज्रपाताहतमूढचेतनः ।
क्षणं धरण्यां विलुलोठ निर्भरं
ततः श्वसन् दीर्घतरं वचोऽग्रहीत् ॥

---

(१६) नभसः श्रावणस्य । (१७) भग्नः पराजितो दूतः ।
(१८) वीरवाहोरिमम् इति वैरवाहवम् । (१९) निर्भरं सातिशयम् ।

( २० )

प्रवृत्तिरेषा स्वपनोपमा निशः
प्रवृत्तिवाहामरमानसं सदा।
भयाकुलं यद्भुजवीर्य्यचिन्तनात्
कथं स रामेण निपातितो भवेत्॥

( २१ )

न यामि विश्वासमहं त्वदुक्तिषु
श्रुतासु साक्षादपि धीरमानसः।
प्रसून-धारा-दलितः शमीतरुः
कदाऽपि धाता भविता महीतले॥

( २२ )

क्व वीरबाहो मम पुत्रशेखर
प्रवीरमुख्य क्व नु वीर्य्य-सागर।
प्रदाय पुत्रं गुणसिन्धुमीदृशं
विधे हृतोऽसौ मम केन पाप्मना॥

( २३ )

न तात सुप्तावपि निन्दितः क्वचित्
ममासुतस्त्वं परमप्रियोऽभवः।
अकालकालातिथिभावमीयिवान्
निपात्य मां शोकगभीरसागरे॥

---

(२०) प्रवृत्तिः वार्त्ता। (२१) प्रसूनस्य पुष्पस्य धारया दलितः।
(२२) शेखरः चूड़ामणिः। (२३) असुतः प्राणेभ्यः।

( २४ )

व्यथामिमां दुःसहयन्त्रणां कथं
सहिष्य एवं समराद् दुरायतेः।
क उद्धरेन्मां त्वदृते हतौजसं
भवन्ति दैवोपहता जना मृताः॥

( २५ )

रिपुर्बलिष्ठः क्रमशोऽवलानह्हो
करोति नो नाशितपुत्रबान्धवान्।
यथा वने भग्नसमस्तपल्लवान्
द्रुमान् करी स्वैरगतिर्मदोत्कटः॥

( २६ )

अतो मम प्राणसमः सहोदरः
स कुम्भकर्णः सहसा महेश्वरः।
निशाचरत्राणविधौ विचक्षणो
ममार मेऽनार्य्यहृदः प्रमादतः॥

( २७ )

निरीक्षिता सा समयेऽशुभे वने
विदेहराजस्य सुता कनिष्ठया।
मयैव नीता च पुरीं हिरण्मयीं
स्फुलिङ्गिनी वह्निशिखेव भीषणा॥

---

(२४) दुरायतेः दुरन्तात्। दैवविडम्बिता जना मृताः शान्तिं लभन्ते, यद्वा जीवन्मृता भवन्ति।

(२६) सहसा शक्त्या।

(२७) (क) वने पञ्चवट्याम्। (ख) कनिष्ठया शूर्पणखया।

( २८ )

सुवर्णदीपोज्ज्वलिता ममैषका
पुरी प्रसूनस्रगतीवसज्जिता ।
सुनाट्यशालेव बभूव या पुरा
साऽपुष्पवद् व्योम यथाऽद्य दृश्यते ॥

( २९ )

मृदङ्गवीणामुरलीमुखं सुखं
स्वतूर्य्यवृन्दं ध्वनिहीनमस्वरम् ।
शुगर्त्तिमूकं सकलं यदा मम
प्रयाणमेवेत उदीर्णमङ्गलम् ॥

( ३० )

स नैकषेयो विललाप दुःखितः
पुराऽन्धराजः शत-पुत्रविच्युतः
यथा कुरुक्षेत्रभवस्य सञ्जयान्-
मृधस्य वार्त्तामवगत्य दारुणाम् ॥

( ३१ )

तथा भृशार्त्तं विलपन्तमाकुलं
निरीक्ष्य राजानममित्रशातनम् ।
सभासदः कर्वुरवृन्दनायकाः
स्थिताः स्म मूका द्विजवद् दिनात्यये ॥

---

(२८) एषका एषा, "अव्ययसर्वनाम्नामकच् प्राक् टेः" इत्यकच् ।। न विद्येते पुष्पवन्तौ सूर्य्याचन्द्रमसौ यत्र तत्, अपुष्पवत् । तथा चामरः—"एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इति ।

(२९) (क) तूर्य्यं वाद्यभाण्डम् । (ख) उदीर्णं प्रभूतम् ।

(३०) (क) अन्धराजः धृतराष्ट्रः । (ख) मृधस्य युद्धस्य ।

(३१) (क) कर्व्वुरवृन्दं राक्षसगणः । (ख) द्विजवत् पक्षिण इव । "दन्तविप्राण्डजा द्विजाः ।

( ३२ )

अगणितधनिलोकैः सेविता राजसंसद्
विविधमणिजदीपैः पुष्पमाल्यैश्च जुष्टा ।
हृतसुतशुगपारध्वान्तलिप्तेन राज्ञा
घनकवलितचन्द्रा दृश्यते स्म क्षपेव ॥

इति मेघनादवधे महाकाव्ये रावणविलापो
नाम प्रथमः सर्गः ।

---

## सुभाषितानि

१ । पिता नाम खलु सयौवनस्य पुरुषस्य मूर्त्तिमाञ्छिरोरोगः ।

२ । दानं नाम सर्वसामान्यं वशीकरणं लोकस्य ।

३ । प्रणयिनीनां हि कोपो विषमज्वर इव दुश्चिकित्स्यः ।

४ । कुलवध्वोऽपि तावत् कामुकानां शपथं न श्रद्दधति, किं पुनर्वेश्याः ।

५ । वामशीला हि नार्यः ।

६ । चक्षुषि हि सर्वे भावा नियताः ।

७ । यत्तावद्विरूपायां दाक्षिण्यं तदन्धकारनृत्यमिव व्यर्थं भवति । रूपमपि दाक्षिण्यहीनमटवीचन्द्रोदय इव कां प्रीतिं करिष्यति ।

८ । न हि रथमतीत्य कश्चिद् गोयानेन व्रजेत् पुरुषः ।

९ । न खलु चन्द्रादन्धकारो निष्पतति ।

१० । गणिकामातरो नाम कामुकजनस्य निष्प्रतीकारा ईतयः ।

११ । सकलशशाङ्कविमलायां रजन्यां नास्ति दीपप्रयोजनम् ।

---

(३२) (क) जुष्टा सेविता । (ख) क्षपा रात्रिः ।

# प्रतिज्ञापूरणम्

कामं भवतोषो महापाठशालायामाङ्गलभाषामधीते, तथाऽपि तत्र तस्य मनो न लगति, बलवत्याऽनिच्छया तेन तद्विधीयते। आङ्गलविद्यायां तस्य लेशतोऽपि श्रद्धा नास्ति, आङ्गलभाषाया एव निरन्तरानुशीलनेन विनष्टप्रायोऽस्माकं देश इत्येव तस्याभिमतम्। अनुदिनमेव ह्रासमुपेत्यस्मद्देशे आर्यभावः, न खलु पुनरपि तेषां प्राचीनानां शुभदिनानां प्रत्यावर्त्तनोपायोऽवशिष्यते इति प्रायेण परिदेवयते भवतोषः। स्वजनबान्धवानां प्ररोचनयाऽनिच्छताऽपि तेनाऽऽङ्गलभाषा पठ्यते, अन्यथा नवद्वीपं भट्टपल्लीं वा गत्वा कस्याञ्चिच्चतुष्पाठ्यामेव प्रवेशनीयमित्येव तस्य मनोरथः। यथा तथा वा भवतु आङ्गलभाषामधीयानेनापि भवतोषेण यथा प्राचीनसमाचाराः संरक्षिताः प्राचीना च चिन्ताप्रणाली समनुसृता तथाऽन्यत्र नैव दृष्टिपथमुपयाति।

भवतोषस्तावत् कलिकातायामहट्टशूले समवस्थाय पाठानधीते स्म। सपदि च पूजावकाशः समागतः। भवतोषो गेहार्थमभिनववस्त्रादिकं क्रीत्वा मञ्जूषापेटकादीनि संबध्य गृहाय प्रस्थितः। तेषां ग्रामः कलिकाताती नातिदूरेऽवस्थितः।

विनिर्वृत्तं पूजानुष्ठानम्। समागता पौर्णमासी, तस्यां च तिथौ महत्येव प्रत्यूषे भवतोषस्य जननी गङ्गास्नानाय गतवती। गङ्गातीर्थं च ग्रामात् किञ्चिद्दूरे आसीत्। तत्र च बह्वीनां पुरस्त्रीणां समागमः समजनि। यावन्निर्वर्त्य स्नानविधिर्भवतोषजननी तीर्थमारोहति तावत् तस्या एव बाल्यसखी उपेन्द्रनाथवन्द्योपाध्यायस्य पत्नी तयाऽवलोकिता।

"अपि कुशलं तेऽन्तिके" इति सम्भाष्योपेन्द्रमहोदयस्य सहधर्मिणी

भवतोषस्य मातुः समीपमागच्छत्। सख्योः कुशलानुयोगानन्तरमुपेन्द्रमहोदयस्य पत्नयोक्तम्—अपि गृहमागतो भवतोषः ?

आगतः। तस्यावकाशोऽप्यवसितप्रायः। पुनरपि कलिकातां गमिष्यति।

उपेन्द्रमहोदयस्य तावत् काचन रूपवती त्रयोदशवर्षीया दुहिता वर्त्तते पुलिना नाम। अद्यापि तस्या विवाहो न संवृत्तः। उपेन्द्रमहोदयस्य पत्नयोक्तम्, पुलिनया साकं तव भवतोषस्य विवाहश्चेच्छोभनं स्यात्।

भवतोषस्य जनन्यवदत्, ममापि स एव चिरान्मनोरथः। परं पुत्रो मे नेच्छति परिणेतुम्। किं वा मया क्रियताम्, कति वा सम्बन्धा न प्रत्याख्याताः।

भवतु, पुनरप्युक्त्वा दृश्यतां तेन किं प्रतिपद्येत। स एव ते ज्येष्ठः पुत्रः। वधूर्गृहे समागमिष्यति। कियती वा ते प्रीतिर्न स्यात्। कथं वा नोद्वहति।

भवतोषस्य माताऽवदत्, भवतु वक्ष्यामि। पुत्रस्य सम्मतिश्चेद् वर्त्तमानेऽग्रहायणमासेऽपि विवाहः सम्भवति।

यदा माता गृहं प्रत्यायाता तदा भवतोषो बहिःप्रकोष्ठे समुपविश्य वङ्गवासिपत्रस्योपहाररूपेणाधिगतं पराशरसंहिताया वङ्गभाषामयमनुवादमेकाग्रेण मनसाऽधीयन्नासीत्। सविधमुपसृत्य मात्रोक्तम्, वत्स, प्रविशाभ्यन्तरम्। अस्ति कश्चिद्वाग्विशेष इति।

पुस्तकं परित्यज्य भवतोषः शनैः शनैर्मातरमन्वसरत्।

स्वकक्षमुपनीय माता पुत्रमवदत्, वत्स, इदानीमनुष्ठीयतां विवाहः। त्वमेव मे ज्येष्ठः पुत्रः। चिरादेव वधूमुखसन्दर्शनवाञ्छया कृतं मे हृदि पदम्। त्वं तावत् पूरय मे तदीप्सितम्।

इतः पूर्वं भवतोषस्य विद्वेष एवाऽऽसीद्विवाहे इत्युक्तमेव। पाठमपरिसमाप्य न परिणेयम्, यावद्वित्तोपार्जनक्षमता नाऽऽसाद्यते तावन्न

समुपविश्य वङ्गवासिपत्रस्योपहाररूपेणाधिगतं पराशरसंहिताया वङ्गभाषामयमनुवादमेकाग्रेण मनसाऽधीयन्नासीत्। सविधमुपसृत्य मात्रोक्तम्, वत्स, प्रविशाभ्यन्तरम्। किञ्चिद् वक्तव्यं वर्त्तत इति।

पुस्तकं परित्यज्य भवतोषः शनैः शनैर्मातरमन्वसरत्।

स्वकक्षमुपनीय माता पुत्रमवदत्, वत्स, इदानीमनुष्ठीयतां विवाहः। त्वमेव मे ज्येष्ठः पुत्रः। चिरादेव वधूमुखसन्दर्शनवाञ्छया कृतं मे हृदि पदम्। त्वं तावत् पूरय मे तदीप्सितम्।

इतः पूर्वं भवतोषस्य विद्वेष एवाऽऽसीद्विवाहे इत्युक्तमेव। पाठमपरिसमाप्य न परिणेयम् यावद्वित्तोपार्जनक्षमता नाऽऽसाद्यते तावन्न परिणेयम् एवंविधा वैदेशिक्यो विप्रत्तिपत्तयः कदाऽपि नाविन्दन्तोदयं भवतोषस्य मानसे, श्रुतं खलु तेन ( वाचितञ्च वृत्तान्तपत्रिकासु ) अद्यत्वे किल नव्यस्त्रियः परमार्थतो गृहलक्ष्मीरूपेण नैव प्रादुर्भवन्तीति। ताः खल्वतिमात्रं सुखपरायणा विलासिन्यश्च सञ्जाताः। न खलु ताः शास्त्रविधिना पत्यौ भक्तिश्रद्धादिकं प्रदर्शयन्ति, प्रत्युत पतिं सखीयितुमेवेहन्ते। इतरेऽप्युच्चावचाः स्त्रीदोषास्तेन समाकर्णिताः।

तथाऽपि विधवाया मातुर्निर्बन्धः—किं वा क्रियतां तपस्विनाऽनेन ? मात्रादेशलङ्घनजनितं पातकमपि नार्जयितुमिच्छत्यसौ। अत एव कियद्भ्यश्चिद्दिवसेभ्यः पूर्वं तेन निर्धारितम्—पुनरपि मात्राऽनुरुध्यते चेत् तदात्व एवोद्वहेदिति। परं स्वादर्शानुसारिणीमेव कन्यकामुद्वहेत्।

अत्र च विषये भवतोषस्य केचन स्वतन्त्रा मतविशेषा आसन्, ते च तदट्टशूलस्थानां सर्वेषामेव सतीर्थानां सुविदिता एव। यदा तावद्रात्रौ भोजनत ऊर्ध्वं भवनवलभ्यां छात्राणां दण्डायमानानां गोष्ठी समवैति स्म, यदा बहूनामेव धूमपानवर्त्तिकानामग्राणि युगपदेव प्रदीप्यन्ते स्म, तदानीमसकृद् विषयोऽयमालोच्यते स्म, एवञ्च वादनिरतेन भवतोषेणासकृदेवोक्तम्, यदि कदाचित् परिणयेयं—यदि परिणयेयं तर्हि कृष्णवर्णां कुरूपामेव कन्यां परिणयेयम्। रूपवत्यो हि कन्यकाः प्रायेण दृप्ता एव भवन्ति। न खलु

तासां श्वश्रूश्वशुरयोर्भक्तिर्न वा पत्यौ दैवतबुद्धिः। न खलु ताः कदापि सहधर्मिण्यो भवन्ति प्रत्युत सहविलासिन्य एव सञ्जायन्ते। किञ्च ता अतीवाहार्यशोभाप्रिया भवन्ति। रूपलेशो वर्त्तत इति तद् रूपं सम्यक्तया विभूषयितुमतीवोत्कण्ठन्ते। फेनकान्यपेक्ष्यन्ते, सुरभितैलान्यपेक्ष्यन्ते, विलासचूर्णान्यपेक्ष्यन्ते, सुरम्याणि शाटकान्यपेक्ष्यन्ते, वरकञ्चुकान्यपेक्ष्यन्ते तपस्विनः पत्युः प्राणाः कण्ठगता एव सम्पद्यन्ते। अपरञ्च, विदुषीमपि बालां नैवाहं परिणेष्यामि। ता हि अहर्निशमाख्यानानि पठन्ति (काश्चन पुनराख्यानानि विरचयन्ति) संक्रीडन्ते च क्रीडापत्रैः। पत्ये पद्यमयपत्रसंप्रेषणेनैव दिनमतिवहति, गृहकार्य्याणि नैव सम्पद्यन्ते, व्रतनियमादीनां त्ववसर एव नास्ति, पुत्रश्च भूमौ निपतितो रोदिति इत्यादि।

इत्थमोजस्विनीं वाचोयुक्तिं समाकर्ण्य छात्त्रेषु च कैश्चिदुच्यते स्म, भवतु भवतु भवतोषमहोदय, कार्यकाले किं करिष्यति भवांस्तद् द्रष्टव्यम्। एवमुच्यते तु बहुभिः। वचनकर्मणोस्तावद् महदन्तरम्।

संशयख्यापनेन चानेनानलकल्पतामुपगतो भवतोषो ब्रूते स्म, "भवतु, द्रक्ष्यन्ति भवन्तः" अवश्यमेव द्रक्ष्यन्ति। मया यदेवोच्यते तदेव क्रियते इति।

मात्रा मुहुर्निर्बध्यमानो भवतोषोऽन्ततः प्रकटयामास सम्मतिं विवाहे। उवाच च, "भवतु मातः, विवाहं करिष्यामि, परं स्वयमेव कन्यकां संप्रेक्ष्योद्वाहयिष्यामि।"

तच्छ्रुत्वा माता हर्षस्य परां काष्ठामधिरूढाऽवदत, त्वं तावत् स्वयं परीक्ष्योद्वोढुमिच्छसि? सम्यक्। कान्ततरा काचन वर्त्तते कन्यका त्रयोदशवर्षीया।

एतदाकर्ण्य चकितेन भवतोषेणोक्तम्, परमरमणीया किल?

माता सोत्साहमवदत्, अतीव मनोज्ञा। मुखं तावत् तस्याः प्रतिमाया इव मनोरमम्।

भवतोषः शनैः शनैः गम्भीरस्वरेणोवाच, एवं तु नैवाहं परिणेष्यामि, मातः।

तच्छ्रुत्वा माता विसिष्मिये, उवाच च, किमिति ? किं तावत् संवृत्तम् ?

न खलु सुन्दरीं कन्यामहं परिणेष्यामि।

तर्हि कीदृशीं कन्यकां विवाहयिष्यसि त्वम् ?

अहं तावत् कृष्णवर्णां कुंतसितदर्शनां कुमारीमुद्वाहयिष्यामि। वज्रकठोरस्तावद् भवतोषस्य कण्ठस्वरः।

माता तु तदाकर्ण्य विस्मिततरा प्रोवाच, वत्स उन्मत्तस्त्वम्। सर्व एव सुन्दर्याः कन्यकायाः पाणिं ग्रहीतुमिच्छन्ति, बहवस्तु न लभन्ते तादृशीं कन्याम्।

सर्वे कुर्वन्तु। अहं तु किञ्चिदन्यथैव करिष्यामि।—एवं वदतो भवतोषस्य वदनमण्डलं सन्दीप्तं स्वगौरवेण। किमसौ सर्वेष्वन्तर्भवति ? किमसौ सर्व इव विलासायैवोपयच्छते ?

मातरं दुःखितां विलोक्य भवतोषः सर्वथा विस्पष्टं तस्या आख्यातवान्। यथा च सुन्दरी कन्यका आर्यगृहलक्ष्मीणामादर्शं संस्रष्टुं न प्रभवति तदपि तां सम्यग् बोधितवान्। अन्ततश्चोवाच, प्रतिज्ञा मे स्थेयसी, अचला च।

तस्मिन्नहनि जननी नैवाधिकं निरबध्नात्। भवतोषस्यावसितोऽवकाशः, स च कलिकातां प्रतस्थे।

---

द्वितीयः परिच्छेदः

प्रोक्तपूर्ववृत्तान्ताद् व्यतीतेषु कियत्सुचिद्वासरेषु एकदा उपेन्द्रवन्द्योपाध्यायस्य सहधर्मिणी प्रवहणेन समगच्छत् साक्षात्कर्तुं भवतोषमातरम्।

प्राथमिककुशलानुयोगादिसमनन्तरम् उपेन्द्रमहोदयस्य पत्नी पृष्टवती, अन्तिके, अपि सम्मतो भवतोषः ?

भवतोषस्य माताऽवदत्, विवाहे तावत् सम्मतः। तस्य तु मतमतीवाद्भुतम्।

कथमिव ?

प्रथमं तावदुवाच, अहं स्वयं परीक्ष्य पाणिग्रहणं करिष्यामि। मयोक्तम्, सम्यक्। अस्ति काचन निरतिशयलावण्या कन्यका। तां तावत् तद्भवनं गत्वा पश्य। तेनोक्तं, नाहं सुन्दरीं कन्यां परिणेष्यामि, काञ्चन कृष्णवर्णां कुत्सितदर्शनां कुमारीं परिणेतुमिच्छामि।

तच्छ्रुत्वा उपेन्द्रमहोदयपत्नी विस्मितोवाच, न हि कदाऽपि श्रुतपूर्वमीदृशमत्यद्भुतं प्रार्थनम्। कथं तावत् समुत्पन्नस्तस्यैतादृशो मनोरथस्तत्र किमप्युक्तं वा ?

एवमनुयुक्ता भवतोषजननी पुत्रमुखाच्छ्रुतं सर्वं निवेदितवती। उपेन्द्रमहोदयस्य पत्नी अनुध्यायन्ती स्थिता। व्यतीतायां च कियत्यांचित् कालकलायां प्रोवाच, अन्तिके, त्वं तावत् कर्मैकं कुरु। आगामिनि शनिवासरे आगमनार्थं भवतोषस्य सविधे पत्रं प्रेषय। पत्रे विलिख्यताम्, यादृशी कन्या त्वयेष्यते परिणेतुं तादृश्येव काचन मया स्थिरीकृता, तद्दर्शनार्थमागन्तव्यम्। ततश्च समागतोऽसौ रविवासरेऽपराह्णे प्रेष्यतामस्मद्भवने। मया सर्वं समीकरिष्यते।

भवतोषस्य माता तत्तथेति प्रत्यपद्यत। अचिन्तयच्च, कदाचिन्मन्यते उपेन्द्रमहोदयस्य भार्यया न खलु पुलिनां समवलोक्य भवतोषो विवाहं प्रत्याख्यातुं प्रभवेत्। वस्तुतस्तु न खलु तद्विस्मयावहम्—कन्यकाऽसौ परमार्थत एवातीव सुन्दरी।

---

## तृतीयः परिच्छेदः

भवतोषः शनिवासरे समगच्छत स्वभवनम्। परेद्यवि चापराह्णेऽश्वशकटेन केशान् रुक्षान् विधाय (प्राचीना हि मुनयो नैव प्रसाधितवन्तः केशान् इति) ग्रामान्तरे उपेन्द्रवन्द्योपाध्यायमहोदयस्य भवनं प्रययौ।

तत्र चाश्रृणोत्, न खलु उपेन्द्रमहोदय इदानीं वर्त्तते गृहे, कर्मानुरोधेन स्थानान्तरं गत इति। तरुणश्च कश्चन महता समादरेण तं शकटावतीर्णं बहिःप्रकोष्ठे समुपावेशयत्। तरुणोऽयमुपेन्द्रमहोदयस्यैव भ्रातृव्यः।

कियतश्चित् कालादूर्ध्व दासी काचित् समागत्य विज्ञापितवती, अन्तःपुरे

समागन्तव्यम् इति। दासी तावत् भवतोषस्य मुखे विनिवेश्य नयनद्वितयं किञ्चिदिव स्मित्वा प्रस्थिता।

यूना साकं भवतोषः प्राविशदन्तःपुरम्। दासकर्मकरादयः सर्व एव प्रयतन्ते हासं निह्नोतुमित्येवासीन्मनसि तस्य।

भवतोषश्च कस्मिंश्चन कक्षे नीतः। कक्षश्चासौ सुसज्जित एवासीत्, मध्ये च आसनमेकमास्तृतम्। तस्य च पुरतः कांस्यपात्रे फलानि मृष्टान्नानि च सन्नद्धान्यासन्। ततश्च नातिदूरे द्वितीयमासनमास्तीर्णमासीत्।

अभ्यर्थितश्च भवतोषो मृष्टान्नपात्रस्य पुरतः समुपविष्टः। अवसरे चास्मिन् बहिरश्रूयत मनोहरं शिञ्जितम्। दासी च कन्यकया साकं प्रविवेश। कन्या चापरस्मिन्नासन उपविश्य गृहमभितः पातितवती कुतूहलगर्भां दृष्टिपरम्पराम्।

व्रीडया विनम्रं भवतोषस्य वदनम्। किञ्चित् फलं च भक्षयति, नेत्रत्रिभागेण च पश्यति कन्यकाम्। कन्यायाः परिधानं तावत् वार्ताकुवर्णा काचन मृन्मयी शाटिका। मस्तकं च कबरीशून्यम्। केशास्तु तैल-सेकातिशयेन चञ्चवायमानाः स्थिताः।

कन्यकाया वर्णस्तावन्मसीविनिन्दितः। नयनद्वितयं क्षुद्राकारं कोटर-प्रविष्टं, निरन्तरं च घूर्णमानम्। ललाटमुन्नतम्। नासिका चिर्भटी। चिबुकमनस्तिकल्पम्। सम्मुखस्थाश्च दशनराजयः किञ्चिदेव दृश्यन्ते।

दृष्ट्वा चामन्यत भवतोषः, कामं कन्येयं मदीयादर्शानुरूपैव रूपेण। कथञ्चित् कण्ठं प्रसाध्य धैर्यं सञ्चित्योवाच, किं तावत् त्वदीयं नाम इति।

कन्यकाऽसौ सपदि भवतोषं प्रति निक्षिप्य दृष्टिं रसनां च किञ्चिदिव बहिर्निष्कास्योवाच, अँया ( किं ब्रवीषि ) ?

क तावत्तदीयं नाम ?

मम नाम जगदम्बा।

अत्रान्तरे युवा दासी च तां प्रति निचिक्षिपतुः सरोषं कटाक्षम्। सा च तदात्व एवाब्रवीत् न खलु जगदम्बा। मम नाम पुलिना।

अरुणेनोक्तम्. आदौ तावदस्या जगदम्बेति नामधेयमासीत्, इदानीं पुनः परिवर्त्य पुलिनेति विहितम् ।

भवतोषो व्यचिन्तयत्, न खलु परिवर्तनमिदं समीचीनम्। पुलिना—श्रवणेनैव निर्दहन्तीव गात्राणि। ततश्च जगदम्बेति नामातीव साधीयः। पौराणिकमिदं नाम—देवताया नाम। विवाहत ऊर्द्ध्वं मया जगदम्बेति नामैव स्थापयिष्यते।

भवतोषोऽपृच्छत्, किं पठ्यते त्वया।

बालिका पूर्ववत् प्रदर्श्य जिह्वामवोचत्, अँया।

किं पठ्यते त्वया ?

"किमपि न पठामि। मम जेष्ठः पाठशालायां—"। यूना च पुनरपि सरोषकटाक्षताडिताऽसावन्तरैव विरराम।

तच्छ्रुत्वा भवतोषः समधिकं समाश्वस्तः। इदमेव सम्यक् संवृत्तम्। इयमेव परमार्थत आर्यगृहिणीपदमारोपयितुं शक्ष्यते। दर्शने पुनः किञ्चित्—भवतु तावत् तत्—तदेव मे प्रतिज्ञातम्। विवाहे च कलिकाताभवनस्थाश्छात्रा निमन्त्रयाऽऽनेयाः।

भवतोषोऽवदत्, भवतु। गन्तव्यं त्वया।

बालिका जिह्वाग्रं निष्कास्य पुनरप्यवोचत्—अँया।

गन्तव्यम्।

तदा च दासी तां गृहान्नीतवती।

क्रमेण चावसितो भवतोषस्य फलादिसेवनव्यापारः। अत्रान्तरे त्रयोदशवर्षीया बालिका रजतकरङ्केण ताम्बूलानि समुपानयत्। बालाऽसावतीव हृद्यदर्शना, स्वदेशनिर्मितां कृष्णदशां शाटिकां परिधाय समागता। पादयोस्तस्याः पादकटकचतुष्टयं पाण्योश्च जात्यसुवर्णनिर्मितं वलययुगलम्। अन्तरा च भ्रुवोः खदिरविरचितं तिलकम्।

ताम्बूलानि संरक्ष्य प्रतिनिवृत्ताऽसौ बाला। प्रत्यावर्तनावसरे च किञ्चिदिव स्मित्वा गता।

भवतोषो मनसि व्यचिन्तयत्, दृश्यताम्। इयं तावत् सुन्दरी कन्यका। अथ चेदनया साकं मे विवाहोऽभविष्यत्, तर्हि कुतो मे रक्षा। सर्वाणि ममादर्शानि सर्वे च सङ्कल्पा अगाधसलिलराशौ न्यमङ्क्ष्यन्। कदाचिद् विलासविभ्रमनिमग्नस्य मे—ममापि भवतोषस्य—मानसो विकारः समघटिष्यत। नहि नहि न खलु सुखाय, प्रीतये, प्रणयाय वा मया परिणीयते; परं धर्माय संयमाय आदर्शार्यगृहस्थजीवनयापनायैव परिणीयते। प्रतिज्ञापूरणसम्भूतमात्मगौरवं नैव ममौ भवतोषस्य मानसे।

यूना साकं बहिरागच्छद्भवतोषः।

दासी चाऽऽगत्य सस्मितमवदत्, गृहकुटुम्बिन्यः पृच्छन्ति, अपि रोचते कन्यका इति।

भवतोषः साभिमानमुवाच, अथ किम्।

## चतुर्थः परिच्छेदः

शकटेन गृहं विनिवर्तमानो मनसा समालोचयद् भवतोष आपराह्णिकं वृत्तान्तजातम्। ग्रामपथेन समागच्छति शकटम्। कति नाम तरुण्यो जलभृतकलसा गृहं प्रत्यावर्तन्ते। तरुणीनां तासां वदनमण्डलानि सावधानमेव निरीक्षामास भवतोषः। तासु च सुन्दर्य आसन्, असुन्दर्योऽप्यनेका आसन्; परं जगदम्बाया इव कुत्सितमेकमपि वदनं नैव प्रबभूवासौ सन्द्रष्टुम्।

क्रमेण शकटं प्रान्तरं प्राप। तदानीमपि मानसं तस्य निर्भरमात्मजय-जनितसमुत्साहेन। तथाऽपि मनसा व्यचिन्तयत्, कामं मया प्रतिज्ञातं कुरूपापाणिपीडनम्, तथाऽपि एतादृशी चेद् विरूपा नाभविष्यत्, तथाऽपि कापि हानिर्नाभविष्यत्। यथा तथा वा भवतु, यदा तावद् 'रोचते मे कन्यका' इति उक्तं तदा किं वा फलमनेनाऽऽलोचितेन।

एतदवस्थो भवतोषः समासादितवान् आगारम्। माताऽपृच्छत्, अपि रुचिता ते कन्यका वत्स।

अथ किम्। रुचितैव।

तर्हि सर्वं प्रबन्धं कुर्याम् ।

क्रियताम् ।

अस्मिन्नेव तर्हि मार्गशीर्षमासि भवतु ।

भवतु । इत्युक्त्वा भवतोषः स्थानान्तरं प्रस्थितः ।

माताऽपश्यत् पुत्रस्य मानसं भाराक्रान्तमिव । व्यचिन्तयच्च न खलु सुन्दरीं कन्यकां परिणेष्यामि इति बह्ववल्गत, इदानीं च सम्मत इति मन्ये पुत्रकस्य मे लज्जा सञ्जाता ।

भवतोषो रात्रौ किमपि नोपायुङ्क्ताभ्यवहार्यम्, उवाच च, बहु किलाशितं तेषां गृहे, अतो नोपजाता क्षुधेति । तदानीं च मानसात् तस्याऽऽत्म-विजयजनितः प्रतिज्ञापूरणजनितश्च प्रोत्साहो विलीनप्राय एव ।

रात्रौ च शय्यायां निषण्णो यथा यथा व्यचिन्तयद् जगदम्बाया वदन-कमलकं तथा तथा हृदयाभ्यन्तरं तस्य जडीभावमापद्यत । आसीच्च तस्य चेतसि, सा चेत् तथाविधा कुरूपा नाभविष्यत्, यदि वर्णस्य श्यामत्वेऽपि वदनमण्डलं श्रीसम्पन्नमभविष्यत् तर्हि सम्यगभविष्यदिति ।

सोमवासरे शय्याया उत्थाय प्राभातिकबाष्पशकटेनैव कलिकातामसौ प्रस्थितः । माताऽवदत्, विवाहस्य दश दिनान्यवशिष्यन्ते । दिनद्वितयात् पूर्वमेव गृहमागन्तव्यमिति ।

यावदसावट्टशूलं प्राप तावत् सतीर्थ्या अस्यापश्यन्, घनान्धकारं तस्य वदनमिति । भवतोषश्च प्रविश्य स्वकक्षमुपविष्टः ।

'ननु भवतोषमहोदय का वार्त्ता' इति वदन्तः श्रीमन्तो रजनी-शरद्राखालकुमुदनृपेन्द्रमहोदयप्रभृतयः सम्प्राप्ताः । गृहागमनकाले सर्वमेवैभ्यो निवेदितं भवतोषेण । 'का वार्त्ता भवतोषमहोदय ?'

भवतोषः कथञ्चित् क्लिष्टं विहस्यावदत्, वार्त्ता तावच्छुभा इति ।

ततश्च सर्वे प्रश्नपूर्वकं कन्यकाया रूपगुणवयःप्रभृतिकं सर्वमेव विज्ञातवन्तः । सपदि च शरन्महोदयः पृष्टवान्, किं तावत् कन्यकाया नामधेयम् ?

भवतोषो नामधेयमुक्तवान्।

तच्छ्रवणेन सर्वेषां वदनसरोरुहेषु मन्दस्मितेन कृतं पदम्। केवलं नृपेन्द्रमहोदयेन विगतधैर्येणोच्चैर्विहसितम्, हा—हा—हा—जगदम्बा—ही ही—ही—शोभनं तावन्नाम।

शरन्महोदयेनोक्तम्, नृपेन्द्रमहोदय, किमेतदेवं हासकरम्! किमिति हसति भवान्?

न हि नहि, नाहं हसामि। ही-ही-ही-कथं वा हसिष्यामि। ही-ही—

रजनीमहोदयेनोक्तम्, किमत्राशोभनं नाम्नि? पौराणिकं नाम। अपि नाम इदानीन्तन-ज्योत्स्नामयी-सरसीबाला-तडिल्लता-मणिमालिनी-प्रभृतीन्येव नामानि शोभनानि?

तच्छ्रुत्वा भवतोषो गम्भीरं शिरः सञ्चालितवान्। विषयेष्वेषु तस्य पूर्वस्य समुत्साहस्याभाव एवाद्य संलक्ष्यते।

विवाहस्य नव दिनान्यवशिष्यन्ते। अमूनि नव दिनानि भवतोषस्य कथं व्यत्यवर्तन्त तत् स एवाजानात्, अट्टशूलस्था जना अपि किञ्चिद् व्यजानन्। यथा यथा चेतसा संस्मरति जगदम्बां भवतोषः, तथा तथा पर्यपूर्यत तमसा तस्य हृदयाभ्यन्तरम्। भवतोषो महाविद्यालयं गच्छति, अध्यापकानां व्याख्यानानि पुनर्लेशतोऽपि तस्य कर्णपथं न प्रविशन्ति। तस्य क्षुधा प्रथितैवासीच्छात्रावासे, इदानीं तस्य पात्रे अन्नव्यञ्जनमर्धतोऽप्यधिकमवशिष्यते। न केनापि साकं विदधाति हास्यालापं भवतोषः, सदैव शून्यमनस्कस्तिष्ठति। छात्रावासस्थाः सर्वे तमवदन्, भवतोषमहोदय, प्रणयामयस्य सर्वाण्येव लक्षणानि भवति प्रकाशमासादयन्तीति।

रात्रौ शय्यायां शयानस्य भवतोषस्य न खलु पूर्ववदनायासं निद्रायाति, केवलं पार्श्वपरिवर्तनं विदधात्यसौ। यदा च निद्रोपनमति तदा केवलं विभीषिकामयान् स्वप्नान् पश्यति। एकदाऽपश्यत् स्वप्ने जगदम्बया परिगृहीतः कालीविग्रहः। तस्याश्च स्वल्पा रसना या किल पूर्वं भवतोषेण प्रत्यक्षीकृता तस्याः अर्धं विनिर्गतम्। तस्याश्च अभिनवं हस्तद्वितयं

प्रादुर्भूतम्। पाणावेकस्मिन् रक्तविलिप्तः खड्गः, अपरस्मिंश्च छिन्नं मुण्डं लम्बमानं वर्त्तते। मुण्डश्च भवतोषस्येव प्रतिभाति। अपरेद्युश्चापश्यत् स्वप्ने, कण्टकाकीर्णे कस्मिंश्चिदरण्ये पथिभ्रान्तोऽसौ यावत् आकुलहृदयेन पन्थानमन्विष्यति तावत् कश्चन महिषस्तमभ्यधावत्। महिषस्य परिधानीयमासीन्नीलवर्णमुम्बयीसाटिका, तस्य च मस्तकस्य स्थाने जगदम्बाया एव वदनं विराजते स्म, ततश्च शृङ्गद्वितयं विनिर्गतम्।

यावच्च विवाहस्य दिनद्वितयमात्रमवशिष्यते तावदचिन्तयद्भवतोषः, मात्रे पत्रं विलिख्य निरोद्धव्यो विवाह इति। तस्मिंश्चाहनि अस्वास्थ्यापदेशेन नैवागच्छत् पाठशालाम्। समग्रमेव दिवसमेकको गृहेऽवस्थाय मात्रे एकैकशो बहूनि पत्राण्यलिखत्, लिखित्वा चिच्छेद। यदा च च्छात्रावासस्थाः सर्वे श्रोष्यन्ति भग्ना विवाहस्य वार्त्ता तदा किं वा ते वक्ष्यन्ति? कथं वा सोढव्यानि तेषां धिक्कृतानि उपहासा उल्लुण्ठनानि च?

दिने तस्मिन् रात्रौ शयानो व्यचिन्तयत् कस्मा अपि किमप्यनिवेद्य पश्चिमदिग्भागे पलायिष्ये इति। उत्थाय दीपिकां प्रज्वाल्य शकटनिर्गमनसूचिम् अपश्यत्। परं प्रभाते पुनरेव परिवर्त्तितं तदीयं मतम्। धिक् धिक्! अन्ततश्च एवंभूतव्यतिकरनिकरादूर्द्ध्वं किं भीरुसंज्ञा स्वीकरणीया तेन? न खलु तत् कदापि भविष्यति। प्रतिज्ञा तेन पालयिष्यत एव तत ऊर्ध्वं यद्वा भवतु।

निर्दिष्टेऽहनि स गृहमागच्छत्। यथाकालं च विवाहमण्डपं सम्प्राप्तवान्। तत्रत्येन च जनसमागमेनाऽऽलोकनिकरेण कोलाहलेन च दशभ्यो दिनेभ्यः परमद्य तस्य चित्तं प्रशान्तप्रायं सञ्जातम्। समापन्ने हि युद्धावसरे भीरुतमोऽपि योधो विस्मरत्येव भयम्।

प्रारब्धो विवाहः। तदानीं च निर्विकारमेव चित्तं भवतोषस्य। नासीत् तदानीं तस्य मानसे भीतिर्वा चिन्ता वा हर्षो वा नैराश्यं वा।

क्रमेण च समागतः "स्त्री-आचार"स्यावसरः। शुभदृष्ट्यर्थमास्तीर्णं वरकन्ययोर्मस्तकोपरि वस्त्रावरणम्। कन्यां प्रति च विनिक्षिप्य दृष्टिं विस्मितोऽभवत्

भवतोषः। न खल्वियं तस्य दशदिवसविभीषिका निद्रादुःस्वप्नो जगदम्बा। इयं खलु सा परमरमणीया बाला यया किल रजतकरङ्केण रक्षितानि ताम्बूलानि।

पुष्पशय्यानिशायां विफलतां गतेषु नववधूसंलापप्रयासेषु भवतोषेण चिन्तितः कश्चनाभ्युपायः। श्रुतं खलु तेन या किल नववधूरुपायशतेनापि न संलपति पत्या साऽपि स्वजननिन्दां श्रुत्वा तदात्व एव विप्रतिपद्यते। अत एवोक्तं भवतोषेण किमिति मात्रा ते विप्रलब्धोऽहम् ?

तदा चोवाच पुलिना, अहं सुन्दरीति त्वं किल नैवैच्छो मामुद्वोढुम्। इदानीं लब्धं तस्य फलम्।

न खल्वेतावता कालेनालमासीद् भवतोषः प्रहेलिकामिमां समाधातुम्। अत एवापृच्छत् का सा मया दृष्टा ?

सा हि पल्लीस्थतैलिककन्या। लब्धमनुरूपं फलम् !

क्रमेण चाऽऽगतस्तथाविधः कालो यदा भवतोषेण पत्रागमनकालात् पूर्वमेव छात्रावासस्य द्वाराद् बहिरवस्थाय पत्रवाहकं साक्षात् कर्तुमारब्धम्।

---

निद्रानन्दकरीर्नितान्तधवला आमोदिनीरप्यमूः
पीयूषं मधु वर्षतीरपि तमोभृङ्गान् निराकुर्वतीः।
आकाशद्रुममञ्जरीरिव विधोर्भासः ककुप्कामिनी-
नीलोत्तंसरुचः करोति नियतं बाणान् प्रसूनायुधः॥
एतैर्जह्नुसुताजलैरयमुनाभिन्नैरलग्नाञ्जनै-
र्नारीणां नयनैरकर्दमलवालिप्तैर्मृणालाङ्कुरैः।
हारैरस्फुरदिन्द्रनीलतरलैः कुन्दैरलीनालिभि-
र्वल्लद्भिर्भुवनं विभूषितमिदं शीतद्युतेरंशुभिः॥

---

# विद्याप्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदशर्महालदारः । ]

अर्थस्य प्रयोजनस्य वादो वादनमर्थवादः। स एव प्रवृत्तये विध्यर्थं प्रशंसति, निवृत्तये तु निषिद्धार्थं निन्दति। स चायं लोके वेदे च समानः। तत्र लौकिकः पुष्टिकामो घृतं भुञ्जीतेत्यत्र विध्यर्थस्य घृतभोजनस्य स्तावकम्, 'आयुर्वै घृतम्' ऋणं कृत्वा घृतं पिवेत्' इत्यादि वाक्यम्। एवं कफपीडितो दधि न भुञ्जीतेत्यत्र निषेधविधावपि दधिसेवनस्य निन्दकं गोभिभक्षितेनापथ्य-तृणादिना दुग्धं जन्यते तच्च विषरूपमामिक्षीयसंयोगादित्यादिवाक्यम्। वैदिकोदाहरणानि पुनरनुपदं वक्ष्यामः।

अर्थवादश्चतुर्विधः स्तुतिर्निन्दा परकृतिः पुराकल्पश्चेति। प्रागेव तदुदाहरणानि सविशेषेण दर्शितानि।

अर्थवादः पुनस्त्रिधा गुणवादोऽनुवादो भूतार्थवादश्चेति। यथा आदित्यो यूपः, अग्निर्हिमस्य भेषजम्, वज्रहस्तः पुरन्दर इत्यादिः। अत्र प्रथमं गुणवादोदाहरणं द्वितीयमनुवादोदाहरणं तृतीयं भूतार्थवादोदाहरणमिति विशेषः। तदुक्तं भट्टपादैः—

गुणवादो विरोधे स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः॥ इति।

अयमभिप्रायः। प्रमाणान्तरविरोधे सत्यर्थवादो गुणवादः; यथा—आदित्यो यूप इति। यूप आदित्याभेदस्य प्रत्यक्षबाधितत्वादादित्यवदुज्ज्वलत्वरूप-गुणोऽनेन वाक्येन लक्षणया प्रतिपाद्यते। प्रमाणान्तरावगतार्थबोधकोऽर्थ-वादोऽनुवादः; यथा—अग्निर्हिमस्य भेषजमिति। तत्र हिमविरोधित्व-स्याग्नौ प्रत्यक्षावगतत्वादर्थवादस्यानुवादित्वम्। प्रमाणान्तरविरोधतत्-

प्राप्तिरहितार्थबोधकोऽर्थवादो भूतार्थवादः, यथा—वज्रहस्तः पुरन्दर इति। तत्र पुरन्दरस्य वज्रहस्तत्वाभावावगाहिप्रमाणान्तरादर्शनादर्थवादस्य भूतार्थवादत्वमेव।

केचित्तु मीमांसका विधिशेषो निषेधशेषश्चेत्यर्थवादं द्वैविध्येन विभेजिरे। तत्र 'वायव्यं श्वेतच्छागलमालभेत भूतिकाम' इत्यादिविधिशेषस्य 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती'*-त्यादौ वायुः क्षेपिष्ठेत्याद्यर्थवादो हि श्वेतपश्वालम्भनं यागं प्रशंसतीति विज्ञेयम्। 'बर्हिषि रजतं न देयमि'त्यादिनिषेधशेषस्य 'सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्' इत्यादिनिषेधवाक्यं तु क्रतावृत्विग्भ्यो रजतं न देयमिति निषिद्धं रजतदक्षिणादानं निन्दतीति बोध्यम्। न च प्राशस्त्यादिबोधस्य निष्प्रयोजनत्वेन नार्थवादस्यार्थवत्त्वमिति वाच्यम्। क्वचिद् अवसीदद्विधिशक्तेरेव स्तुत्यादीनामुत्तम्भकत्वाद् आलस्यादिवशादप्रवर्त्तमानस्य पुरुषस्य प्रवृत्त्यादिजनकत्वेन तद्बोधस्योपयोगात्।

एवं वेदानां विध्यादिभाग उक्तः। इदानीमपूर्वमुच्यते। अत्र 'चिर-ध्वस्तं फलायालं न कर्मातिशयं विने'त्येतद्वाक्यावगतयुक्तिविशेषेण वैधनिषिद्धकर्मजन्यं कालान्तरभावि सुखदुःखयोर्हेतुभूतमदृष्टमपूर्वमिति मीमांसका वदन्ति। चिरध्वस्तं चिरविनष्टं कर्म अतिशेते आत्मनि स्थिरतरं तिष्ठतीति अतिशयोऽपूर्वाख्यव्यापारस्तं विना फलाय तज्जननाय नालं न समर्थमित्यर्थः। अत्र चिरपदमत्यन्तासम्भावनाज्ञापनार्थम् इति। तदेव प्रारब्धकर्मेति वेदान्तिनो धर्माधर्माविति नैयायिकाः पुण्यपापे इति च पौराणिकाः। शाब्दबोधात् पूर्वं नोपस्थितमित्यत एवापूर्वम्। तदेव पुण्यापुण्यरूपत्वेन चेन्द्रियायोग्यत्वाददृष्टमित्युच्यते। पुनरपि विधिप्रत्ययेन विधेये कार्यताप्रतिपादनात् कार्यमिति चोच्यते। अपूर्वकल्पने मीमांसकानामयमेव स्वरसः। स्वर्गकामोऽश्वमेधेन यजेतेत्यादिविधिषु

---

* कृष्णयजुःसंहिता २।१।१

स्वर्गकामी पुरुषो नियोज्यत्वेन स्वर्गसाधने संबध्यमानो दृश्यते। इत-प्रत्ययेन च यागस्येष्टसाधनता बोधनीया। इष्टत्वं च विधिसमभिव्याहृत-फलस्यैव। तथा च स्वर्गकामस्याश्वमेधयागः स्वर्गरूपेष्ट साधनमित्येवं रूपेण यागे स्वर्गसाधनत्वान्वयोऽभ्युपेयस्तथा स्वर्गकामिनि पुरुषे स्वर्ग-साधनीभूतयागकर्त्तृत्वान्वयोऽवश्यमेव स्वीकर्त्तव्यः। स च कार्याव्यवहित-प्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक-धर्मवत्त्वस्यैव कारणत्वेन क्षणभाविनो यागस्येच्छारूपस्य कालान्तरभाविनः स्वर्गादेस्तत्कारणत्वानुपपत्तेर्न सङ्गच्छत इति वेदबोधिततत्तदन्वयोपपत्तये चिरातीतानुभवस्य स्मृतिजनकत्वान्वये स्वजन्यसंस्कारवत्त्वमिव स्वर्ग-पर्यन्तस्थायि क्रियातो भिन्नं कार्यमपूर्वं व्यापारत्वेनाङ्गीकृत्य तद्वत्त्वरूप-योग्यतया तत्साधनत्वं वाच्यम्। इत्थं च योग्यताज्ञाने सति साक्षात् साधनत्वविरहेऽपि परम्परयैव तत्साधनत्वाद्यन्वयबोधो जायते तृतीयप्रकारा-भावात्। तदुपस्थितिस्तु आख्यातपदेनैव, उपस्थापकान्तराभावात्। ततश्च कार्यशक्तस्याख्यातस्य कार्यत्वेनापूर्वमेव शक्यमित्युन्नीयते। अयमत्रोन्नयनप्रकारः। यद्यपि कार्यत्वेनापूर्वे शक्तिग्रहो दुर्घटः प्रमाणान्तरा-वेद्यत्वेन तस्य प्रागनुपस्थितेः, तथापि कार्यत्वेन घटादिविषयकशक्ति-ग्रहानन्तरं यागेन घटाद्यनुत्पादनात् तत्र तत्र बाधेनापूर्वमेव कार्यत्वेनो-पादाय यागजन्यं कार्यमिति कार्यान्वयबोधः पर्यवस्यतीति।

ननु, व्यापाररूपेण किमपूर्वकल्पनया, क्लृप्तनियतपूर्ववर्त्तित्वाद् याग-ध्वंसस्यैव व्यापारत्वमस्तु। अत्रोच्यते। यागध्वंसस्य स्वर्गहेतुत्वे यागस्य प्रतिबन्धकतापत्तिः। कारणीभूताभाव-प्रतियोगिन एव प्रति-बन्धकत्वात्। इष्टापत्तौ च वेदबोधितकारणतानुपपत्तिः कारणत्वप्रति-बन्धकत्वयोर्मिथो विरोधात्। न च देवताप्रीतेरेव शास्त्रसिद्धाया व्यापार-त्वमस्त्विति वाच्यम्, देवताया इन्द्रादिरूपायाश्च्युताधिकारित्वे फलानुदय-प्रसङ्गात्, अधिकारच्युतौ फलदानशक्तेरपि विनष्टत्वात्। तत्सत्त्वे न्याय-शास्त्रस्यापि प्रमाणम्—

सापेक्षत्वादनादित्वाद् वैचित्र्याद् विश्ववृत्तितः ।
प्रत्यात्मनियमाद् भुक्तेरस्तिहेतुरलौकिकः ॥ इति ।

अयमभिप्रायः । इहैव विश्ववृत्तितो विचित्रा उच्चावचाः सुखदुःखानुभवरूपा भोगा अनादिकालादारभ्य प्रत्यात्मवेदनीया दृश्यन्ते । ते हि न नित्या उत्पत्तिनाशशीलत्वात्, किन्तु कादाचित्का एव । सति च कादाचित्कत्वे तेषां हेतुसापेक्षत्वमवश्यमेव, यतो भोगव्यक्तयः सन्ति । यद् यत् कादाचित्कं तत्तत् सहेतुकं यथा घटः पटो वा । एवं भोगानां हेतुसापेक्षत्वसिद्धिः । स च हेतुर्न लौकिकप्रत्यक्षादिविषयः कश्चित् सम्भवति तदन्वयव्यतिरेकाभावाद् ; न च कालस्यैव तद्धेतुत्वेनार्थान्तरापातः, कालस्य साधारणकारणतया विचित्रं भोगं प्रत्यनियामकत्वस्य सर्वत उपपन्नत्वात् । अन्यथा कालस्यैकरूपतया सर्वदा सर्वभोगप्रसङ्गः । तदेव विचित्रभोगानामलौकिकं यत् कारणं कल्पनीयं तददृष्टापरपर्यायमपूर्वमिति न्यायनये सर्वमवदातम् ।

मीमांसामते पुनरपूर्वं त्रिविधम् प्रधानापूर्वमङ्गापूर्वं कलिकापूर्वं चेति । तत्र दर्शपूर्णमासयोरपूर्वं प्रधानापूर्वं यच्च परमापूर्वमित्युच्यते । प्रयाजादेरङ्गजन्यापूर्वमङ्गापूर्वम् । तदवान्तरक्रियाकूटजन्यमपूर्वं तु कलिकापूर्वम् । तत्रापि परमापूर्वं चतुर्विधं फलापूर्वं समुदायापूर्वमुत्पत्त्यपूर्वमङ्गापूर्वं चेति । यतः स्वर्गादिफलमारभ्यते तत् फलापूर्वम् । अमावास्यायां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यामपरः, तयोर्भिन्नकालवर्त्तिनोः संहृत्य फलापूर्वारम्भायोगात् तदारम्भाय समुदायद्वयजन्यमपूर्वद्वयं समुदायापूर्वम् । तयोरेकैकस्यारम्भायैकैकसमुदायवर्त्तिनां त्रयाणां यागानां भिन्नक्षणवर्त्तित्वेन संघातापत्त्यभावाद् यागत्रयजन्यानि त्रीण्यपूर्वाण्युत्पत्त्यपूर्वाणि । तेषां चाङ्गोपकारमन्तरेणानिष्पत्तेरङ्गानां चानेकक्षणवर्त्तिनां संघातासम्भवाद् अङ्गापूर्वाणि कल्पनीयानि । अङ्गापूर्वैस्तु परमापूर्वस्य कश्चिद्विशेष आधीयते इति भेदः । तथा चाङ्गापूर्वसहितं परमापूर्वं विशिष्टफलं जनयति, तद्विहीनं तु स्वल्पं फलमेव । अतः प्रधानकरणे दैवादङ्गाकरणेन न प्रधानस्य वैफल्यं किन्तु अल्पफलत्व-

मेवेति राद्धान्तः। केवलाङ्गापूर्वाणां तु न फलजनकत्वं प्रधानासिद्धेः फलाभावात्। तदेव छन्दोगपरिशिष्टे—

प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः ।

तदङ्गस्याक्रियायां तु नाऽऽवृत्तिर्न च तत्क्रिया ।। इति ।

अन्त्यं कलिकापूर्वं व्रीहिप्रोक्षणाभ्युक्षणादिजन्यं द्रव्यनिमित्तं भवति। तच्च परमापूर्वं जनयित्वा नश्यति ।

पौराणिकास्तु पुण्यं पापं चेत्यपूर्वं द्वैविध्येन विभेजिरे। अत्र विहितानुष्ठानजन्यं पुण्यम्, निषिद्धानुष्ठानजन्यं तु पापमेव। तदुभयमपि त्रिविधं प्रारब्धं फलदानोन्मुखं सञ्चितं चेति। तत्र यत् षाट्कौशिकदेहाद्यारम्भकं तत् प्रारब्धं भवति। चिरसञ्चितानां मध्ये फलविपाकाय यदुन्मुखं तत् फलदानोन्मुखम्। तद्भिन्नं तु सर्वं सञ्चितमेव ।

'कलनात् सर्वभूतानां काल इत्यभिधीयत' इत्यादिनिर्वचनात् कालस्य सर्वनाशकत्वेऽपि नापूर्वनाशकत्वं 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी'ति शास्त्रान्तरात्, किन्तु भोगादेव तन्नाशः सम्भवति। तथा पुण्यस्य च कर्मनाशानदीजलादिस्पर्शतो नाशः। पापस्यापि प्रायश्चित्तादिना नाशः शास्त्रे व्यवस्थापितः। प्रारब्धातिरिक्तकर्मणां तु नाशस्तत्त्वज्ञानादेव भवति। तत्र प्रमाणं च—ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुनेति ।

क्रमशः ।

"भारते भातु भारती"

# संस्कृत-साहित्य-परिषत्

१८५५ शकीयसौरमाघस्य पञ्चदशदिवसः।

सबहुमानमावेदनम्—

महोदयाः, आगामिनि सौरमाघस्य द्वाविंशदिवसे सोमवासरे सायं सार्द्धषड्वादनतः परिषदो वर्त्तमानवर्षीयाण्यधिवेशनानि भवितारः, तत्र भवतां सानुग्रहमुपस्थितिः साग्रहं प्रार्थ्यते इति—

विनीतयोः—
श्रीअमरेश्वरठाकुर-वेदान्तशास्त्रिणः
श्रीयतीन्द्रनाथ-वसुजस्य च
सम्पादकयोः।

आलोच्यविषयाः—

१। गताधिवेशनकर्मविवरणपाठः।

२। नूतनसभ्यनामकीर्त्तनम्।

३। निबन्धानां पाठः—

(क) 'काशिकावृत्ति'रितिशीर्षकस्य,

(ख) 'वोपदेवस्य वङ्गीयत्व'मितिशीर्षकस्य,

निबन्धकः—श्रीक्षितीशचन्द्र चट्टोपाध्यायः,

(ग) 'प्रत्यभिज्ञारसिकः कः' इतिशीर्षकस्य,

निबन्धकः—के. ए. रामलिङ्गशास्त्री,

(घ) 'वेदापौरुषेयत्ववादः' इतिशीर्षकस्य च,

निबन्धकः—श्रीविनोदविहारी मजुमदारः, एम् ए।

४। विविधाश्च।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| November, 1933. | १८५५ शकीये कार्त्तिके १६श-वर्षस्य ७म-संख्या | Vol. XVI No. 7 |
|---|---|---|

## संस्कृत-साहित्य-परिषदः सप्तदशवर्षीयकार्यविवरणम्

[ निबन्धकः—श्रीअमरेश्वरठाकुरवेदान्तशास्त्री ]

माननीयाः सभापतिमहोदयाः समवेताः सभ्यमहाभागाश्च—

अद्य खलु संस्कृत-साहित्य-परिषदः सप्तदशवार्षिकमहोत्सवो वर्त्तते। तत्र कृपया समागतेभ्यः सर्वेभ्य एव भवद्भ्यः सादरसम्भाषणादिकं विज्ञाप्य विगतवर्षीयं कार्यजातम् उपस्थापयितुमुद्युक्ता वयम्।

तद्विगणनावसरे प्रथममेव मनसि समायाति विगतवर्षीयवार्षिक-महोत्सवः, यः खलु सौराश्विनस्य षष्ठदिवसे ष्टाररङ्गमञ्चे समपद्यत यत्र च प्रज्ञावतां प्रख्यातकीर्त्तीनां 'सार'इत्युपाधिकानां श्रीमतां विपिनविहारि-घोषमहोदयानाम् आध्यक्ष्यमासीत्। तत्रावसितेष्ववान्तरकार्यनिवहेषु सभापतिमहोदयेन देवभूयं गतानां सुगृहीतनामधेयानां पुण्यचरितानां पण्डितशिरोमणीनां लक्ष्मणशास्त्रिद्राविडमहोदयानां तैलचित्रप्रतिष्ठा व्यधायि। एतत्प्रसङ्गेन महामहोपाध्यायाः श्रीमन्तोऽनन्तकृष्णशास्त्रिणः काशीवास्तव्याः श्रीमन्तः कृष्णशास्त्रिणः श्रीमन्तो दामोदरदासखान्ना महोदयाश्च

त्यागमूर्त्तीनां शास्त्रिपादानां पाण्डित्यसारल्यौदार्यधर्मप्राणतादिगुणजातं समाख्याय वाक्प्रसारं प्रकटयामासुः। ततः सभापतिमहाभागैः शास्त्रानुशीलननिष्ठानां प्राच्यनियमानुवर्त्तिनां पण्डितसमाजानां समधिकप्रशंसाख्यापनपुरःसरं सारवत् किमप्यभिभाषणं कृतम्। ततः परिषत्सभापतिभिः श्रीमद्दुर्गाचरणसांख्यवेदान्ततीर्थपादैः सभापतिमहोदयेभ्यो धन्यवादाः प्रदत्ताः। ततः सभाभङ्गो जातः। सभान्ते च परिषत्सदस्यैर्महाकविवत्सराजविरचितं 'रुक्मिणीहरणं' नामेहामृगं 'हास्यचूडामणि'नामकं प्रहसनञ्चाभिनीते। एतद्रूपकद्वयमनभिनीतपूर्वमासीत्। अभिनयनैपुण्येन सर्व एव सहृदयाः परमां मुदं लेभिरे।

विगतवर्षे दशसंख्याकानि मासिकाधिवेशानि सञ्जातानि। तत्र तत्राधोनिर्दिष्टा निबन्धास्तत्पार्श्वलिखितनामभिर्महात्मभिर्वाचिताः।

१। कालिदासकाव्ये व्याकरणम् —श्रीमता क्षितीशचन्द्रचट्टोपाध्यायेन।

२। कालो हि दुरतिक्रमः -के. ए. रामलिङ्गशास्त्रिणा।

३। वार्त्ता—श्रीमता भवविभूतिविद्याभूषणेन।

४। व्याकरणाधिकरणे गर्जन्तो मीमांसकाः -श्रीमता क्षितीशचन्द्रचट्टोपाध्यायेन।

५। न्यायदर्शनम्—श्रीमता तारानाथतर्कन्यायतीर्थेन।

६। पारसीकानां भारतागमनम्—श्रीमता क्षितीशचन्द्रचट्टोपाध्यायेन।

७। केन लिखिता भगवद्गीता —श्रीमता क्षितीशचन्द्रचट्टोपाध्यायेन।

८। आत्मनिग्रहः—के० ए० रामलिङ्गशास्त्रिणा।

९। शब्दनिर्वचनम्—श्रीमता क्षितीशचन्द्रचट्टोपाध्यायेन।

१०। गुणाः पूजास्थानं गुणिषु—के ए. रामलिङ्गशास्त्रिणा।

सर्व एव निबन्धाः संस्कृतभाषया रचिताः सर्व एव च तत्र तत्राधिवेशने समवेतैः पण्डितवर्यैः संस्कृतभाषयैव पर्यालोचिताश्चाऽऽसन्। एतत् खल्वत्र द्रष्टव्यं दशसु निबन्धेषु पञ्चानां कर्त्ता श्रीमान् क्षितीशचन्द्र-

चट्टोपाध्यायमहोदय एक एव। एतेन पण्डितप्रवरेण सदैव श्रमातिशयमङ्गी-कृत्य परिषदः साहायकं विधीयते इति तस्मै हार्दिकीं कृतज्ञतां ज्ञापयामः।

विगते वर्षे कार्यनिर्वाहकसमितिश्च दश वारान् मिलिता सती कमप्याग्रहम् उत्साहञ्च प्रकटय्य कार्याणि सम्पादयामासेति तत्सदस्येभ्योऽशेषान् धन्यवादान् वितरामः।

परिषद्विद्यालयाऽध्यापकप्रवराणां श्रीमतां सीतानाथसिद्धान्तवागीश-महोदयानां तथा श्रीमताम् उपेन्द्रमोहन-सांख्यतीर्थ-महोदयानाञ्चाऽऽध्यक्ष्येण प्रचलति स्म। कार्यबाहुल्यवशात् श्रीमन्त उपेन्द्रमोहनसांख्यतीर्थ-महोदयाः पदत्यागं कृतवन्तः। एतेषामध्यापनचातुर्यं यादृशमासीत्तेन विद्यालयस्य किमपि गौरवं वैशिष्ट्यञ्च समजनीति ते अस्माकं कृतज्ञता-मर्हन्ति। विगते वर्षे विंशतिसंख्याकाश्छात्राः परिषद्विद्यालये अधीयते स्म, तेषु षट् विविधराजकीयपरीक्षासु समवातरन् सर्व एव समुत्तीर्णाः सञ्जाताः। तेषु पुनः श्रीमतो रोहिणीकुमारचतुर्धुरीणस्य नाम समुल्लेखमर्हति। एष खलु श्रीमान् व्याकरणोपाधिपरीक्षायां प्रथमविभागे द्वितीयस्थानमधिचकार। विद्यालयसंरक्षणार्थं कर्पोरेशनसभातोऽस्माभिः सार्द्धशतरूप्यकाणि लब्धानीति तत्सदस्येभ्य आन्तरिकीं कृतज्ञता-मुपहरामः।

ग्रन्थागारसंरक्षणं तदुत्कर्षसाधनञ्च परिषदोऽन्यतमं कार्यम्। एतदर्थं कर्पोरेशनसभातः परिषदा प्रतिवर्षं सार्द्धषट्शतरूप्यकाणि लभ्यन्ते, एतदेव साहाय्यं ग्रन्थागारसमृद्धेर्निदानभूतमिति कृतज्ञताप्रवणचित्तैरस्माभि-स्तत्सदस्या विनिवेद्यन्ते। ग्रन्थागारस्य यादृशी समृद्धिरस्माभिः काम्यते यद्यपि सा न सञ्जाता तथाप्येतद् विभिन्नस्थानवास्तव्यानां शास्त्रानुशीलननिरतानां विबुधानाम् अनुसन्धित्सानिष्णातानाञ्च छात्राणा-मुपकाराय कल्पते इत्यस्माकं परितोषः। कविराजप्रवराः श्रीमन्तो वसन्तकुमाररायमहोदया बहून् मुद्रितग्रन्थान् पण्डितवर्याः श्रीमन्तो यज्ञेश्वरवेदान्ततीर्थमहोदयाश्च कतिपयान् अमुद्रितान् ग्रन्थान् प्रदाय

अस्माकं कृतज्ञताभाजनं सञ्जाताः। अधुना परिषद्ग्रन्थागारे मुद्रित-ग्रन्थानां संख्या त्रिशतोत्तरचतुःसहस्राधिका अमुद्रितानाञ्च द्विशतोत्तरा त्रिसहस्राधिका। परिषद्ग्रन्थाध्यक्षा विविधशास्त्रज्ञानमण्डितधियः श्रीमन्तो जानकीनाथसाहित्यशास्त्रिणो ग्रन्थागारसमुन्नतिविधौ सर्वथा प्रयतमाना वर्त्तन्ते इति तेभ्यो वयं कृतज्ञतां धन्यवादञ्च ज्ञापयामः। अर्थकृच्छ्रतावशात् पृथग्रूपेण ग्रन्थप्रकाशने अशक्नुवन्तोऽपि वयं तत्र दत्तावधाना वर्त्तामहे। 'सर्वप्रत्ययमाला', कयाचिदभिनवटीकया समुपेतं 'मीमांसादर्शन'ञ्च परिषत्पत्रिकायां यथावत् सम्पाद्यमाने स्तः। अर्थक्लेशे कथञ्चिदुपशमं प्रयाते अप्रकाशितपूर्वा ग्रन्था पूर्ववत् प्रकाश्येरन्नित्यत्र किं वक्तव्यम्।

षोडश वत्सरान् यावत् सहृदयानामुपयोगमावहमाना नानाविषय-गुम्फिता परिषत्पत्रिका यथानियमं प्रकाश्यते। पत्रिका विगतं वर्षचतुष्टयं यावद् विश्वविद्यालयाध्यापक-श्रीमत्क्षितीशचन्द्रचट्टोपाध्यायमहोदयेन लालिता तत्सम्पादननैपुण्येन परिपुष्टा विभिन्नप्रदेशस्थितानां सुधीवर्याणां सुदृष्टिपातैरभिवर्द्धिता च परिषदो वैशिष्ट्यं प्रकटयन्ती तद्गौरवञ्च वर्द्धयन्ती वर्त्तते इत्यस्माकं मोदाय।

विगते वर्षे परिषदो विशेषसभाधिवेशनत्रयं सञ्जातम्। तत्रैकस्मिन् विश्वभारत्यध्यक्षाः पाण्डित्यमण्डितबुद्धयः श्रीमन्तो विधुशेखरशास्त्रि-महोदया भाषातत्त्वमधिकृत्य कञ्चन गभीरार्थद्योतकं सुललितं निबन्धं वाचितवन्तः। एतस्मिन् शास्त्रे निष्णातमतयः श्रीमन्तः सुनीतिकुमार-चट्टोपाध्यायमहोदयाः नेपालप्रदेशस्य राजगुरवः श्रीमन्तो हेमराज-जी-महाभागाश्च एतत्प्रसङ्गेन भाषातत्त्वविषयिणीं गूढार्थां कथामवतार्य सदस्य-वर्गाणां परितोषं जनयामासुः।

अपरस्मिन्नधिवेशने महामहोपाध्याय इत्युपाधिं निमित्तीकृत्य पण्डित-प्रवराणां श्रीयुक्तहरिदाससिद्धान्तवागीशमहोदयानाम् अभिनन्दनं कृत-मासीत्। तत्रोपस्थिताः सामाजिकाः महामहोपाध्यायपादानां पाण्डित्यं

कर्मपटुत्वं भूयोदर्शनञ्च बहुधा वर्णयामासुः परिषत्पक्षतश्च मुद्रितमभिनन्दनपत्रं तेभ्यः प्रदत्तमासीत्।

राजकीयव्ययसङ्कोचसमितिनिर्द्धारणानुसारतो यथा कलिकातासंस्कृतमहाविद्यालयस्य कथमपि सङ्कोचो न जायेत तदर्थं प्रयत्नकरणाय अपरम् अधिवेशनं सञ्जातम्। एतस्मिन्नधिवेशने व्ययसङ्कोचसमितेः संस्कृतमहाविद्यालयसम्बन्धि निर्द्धारणं दूषयित्वा कश्चित् प्रस्तावो गृहीतस्तदनुलिपिश्चाधिकारवतां राजपुरुषाणां सविधे प्रेषिता।

विगते वर्षे परिषत्कार्यजातावलोकनाय केषाञ्चन महात्मनामत्र शुभागमनं सञ्जातम्। शार्मण्यदेशवास्तव्या डाः हार्ज्ज इत्याख्याः केचन मनीषिणः नेपालराजगुरवः श्रीमन्तो हेमराज-जीमहोदयास्तथा मुम्बइ-प्रदेशान्तर्भूतखान्देशस्थानवास्तव्याः श्रीमन्तः शान्तजी-महाराज-महोदयाश्च परिषद्भवनं समागत्य परिषदः कार्यजातानि समवलोक्य परां प्रीतिं प्रकटयामासुः।

स्थिरतया निर्दिष्टमपि सहस्रमुद्रात्मकं राजकीयं साहाय्यं विगते वर्षे सप्तशतमुद्रात्मकत्वेन खर्वीकृतमासीत्। सर्वदेशव्यापिन्यर्थकृच्छ्रतैवात्र कारणं नान्यत् किमपि। न जाने कदाऽस्या अवस्थाया उन्नतिर्भवेत् कदा वा परिषत्साहाय्यं वृद्धिमाप्नुयादिति।

शास्त्रज्ञानपिपासूनां सन्तोषविधानार्थं महामहोपाध्यायाः श्रीमन्तो दुर्गाचरणसांख्यवेदान्ततीर्थमहाभागा वर्षारम्भ एव उपनिषदादिशास्त्रव्याख्यानमारब्धवन्तः। तेषां महात्मनां कार्यबाहुल्यवशाद् यथावत्तन्न कर्त्तुं शक्यते इति श्रीमन्तो जानकीनाथसाहित्यशास्त्रिणस्तत्र गृहीतभारा वर्त्तन्ते, तेषां च व्याख्यानकौशलेन श्रोतॄणामाधिक्यमुत्तरोत्तरं परिदृश्यते। परिषत्पक्षीयाः सर्व एव वयं पुनरपि तेभ्यः कृतज्ञतां ज्ञापयामः।

यानि खलु दैनिकपत्राणि परिषदः सामयिकान् सन्देशान् विवृतीश्च यथासमयं संप्रकाश्य एतदुपकारं विदधते तदध्यक्षेभ्योऽपि वयं हार्दिकीं कृतज्ञताम् अशेषान् धन्यवादांश्च निवेदयामः।

सुधीवर्याः, समासतो विगतवर्षीयं कार्यविवरणं भवतां सविधे समुपस्थापितम्। एतेनैव प्रतिपद्येरन् भवन्तो यदार्थिकदौर्गत्येऽपि परिषत् स्वकार्यनिर्वहेषु दत्तावधानैवासीत्। अत्र भवतामानुकूल्यं कर्मिणामैकान्तिक-प्रयत्नश्च निदानं नान्यत् किमपि। भवतां सहयोगः कृपादृष्टिश्च चेत् परिषदियं साफल्यं लभेत। आर्याणां सर्वविधं ज्ञानं यस्यां भाषायामुपनिबद्धं या खलु भाषा वेदादिधर्मशास्त्राणां जननी यां भाषां परिहाय आर्याणा-मार्यत्वं विलोपमाप्नुयात् तस्या एव भाषायाः प्रसारार्थं प्रतिष्ठितेयं संस्कृतसाहित्यपरिषद् यथा पुष्टिं पूर्णताञ्चेयात् कृपया तत्करणाय भवतः प्रार्थयामहे। एतां परिषदं भवन्तः सुदृष्टां कुर्वन्तु इति भूयोभूयः प्रार्थय-माना वयं पुनरपि भवद्भ्यो यथायोग्यं स्वागतनमस्कारादिकं विज्ञाप्य विरमामः।

---

# सर्वप्रत्ययमाला

[ शङ्करार्यविरचिता। ]
( पूर्वानुवृत्ता )

भूयते जायते भावे पुत्रैरुत्पद्यते यकि।
सूयते सृज्यते पुत्रः पित्रा निर्मीयते यकि ॥६॥
उत्पनीपद्यते जञ्जन्यते बोभूयते त्विति।
यङ्लुक्येवं बोभवीति बोभोति च......॥७॥
यतते चेष्टते कार्ये भृशमुत्सहते शिशुः।
प्रवर्तते व्याप्रियते व्यापृणोति समीहते ॥८॥
यस्यत्यायस्यतीङ्गति णिचीङ्गयति सर्वदा।
ईहयत्यनिशं कार्ये पिता चेष्टयति स्वयम् ॥९॥

यासय यातयति णिच्युत्साहयतीति च ।
करोति कुरुते धर्मांस्तनोति तनुते तथा ॥१०॥
विधत्ते विदधात्येवमाचरत्यनुतिष्ठति ।
विधापयति कर्माणि पिता कारयति प्रभुम् ॥११॥
पुत्रं तानयति श्रीमान् समनुष्ठापयत्यथ ।
तन्यते तायते धर्मः क्रियते च विधीयते ॥१२॥
आचर्यते चर्यते च समनुष्ठीयते नरैः ।
धर्मं सनि तनोत्येप चिकीर्षति चिकीर्षते ॥१३॥
अनुतिष्ठासति प्राज्ञो विधित्सति विधित्सते ।
एधते वर्धते नित्यम् ऋध्नोति श्वयति द्रुतम् ॥१४
आप्यायते प्यायते च माता पुष्णाति तं शिशुम् ।
पितोपनयते बालं स कर्मण्युपनीयते ॥१५॥
अनुशास्ति पिता पुत्रं बाल्यात्प्रभृति शिक्षते ।
पिताऽनुशासयत्येनं णिचि शिक्षयति द्रुतम् ॥१६॥
पित्रा कर्मणि बालोऽसौ शिक्ष्यते चानुशास्यते ।
अधीते चाऽऽमनत्येवं वेदं पठति सर्वदा ॥१७॥
पाठयत्यध्यापयति वेदमाम्नापयत्यपि ।
आम्नायते पठ्यते च वेदः कर्मण्यधीयते ॥१८॥
वितर्कयति संशेते वेदार्थे विचिकित्सते ।
शिष्यः पर्यनुयुङ्क्ते चानुयुङ्क्ते परिपृच्छति ॥१९॥
पर्यवस्थीयते शिष्यैः पृच्छ्यते चानुयुज्यते ।
ध्यायति ध्यायते चिन्तयति तर्कयति स्वयम् ॥२०॥
विमृशत्यालोचयति निरूपयति सन्ततम् ।
ध्यायते चिन्तयते शिष्यैस्तर्क्यते च निरूप्यते ॥२१॥
कर्मण्यालोच्यते चार्थः स्वबुद्ध्यैव विमृश्यते ।
वक्ति व्यवहरत्यर्थमुदीरयति शंसति ॥२२॥

भणत्यभिदधात्येवं गदत्याख्याति देशिकः ।
आचष्टे भाषते ब्रूतेऽभिधत्ते कथयत्यपि ॥२३॥
प्रचष्टे कीर्तयति च णिचि भाषयति स्फुटम् ।
व्याहारयति भणयत्यपि वाचयति द्रुतम् ॥२४॥
गदयत्यालापयति भण्यते भाष्यते स्फुटम् ।
उदीर्यते व्याह्रियते प्रोच्यते चाभिधीयते ॥२४॥
वर्ण्यते कथ्यते यक् सन् विवक्षत्यभिधित्सते ।
विवक्षति व्याचिख्यासत्येवं विवदिषत्यपि ॥२६॥
व्याचष्टे योजयत्यर्थमुपन्यस्यति युज्यते ।
उपपद्यते निशमयति शृणोत्याकर्णयत्यपि ॥२७॥
कर्मण्याकर्ण्यते शास्त्रं श्रूयते च निशम्यते ।
श्रावयत्यपरं शास्त्रमाकर्णयति पूर्ववत् ॥२८॥
वेत्ति चेतति जानाति कलयत्यवगच्छति ।
प्रत्येत्यवैति संख्याति श्रुतमर्थमवस्यति ॥२९॥
मनुते मन्यते विन्ते जानीते प्रतिपद्यते ।
परिच्छिनत्ति संविन्ते बुध्यते गुरुभाषितम् ।
ज्ञापयत्यखिलं बोधयति प्रत्याययत्यमुम् ।
प्रतिपादयति प्राज्ञः स्वशिष्यं चेतयत्यपि ॥३१॥
ज्ञायते वेद्यते तेन कर्मण्यत्रावसीयते ।
बुभुत्सते विविदिषत्यसौ जिज्ञासते सनि ॥३२॥
चिचेतिषति शास्त्रार्थं श्रोताऽत्र प्रतिपित्सते ।
अवधारयति यथावन्निश्चिनुते निश्चिनोति निर्णयति ॥
निर्धारयति च धीमान् विचारको युक्तिभिर्विचारयति ॥३५॥
निर्णीयते च वेदार्थो विचार्यैवावधार्यते ।
विचार्यते प्रयत्नेन तथा निर्णीयते यकि ॥३५॥

गर्वत्यहङ्करोत्युच्चैः स दृप्यत्यभिमन्यते ।
विद्यया नृपतिः श्रीमान्माद्यत्येवावलिम्पते ॥३६॥
शास्ति पालयते श्रीमान् भुवं पालयति प्रभुः ।
रक्षत्यवति च श्रीमान् गोपायति भुनक्ति च ॥३७॥
राज्ञाऽनुशास्यते दुष्टः शिष्टः कर्मणि पाल्यते ।
रक्षयत्यपरैर्भूमिमवयतयखिलां णिचि ॥३८॥
सेवते जुषते भृत्यो भजति श्रयति प्रभुम् ।
तथाऽवलम्बते धीमाननुजीव्युपजीवति ॥३९॥
अनुजीवति राजानमाश्रयत्यवलम्बते ।
सेव्यते जुष्यते राजा कर्मण्यत्रावलम्ब्यते ॥४०॥
आश्रीयते श्रीयते च स्वभृत्यैरुपजीव्यते ।
पूजयत्यर्चयत्यर्चत्यश्चत्याराधयत्यसौ ॥४१॥
वरिवस्यत्यर्चयते महत्यर्हति तं नृपम् ।
आराध्यतेऽर्च्यते राजा पूज्यते च महीयते ॥४२॥
नमस्करोति नमति प्रणमत्यथ वन्दते ।
नमस्यत्यवरो भृत्यो नृपं प्रणिपतत्यथ ॥४३॥
तं नमस्कारयति णिचि प्रणिपातयति प्रभुम् ।
प्रणमयति पुत्रांश्च वन्दयत्यनिशं पिता ॥४४॥
स नमस्क्रियते भूपो वन्द्यते च प्रणम्यते ।
अभिष्टौति नृपं स्तोत्रैः स्तौति नौति प्रशंसति ॥४५॥
प्रणौति सततं वन्दी पणायति पनायति ।
स्तावयत्यपरैर्भूपं प्रशंसयति णिच्यसौ ॥४६॥
कर्मणि स्तूयते राजा नूयते च प्रशस्यते ।
वष्टि वाञ्छति गृध्नोति लुभ्यतीच्छति गृध्यति ॥४७॥
अभिलष्यत्यभिलषत्यसावुत्सुकयत्यलम् ।
आशंसते तथाशास्ते श्रद्धत्ते स्पृहयत्यथ ॥४८॥

आतिष्ठते कामयते वरः कन्यामपेक्षते ।
वाञ्छयतीच्छयति णिज्यभिलाषयति द्रुतम् ॥४९॥
आशासयति चाऽऽशंसयति चापेक्षयत्यथ ।
वरेणाऽपेक्ष्यते कन्या काङ्क्ष्यते काम्यते प्रिया ॥५०॥
आस्थीयते कुले जाताऽन्विष्यते चाभिलष्यते ।
ददाति ददते दत्ते तथाऽर्पयति यच्छति ॥५१॥
दिशति प्रदिशत्येव तां कन्यां वितरत्यथ ।
दीयते चार्प्यते तस्मै दिश्यते च प्रदिश्यते ॥५२॥
दापयत्यर्पयत्यस्मै प्रदेशयति तां णिचि ।
आदत्ते लाति गृह्णाति गृह्णीते स्वीकरोति च ॥५३॥
अङ्गीकरोत्यवाप्नोति लभते विन्दते नृपं
उररीकुरुते चाङ्गीकरोत्यूरीकरोति च ॥५४॥
ग्राहयत्यापादयति पुरीं लम्भयति क्रमात् ।
अवापयति यत्नेन स्वीकारयति वै णिचि ॥५५॥
आदीयते स्वीक्रियते गृह्यते चाप्यवाप्यते ।
लभ्यते चाज्यते कन्या तथोपादीयते द्रुतम् ॥५६॥
मुष्णाति चोरयत्यर्थं चोरो हरति लुण्टति ।
म्रोचति म्लोचति म्लोचयथापहरति द्रुतम् ॥५७॥
मोषयत्यपरैरर्थमपहारयति क्षणात् ।
चोर्यते मोष्यते चोरैर्यकि णिच्यपहार्यते ॥५८॥
अलङ्करोति तां कन्यां भूषयत्यथ भूषणैः ।
मङ्क्ते मण्डयत्येनामलङ्कारयति स्वकैः ॥५९॥
मण्डयते भूष्यते स्त्रीभिः कन्याऽलङ्क्रियते भृशम् ।
वस्त्रमाच्छादयत्येषा परिधत्ते सुनिर्मलम् ॥६०॥
परिधापयति णिच्यन्यैः कर्मार्थे परिधीयते ।
अनुलिम्पति सर्वाङ्गं तथोच्छुरति चन्दनैः ॥६१॥

अनुलेपयति क्षिप्रं रूष्यते चानुलिम्प्यते ।
चकास्ति कासते भाति कनति त्वेषति श्रिया ॥६२॥
दीव्यति भ्राजते कन्या लसत्याभाति भानुवत् ।
भ्राजते द्योतते तद्वद् दीव्यते राजते भृशम् ॥६३॥
प्रकाशते शोभते च प्रवते वाति मारुतः ।
अग्निं सन्धुक्षते वह्निर्दीप्यते ज्वलयत्यमुम् ॥६४
समिन्धे दीपयत्येनं ज्वलयत्येधयत्यपि
दीप्यते ज्वाल्यते वह्निरिन्धनेन समिध्यते ॥ ६५ ॥
जुहोत्याघारयत्याज्यमभिघारयति द्रुतम् ।
वषट्करोति यजते यजत्यग्नौ जुहोति च ॥ ६६ ॥
वषट्कारयते हावयति याजयति द्विजम् ।
हूयते चेज्यते तेन लाजश्चरुरथापि च ॥ ६७ ॥
भस्मीकरोति दहति प्लुष्यत्योषति पावकः ।
स भस्मसात्करोत्येवं दहते(?)च हुतं हविः ॥ ६८ ॥
भस्मीकारयते दाहयति प्लोषयति क्षणात् ।
स भस्मीक्रियते तेन दह्यते प्लोष्यते चरुः ॥ ६९ ॥
पचते पचति स्थाल्यां चरुं श्रपयति द्रुतम् ।
सलिलं कथ्यते तत्र चरुर्विक्लिद्यते ततः ॥ ७० ॥
णिचि पाचयते स्थाल्यां पच्यते तेन वै चरुः ।
भुङ्क्तेऽश्नात्याहरति च जनोऽभ्यवहरत्यथ ॥ ७१ ॥
गिलति ग्रसते ग्रासं तथा कवलयत्यथ ।
भोजयत्याशयत्यन्यानाहारयति सादरम् ॥ ७२ ॥
अश्यते भुज्यते कर्मण्यभ्यवह्रियते तथा ।
भक्षयत्यत्ति चरति स तु जक्षिति खादति ॥ ७३ ॥
उपयुङ्क्ते चरत्येवं भक्षयत्यशनायति ।
खादयत्यादयति णिज्ञ भक्ष्यं जक्षयति द्रुतम् ॥ ७४ ॥

आस्वादयति रसयत्यपि लेढि जनः पुनः ।
आस्वाद्यते लिह्यते च लेहयत्यत्र वै णिचि ॥ ७५ ॥
धयत्याचामति जलं तृषितः पिबति क्षणात् ।
पाययत्याचामयति शिशून् पाययते तथा ॥ ७६ ॥
... ... ... ... ... ।
पूर्यते पार्यते कुक्षिरन्यैराप्यायते जनैः ॥ ७७ ॥
रूपं लक्षयति व्यक्तमालोकयति लोकते ।
साक्षात्करोति कान्तं सा निशामयति पश्यति ॥ ७८ ॥
ईक्षते प्रेक्षते भूयो मिपत्यालोकते परम् ।
ईक्षयत्यालोकयति पिता दर्शयति स्वयम् ॥ ७९ ॥
ईक्ष्यते लक्ष्यते कान्ता दृश्यते चावलोक्यते ।
आलोच्यते तथा सोऽपि तेन सा च निशाम्यते ॥ ८० ॥
श्लिष्यत्यालिङ्गति परिष्वजते चोपगूहति ।
परिष्वजति सस्नेहमुपगूहयति प्रियाम् ॥ ८१ ॥
आश्लेषयत्यालिङ्गयति परिरम्भयति णिचि ।
... ... ... ... ... ... ... ... ॥ ८२ ॥
उपगूहयति स्नेहात् संपरिष्वज्यते च सा ।
रमते क्रीडति लज्जापयति ह्रेपयत्यथ ॥ ८३ ॥
यभते च कलत्येनां विहरत्यनुदीव्यति ।
कूर्दते रमयत्येनां विहारयति सादरम् ॥ ८४ ॥
क्रीडयत्यानन्दयति नन्दति कान्तस्तु मोदते ।
सुखायते च तृप्नोति तृप्यति प्रीणाति हृप्यति च ॥ ८५ ॥
मोदयत्यानन्दयति प्रियां रमयति प्रियः ।
देवयति प्रीणयति स विहारयति प्रभुः ॥ ८६ ॥
प्रहर्षयति सन्तोषयति चाह्लादयत्यमुम् ।
शेते स्वपिति निद्राति णिचि निद्रापयत्यथ ॥ ८७ ॥

शाययति स्वापयति जागर्ति च विबुध्यते ।
णिचि जागरयत्येनां विबोधयति नायिकाम् ॥ ८८ ॥
उन्मीलति नृणां चक्षुरुन्मिषत्यरुणोदये ।
फुल्लति स्फुटति प्रातः पद्मं विकसति स्वयम् ॥ ८९ ॥
विसर्जयति विसृजत्यथ मुञ्चति मुञ्चते ।
व्यादिशत्यनुजानीते नियुङ्क्ते प्रहिणोति च ॥ ९० ॥
प्रेष्यमाज्ञापयत्येवं प्रयुङ्क्ते प्रेषयत्यपि ।
नुदति प्रेरयत्यश्वान् सारथिश्चोदयत्यथ ॥ ९१ ॥
निरस्यत्यस्यति क्षिप्यत्यसौ क्षिपति वैरिणम् ।
निराकरोति सततं निह्नुते चाप्यपह्नुते ॥ ९२ ॥
जहाति रहयत्याशु त्यजत्युज्झत्यपोहति ।
पतितं वर्जयत्येव दूरे परिहरत्यसौ ॥ ९३ ॥
वने विचिनुते राजा विचिनोति भटैः सह ।
गवेषयति मृगयत्यन्वेषयति वै मृगान् ॥ ९४ ॥
वने विचीयते राजा कर्मण्यन्विष्यते मृगः ।
विचिचीषति सन्यत्र णिजन्तेऽपि च पूर्ववत् ॥ ९५ ॥
गन्तुमारभते चोपक्रमते त्वरते नृपः ।
सन्नह्यते वर्मयति चोद्यते च तथा चमूः ॥ ९६ ॥
आरम्भयति णिच्यन्यानुपक्रामयति द्रुतम् ।
उद्योजयति सेनानीस्त्वरयत्यात्मसैनिकान् ॥ ९७ ॥
बध्नाति कलयत्यश्वान् दृढं नह्यति नह्यते ।
सिनोति पाशयत्याशु स्वरथं योजयत्यपि ॥ ९८ ॥
आतिष्ठति रथं शीघ्रम् आरोहत्यधिरोहति ।
आरुरुक्षति सन्येवं कर्मण्यारुह्यते रथः ॥ ९९ ॥
प्रतिष्ठते प्रक्रमते निर्यात्येष प्रयाति च ।
प्रस्थापयति निर्यापयति निर्गमयत्यमून् ॥ १०० ॥

शङ्खं धमति निर्याणे वेणुं पूरयते जनः ।
वाद्यं वादयते चोर्ध्वं स्त्वरते संभ्रमत्यथ ॥ १०१ ॥
व्रजति वर्जति चञ्चति सर्पत्यटति चरति याति ।
स्कन्दति रंहति राहति गच्छति धावत्यथो द्रवति ॥ १०२
ऋच्छति क्रमते क्रामत्यसौ रिचति रिञ्चति ।
स संपतति वेगेन प्राप्नोतीष्यति सीदति ॥ १०३ ॥
टीकते ढौकते ग्रामं मंहते ध्वंसते जनः ।
पलायते च क्रमते जिहीते च प्रपद्यते ॥ १०४ ॥
गमयत्यटयत्यन्यान् क्रमयत्यंहयत्यसौ ।
द्रावयत्यासादयति गङ्गां प्रापयति प्रभुः ॥ १०५ ॥
ईयते गम्यते सर्वैः प्राप्यते व्रज्यते तथा ।
धाव्यते ध्वंस्यते तद्वदाप्यते यायते यकि ॥ १०६ ॥
गङ्गां जिगमिषत्येष प्रेप्सत्याजिहषत्यथ ।
यियासतीप्सति नृपस्तां विवञ्चिषतीति सन् ॥ १०७ ॥
गलति स्रवति स्नाति स्यन्दते प्रवहत्यपि ।
च्योतति श्च्योतति नदी क्षरति क्षीरवद्गिरेः ॥ १०८ ॥
गाहते नृपतिः स्नाति गङ्गायामवगाहते ।
उपस्पृशत्याचमति स्नाति चाऽऽप्लवते ततः ॥ १०९ ॥
मज्जत्यप्सु तथाऽजस्रमुन्मज्जति निमज्जति ।
स्नापयत्याप्लावयति मज्जयत्यपराञ्जनान् ॥ ११० ।
सिस्नासति जनोऽन्यत्र मन्त्रैः स्नापयते णिचि ।
उक्षति क्षालयत्यद्भिः प्रक्षालयति सिञ्चति ॥ १११ ॥
धावति क्लेदयत्यङ्गम् अभिषेचयति प्रभुम् ।
उक्ष्यते क्षाल्यते देहः सिच्यते धाव्यते परैः ॥ ११२ ॥
पुनाति च पुनीते च सदा शुध्यति वै जनः ।
पावयत्यद्य तां गङ्गा शोधयत्यखिलं जनम् ॥ ११३ ॥

मार्ष्टि मार्जयति क्ष्णौति शस्त्रं तेजयति श्यति ।
मृज्यते क्ष्णूयते शस्त्रं निश्यते तेज्यते यकि ॥ ११४ ॥
नौभिस्तरति तत्सेना गङ्गां लङ्घयति द्रुतम् ।
अतिक्रामति चात्येति स्वान् देशानतिवर्तते ॥ ११५ ॥
तारयत्यपरो गङ्गां लङ्घयत्याशु पूर्ववत् ।
लंघ्यते तीर्यते गङ्गा तितीर्षति च सन्यथ ॥ ११६ ॥
घोषयत्युद्घोषयति क्रोशत्यायते परान् ।
स्पर्धते रभते युद्धे पदा घट्टयति क्षितौ ॥ ११७ ॥
आह्वापयति णिच्यन्यैः कर्मण्याहूयते यकि ।
नदति क्ष्वेलयत्येवं युद्धे नर्दति गर्जति ॥ ११८ ॥
शब्दायते स्वनत्यन्यः क्वणति ध्वनति स्फुटम् ।
रणति स्तनति स्तौति रौति कूजति कूजते (?) ॥ ११९ ॥
कचते वाश्यते शिंक्ते विध्वनत्यथ घुष्यति ।
बृंहते वारणो वाजी हेषते ह्रेषते तथा ॥ १२० ॥
कत्थते श्लाघते युद्धे जनो जल्पति भूपतेः ।
... ... ... ... ॥ १२१ ॥
रटयति रावयति स्वान् गर्जयति स्तनयति प्रकूजयति ।
नादयति स्वारयति स्वनयति सेनापतिः प्रघोषयति ॥ १२२ ॥
कुत्सयत्यवजानीते कदर्थयति निन्दति ।
तृणीकरोति सेनानीः शत्रुं विगणयत्यरिम् ॥ १२३ ॥
युद्धेऽवमन्यते शत्रुं धिक्करोति जुगुप्सते ।
तथोपालभते चाभियुङ्क्तेऽसौ जनसंसदि ॥ १२४ ॥
निन्द्यते कुत्स्यते शत्रुर्भर्त्स्यते चावमन्यते ।
कदर्थ्यते धिक्क्रियते युद्धभूमौ जुगुप्स्यते ॥ १२५ ॥
तर्जयत्याक्षिपत्येवम् अधिक्षिपति तर्जति ।
अधिक्षेपयति स्पष्टम् आक्षेपयति चापरः ॥ १२६ ॥

कुप्यति क्रुध्यति द्वेष्टि रुष्यतीर्ष्यति शत्रवे ।
वैसयतेऽधिक्षिपति मन्त्रयत्यवसूयते ॥ १२७ ॥
कोपयति क्रोधयति प्रद्वेपयति भूपतिम् ।
कुध्यति क्रुध्यते चैव रुष्यते चापरो जनः ॥ १२८ ॥
जनो विवदते भूयो विरुणद्धि विगायति ।
विमन्यते विमनुते जनो विप्रतिपद्यते ॥ १२९ ॥
स पराक्रमते राजा शत्रुभिः कलहायते ।
विगृह्णाति विगृह्णीते संग्रामयति युध्यते ॥ १३० ॥
युयुत्सते स्वयं राजा सिसंग्रामयिषत्यपि ।
विजिघृक्षति संग्रामे शत्रुभिर्विजिघृक्ष्यते ॥ १३१ ॥
विग्राहयति सैन्यांश्च युद्धे योधयति प्रभुः ।
पराक्रमयति स्वस्थो विरोधयति बुद्धिमान् ॥ १३२ ।
विस्फारयति चापं स्वम् आस्फालयति पाणिना ।
संधत्ते सायकं चापे विकर्षति च विध्यति ॥ १३३ ।
विस्फार्यते धनुश्चापे शरः संधीयते यकि ।
विकृष्यते च कलवच्छत्रुमध्ये च विध्यते ॥ १३४ ॥
अन्तर्धत्ते तिरोधत्ते तिरोभवति लीयते ।
णिच्यन्तर्धापयत्यत्र तिरोधापयति स्वकान् ॥ १३५ ॥
तिरस्करोति बाणौघैरूर्णोत्यपिदधाति च ।
गूहति स्थगयत्येवं पिदधाति परान् युधि ॥ १३६ ॥
रुन्धयत्यावृणोत्येव प्रगोपयति सर्वदा ।
रुणद्ध्यपिदधात्येव प्रच्छादयति सर्वतः ॥ १३७ ॥
पिधायति च मार्त्तण्डं तिरस्कारयति ध्रुवम् ।
गूह्यते गोप्यते भूमिः सा तिरस्क्रियते तथा ॥ १३८ ॥
ऊर्णायते च्छाद्यते च रजसाव्रियते यकि ।
बिभेति त्रसति त्रस्यत्यतिभीरुर्विषीदति ॥ १३९ ॥

# सभापतेरभिभाषणम्*

ओं नमो भगवत्यै भारत्यै

मुग्धव्रजवधूस्वान्तदुरन्तमुरलीध्वनिः ।
यस्य नाद्यापि विश्रान्तस्तस्मै सर्वात्मने नमः ॥
यत्रोत्सृष्ट-पुराणजर्ज्जरतनुर्न्यायोऽभजन्नव्यतां
यत्र श्रीजयदेवकान्तकविता कृष्णं सतृष्णं व्यधात् ।
भक्तानां तपसा च यत्र समभूत् कृष्णः स गौरद्युति-
स्तस्या वङ्गभुवः सदा विजयतां सारस्वतं सन्महः ॥

मान्याः सुधियः सुहृदश्छात्राश्च,

अद्य खलु भगवतः परमेशितुः प्रसादात् सप्तदशवर्षसमापनप्रोज्ज्वल-यौवनश्रियाः संस्कृतसाहित्यपरिषदो वर्षग्रन्थिबन्धनमहोत्सवे साभापत्यं कर्त्तुमामन्त्रितोऽहं भवद्भिः, स्वशक्तौ संशयानो भीत इव ह्रीण इव भवत्-प्रसादभूतमिदमासनं परिगृह्णामि। न जाने सत्सु मत्तोऽभ्यधिकगुणेषु गुणिवर्येषु कथमहमकिञ्चनगुणोऽस्मिन् पदे न्ययोजिषि, तथाप्या बाल्यात् सुरभारतीपरिचरस्य मे न युज्यते वार्द्धकेऽपि तत्परिचर्याप्रत्याख्यान-मिति सुरगुरुप्रभाववतां भवतां नियोगं शिरसि कृत्वा साञ्जलिबन्धमिहो-पतिष्ठे। अभ्यर्थये चात्रभवतो ज्ञानवयोवृद्धान् यथार्हं प्रणामादिभिरभि-सम्पूज्य—महाजनोचितक्षमाशीलत्वाद् वा सेवकजनपक्षपाताद् वा क्षन्तव्यो मे मन्तुर्मन्तव्यश्च भवादृशां विधेय एव सर्वथाऽयं जन इति।

विजयतां विजयतां चतुर्मुखमुखारविन्दसम्भूताया भगवत्याः सुरसरस्वत्या महिमा यदस्मिन् सर्वथा प्रहीयमाणार्षज्ञानविज्ञानज्योतिषि करालकलियुगे

---

* संस्कृतसाहित्यपरिषदः सप्तदशवर्षीयवार्षिकसभायां सभापतिना श्रीमता महामहो-पाध्यायकविराजश्रीगणनाथसेन-विद्यासागर-सरस्वती-महोदयेन पठितम्।

म्लेच्छप्रभावप्रतिच्छन्नज्ञानप्रजनायां कलिकातानगर्यामपि क्रमशः समेधमानैव दृश्यते सुधीजनमनःसञ्जीवनी संस्कृतसाहित्यपरिषदाख्याऽमृतवल्लरी। सेयं निःशङ्करङ्करकलङ्ककीर्तिभिः कैश्चन विदुषां वरैरुप्तबीजा तेषां तपोवारिसेचनाङ्कुरिता शनैर्लब्धराजानुग्रहपर्जन्यवर्षणा साम्प्रतं पुष्पफलोद्गमरम्यच्छविः कस्य न सचेतसश्चित्तमावर्जयति ?

स्मरामश्चाद्य शोकसन्तप्तहृदयेन स्वगतानां सुहृदां परिषदोऽस्याः प्राणप्रतिष्ठापकानाम्। तेषु च स्मरणीयतमाः प्रज्ञालोकितहरिदन्ता ऋक्प्रातिशाख्यादिग्रन्थसम्पादकाः पशुपतिशास्त्रिणः संस्कृतनाट्यकलैकगुरवो गीष्पतिकाव्यतीर्थाश्च। तैर्हि सुचिरनिरन्तरं श्राम्यद्भिरमृतसेचनेन संरक्षिताऽभूदियं परिषदिति को न तेषामधमर्णतामुरीकुर्यात्।

परञ्चेदं नः प्रमोदस्थानं यदेषा सहृदयपरिषद् देश-जाति-धर्म-निर्विशेषं दिशि दिशि सुरभारतीप्रसूनगन्धान् विकिरन्ती प्राच्यप्रतीच्यभाषाविदां सर्वेषामपि हृदयानन्दं विदधाति। युज्यते चेदानीं साम्प्रदायिकतावर्जमेव सर्वत्र प्राचीनसाहित्यदर्शनविज्ञानादीनां ज्योतिश्छटाविच्छुरणं येन विलुप्तप्रायाणां प्राचीनग्रन्थानामधीतिबोधाचरणप्रचारणैः सफलता च पुष्कलता च सुलभता च सम्पद्येरन्। अन्यथेदानीं साम्प्रदायिकतावलम्बनेन क्रमशः प्राचीनविद्यानां विलोपे विदेशीयप्रभावाधिक्यादभिभवो न शक्ष्यते वारयितुम्।

आसीत् किल पुराऽस्मिन् भारते वर्षे प्रायेण विश्वजनीनः प्रचारो गीर्वाणवाण्याः। श्रूयते हि भोजनरपतेः समयेऽसत्कविताश्रवणोद्वेजितः कश्चन कविः "कस्यचिदकवेरसंस्कृतज्ञस्य गृहेषु स्थास्यामी"ति प्रार्थयाञ्चक्रे नृपतिम्, स्थापितश्च तेन कस्यापि तन्तुवायस्य सद्मनि। ततस्तन्तुवायोऽसौ क्रुद्धो नाहमसंस्कृतज्ञो न चाकविरिति प्रतिपादयितुं राजान्तिकमागत्य न्यवेदयत्—

"काव्यं करोमि न तु चारुतरं करोमि
यत्नात् करोमि न तु शीघ्रतरं करोमि।

भो साहसाङ्क नृप नास्मि तथापि मूर्खो
नित्यं सुखेन कवयामि वयामि यामि ॥" 　　इति ।

यत्तु केचिदाधुनिका आंग्ल-यावनादिभाषासाहित्यस्य पञ्चषाणि चुलुकानि निपीय प्रलपन्ति---"मृतेयं संस्कृतभाषा, किमस्याः पुनरुज्जीवन-प्रयासेनेति", तत्तेषां बुद्धिभ्रंशमूलमेव प्रतीमः। न हि मृतेयं संस्कृतभाषा, मृतास्तु वयमेव ये नास्याः प्रभावोर्जितं महिमानमाकलयामः। 'भाषा'-पदं हि पुरा संस्कृतभाषामेवाभ्यधत्त मुख्यतया, यथा "भाषायां सदवसश्रुवः" "सख्यशिश्वीति भाषायाम्" "प्रत्यये भाषायां नित्यम्"—इत्यादिसूत्रवार्त्तिकादिषु स्पष्टम्। किञ्च, यावत् खल्विह साङ्गवेदोपनिषदः, श्रीमद्रामायण-महाभारते, श्रीमद्भागवतादिमहापुराणानि, कालिदास-माघ-भारवि-श्रीहर्षादिकृतानि महाकाव्यानि, पाणिन्यादिकृतपरःशतवैयाकरणग्रन्थाः, आयुर्वेदसंहितासंग्रहादयः, धर्मशास्त्राणि, ज्यौतिषनिबन्धाः, षड्दर्शन-सूत्रभाष्यविवृत्यादयः, अपरे च परःसहस्राः प्राचीननवीनसंस्कृतग्रन्था न म्रियेरन्, तावत् कथमसौ म्रियेत संस्कृतभाषा—इत्यपि विचार्यं धीराणाम्। न चैतदखिलमनालोच्य समाप्यते वेदितव्यं विदुषाम्। किञ्च, आंग्लजर्मण फ्रेञ्चरूशियादिदेशीया सुधियोऽनारतश्रमं विचारयन्तो यावन्ति वेदादिपर्य्यालोचनोज्ज्वलानि ग्रन्थरत्नानि प्रकाशयाञ्चक्रुः न तावन्ति भारतीयपण्डिता इदानीन्तना इति नूनं लज्जाकरमस्माकम्। अन्यच्च, विपश्चित्सदसि गीर्वाणगिरैव परस्परालापो विदुषामद्यापि सुप्रसिद्धः, औत्तरापथिकानां विदुषां तु दाक्षिणात्य-पण्डितैः परिचायिनी संस्कृतभाषैवाऽद्यापि, यामृते परस्परालाप एव तेषामवरुध्येत। दृश्यन्ते च साम्प्रतमपि शतशः कोविदाः ये मातृभाषयेव संस्कृतभाषया सुखमनर्गलमनशुद्धं चालपन्ति। सन्ति च बहव एव माणवका ऋषिकुल-गुरुकुलकाश्यादिवासिनः ये अनाकलितव्याकरणा अपि अभ्यासवशादिव सुखं सम्भाषन्ते संस्कृतगिरा। दृष्टश्चास्माभिः कश्चन पण्डितवरो यस्य शिशुपुत्रा अपि पितृभ्यां सह संस्कृतभाषया संलपन्ति। वस्तुतस्तु शिक्षाशैलीदोषादेव न सम्पद्यत आधुनिकांग्लभाषाप्रधानविद्यालयेषु गीर्वाणगिरः सम्यक् शिक्षणं,

नहि तत्रापराध्यति सर्वभाषाजननीयं संस्कृतभाषेति दृढा नः प्रतीतिः। यदि हि प्रथमत एव बृहद्व्याकरणदन्तिदन्तावातैर्न ताड्येरन् बालाः, आंग्लभाषावदालापमुखेन च ते परिचाय्येरन् भाषाप्रयोगनियमैः, तर्हि सुगमैव प्रतीयेत संस्कृतभाषेति तमेव मार्गमवलम्बन्तां शिक्षकाः—इति सप्रश्रयं प्रार्थये।

एष च नः शिरसाऽञ्जलिर्विश्वविद्यालयदेहलीरक्षकेभ्यः —मा तावदास्तां पठितुमपठितुमन्यथा वा पठितुं शक्येयमस्मत्पूर्वजोपासिता संस्कृत-भारती यामनभिज्ञाय प्रवृत्तानां लघु-गुरु-स्त्री-पुंसज्ञानविपर्यासनेन हास्यास्पदं दृश्यते रचनानैपुण्यमिदानीन्तनभाषारसिकानाम्। इदञ्चैदञ्च नः प्रत्यक्षं यदारव्य-पारस्यभाषाज्ञानविरहेण भृशं विलज्जन्ते महस्मदीयाः, न परं स्तोकेनापि गीर्वाणवाणीज्ञानविरहेण विश्वविद्यालयचूडाधिरोहिणोऽप्यार्यकुल-प्रदीपा 'हिन्दु'नामधारिणः। च विचार्यते तैरुपनयनविवाहश्राद्धादिकर्मसु (सन्ध्यावन्दनादिष्विति तु नोच्यते, नित्यत्वेऽपि तेषामधुना तत्परित्याग-शीलत्वात्) उच्चारितानां मन्त्राणामर्थग्रहोऽपि न शक्यः संस्कृतभाषानभिज्ञैरिति नायमिच्छाधीनो (optional) विषयो भवितुमर्हतीति। एते हि अज्ञात्वैव पूर्वजभाषामनाकर्ण्यैव शास्त्रसरणिमनाघ्रायैव धर्मकुसुमसौरभं जवेन कृत्स्ननियमनिगडभङ्गं विधाय कचाकर्षणेनेव समुद्दिधीर्षन्ति भारतमातर-मिति हन्त नो दशाविपर्यासः।

यच्च केचिदाहुः स्वयं विद्वांसोऽपि—संस्कृतभाषाज्ञानान्नार्थकरी विद्या शक्यते साधयितुमिति वृत्त्युपार्ज्जनार्थमांग्लभाषैव विशेषतः शिक्षणीयेति, यथा च तादृशबुद्धिप्रणोदिताः शास्त्राचार्याणामपि सूनवः शनश आंग्ल-भाषामेव शिक्षन्ते, लभन्ते च महता श्रमेण लेखकपदं वा, देवदुर्लभं वकीलपदं वा, कुलिशकठिनं पुलिशपदं वा सत्यानृतविपर्ययनैपुण्यमूलं, तदपि परं नः खेदास्पदम्। आंग्लभाषाऽपि शिक्षणीयेति नात्र नो विप्रतिपत्तिः, परं नै-तदर्हति प्रशस्तं संस्कृतभाषाज्ञानं परिहाय। न च सम्यक्शिक्षितसंस्कृतभाषा-माश्रित्य न शक्यतेऽर्थकरीं विद्यामधिगन्तुम्। जागर्त्ति खल्वद्यापि

आयुर्वेदो नाम निखिलरुजार्त्तजनपरित्राणपुण्यव्रतं शास्त्रं यत् सम्यगाधुनिकपद्धत्या शिक्षितं सर्वत्राऽकुण्ठधारप्रवृत्तं प्रचुरमर्थं धर्मं यशश्च साधयति।

इदञ्चातीव ग्लपयति ह्रेपयति च नश्चेतो यदेषा वङ्गभूमिर्जयदेव-गोवर्द्धन-धोयी शरणोमापतिधरादिमहाकवीनाम्, *वोपदेव-पद्मनाभ-भरत-मल्लिकादिवैयाकरणमुख्यानाम्, वासुदेव-गदाधर-रघुनाथ-मथुरानाथादि-नैयायिककेसरिणाम्, वल्लाल-हलायुध-रघुनन्दन-जीमूतवाहनादिस्मार्त्तचूडा-मणीनाम्, श्रीमदद्वैत-रूप-सनातन-जीव-मुकुन्द-मुरारि-रघुनन्दनादिभक्तोत्तम-गोस्वामिपादानाम्, माधव-चक्रपाणि-हरिचन्द्र-विजय-श्रीकण्ठ-गङ्गाधरादि-भिषग्वरेण्यानाम्, किं बहुना स्वयम्भगवतः कलिहतजीवोद्धारायाऽवतारिणः श्रीकृष्णचैतन्यस्वामिनोऽपि जनिभूः पुरा गीर्वाणवाणीझङ्कारमुखरिताऽखिलदिगन्ता सम्प्रति हीयमानार्षज्ञानविज्ञानज्योतिषा शोच्यां दशां भजते। न च किमत्र प्रतिविधेयमिति स्वप्नेऽपि चिन्तयन्ति स्वदेशहितैषिणो बहवो विदेशीयशिक्षाविषजर्ज्जरचेतसो मनीषिणः।

इत्थं गते सुरभारतीप्रचारैकव्रतेयं संस्कृतसाहित्यपरिषद् बहुभिरवदानै-रुज्ज्वलयन्ती हरिदन्तराणि कस्य न परमार्थतो भारतहितैषिणः परमादरास्पदं भवितुमर्हति। अस्या हि षोडशवर्षदेशीयायाः सार्धसहस्राधिकाः सदस्याः, सार्धाष्टादशशतरूप्यकाणि वार्षिकलभ्यं साहाय्यमिति चिन्तयतः कस्य न हृदि प्रोद्भिद्यन्ते आशाङ्कुराणि! स्थापितोऽद्यानया प्रचुरमुद्रिताऽमुद्रित-ग्रन्थसम्भारशोभितः सुमहान् ग्रन्थागारो यत्र सतृष्णमधीयाना नियत-मुद्धरन्ति ज्ञानरत्नानि सुधियः। प्रकाशिताश्च परिषत्पण्डितवरैरष्टादशा-धिकाः प्राचीन-नवीनग्रन्थाः ये बलादिवाऽऽकर्षन्ति बुधजनानां प्रशंसावचांसि। शोभते च विद्वज्जनमनोहरा परिषदो मासिकपत्रिकाऽपि यथाकालं प्रकाश्य-माना यस्यामुल्लसन्ति व्याकरणसाहित्यदर्शनेतिहासादिनानाविषयविचार-प्रौढिसमुज्ज्वला निबन्धा लेखकानां पाण्डित्यप्रकर्षपरिपाकफलभूताः।

---

* वोपदेवस्य वङ्गीयत्वं नास्माकं सम्मतम्। अत्र च विचारो वारान्तरे वर्तिष्यते। स॰ सा॰ प॰ स॰

सेयं प्रत्यग्रपुष्पफलवती चूतलतिकेव कस्य न सहृदयस्य हृदयमानन्दयति। जागर्ति चात्र प्राचीनपरम्परानुगा चतुष्पाठीपरिपाटी यस्याः सुशीतलच्छायासु विनैव शुल्कं सुखं शेरते ज्ञानामृतं पिबन्तः पाययन्तश्चाऽनेके विद्यार्थिनोऽध्यापकाश्च। प्रवर्त्तते चेह प्रतिवर्षं प्रत्युत्सवं भास-कालिदास-शूद्रक-भवभूतिप्रभृतिमहाकविकृतानां पञ्चदशाधिकसंस्कृतनाटकानामभिनयकलाकुशलता या नवोच्छलितयौवनोत्साहैः सभ्यैः सन्दर्शिता असंस्कृतज्ञानामपि हृदयमुन्मुखीकरोति संस्कृतभाषाज्ञानार्जनाय। प्रवहति चात्र प्रतिपक्षं प्रतिमासं वा विद्वत्सभासु नवनवनिबन्धबन्धकुशलानां वाग्वैदग्धी, यामाकलयतां तदालोचनावसरेषु प्रकटीभवन्ति वाग्मिनां सुरभारतीज्ञानप्रकर्षोज्ज्वला वाणीविलासाः। तदेतदखिलं सम्यग् व्यनक्ति वैशिष्ट्यमुत्साहं कर्मपटुताञ्च परिषदोऽस्याः कर्मसचिवानाम्। अभिनन्दामश्च पुण्यव्रतमिमं बुधलोकमनेन कविवचनेन—

"आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा
वात्याभिः परुषीकृता दश दिशश्चण्डातपो दुःसहः।
इत्थं धन्वनि चम्पकस्य सकले संहारहेतावपि
त्वं सिञ्चन्नमृतेन तोयद कुतोऽप्याविष्कृतो वेधसा॥"

प्रार्थयामहे च—प्रवर्षन्तु निखिलकल्याणगुणाकरस्य भगवतो नारायणस्य करुणाधारासाराः संस्कृतानुरागिणामन्येषाञ्च शिरःसु येन सर्वेऽपि भारतीयाः शुभया धिया संयुज्येरन्। इति शम्।

---

# संविदि ब्रह्मत्वानुभूतिः

( सर्वव्यवहारसिद्धेस्तदधीनत्वात् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदशर्महालदारः ]

छायाच्छाया यतो न स्याद् मायाऽविद्या कथं भवेत् ।
तत्त्वमेकमिदं सर्वं प्रत्यग्भूतमनीदृशम् ॥
भावसिद्धोऽप्ययं लोको व्यवहारक्षमोऽपि सन् ।
असद्रूपो यथा स्वप्न उत्तरक्षणबाधितः ॥
न जलं हि जलाभासो न जीवो जीवविग्रहः ।
आत्मनो जैवभावस्तु प्रत्यगात्मेति गीयते ॥
अस्तितालक्षणा सत्ता सत्ता ब्रह्मैव नापरा ।
नास्ति सत्तां विना किञ्चिद् नास्ति मायाऽपि वस्तुतः ।
नास्ति चित्तं न चाविद्या नाध्यासो न मनः क्वचित् ।
ब्रह्मैकं केवलं तत्त्वं व्योमवत् प्रविभाव्यते ॥
स्वशरीरे स्वयं ज्योतिः-स्वरूपं स्वप्रकाशकम् ।
दोषहीनाः प्रपश्यन्ति नेतरे माययावृताः ॥
योगिनां विदुषां वाऽपि माया स्वात्मनि कल्पिता ।
सद्रूपेव सदा भाति तत्त्वज्ञानेन बाधिता ॥
एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ।
तस्माद् माया न सद्रूपा यतो भेदः प्रतीयते ॥

---

# विद्याप्रस्थानम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—कालीघट्टवास्तव्यः श्रीगुरुपदशर्महालदारः ]

इदानीं प्रामाण्यवादो वक्तव्यः। प्रमाणं तावन्मीमांसकानां विभक्त विभागेन बहुविधमस्ति। तथा हि प्रत्यक्षमनुमानं शब्द उपमानमर्थापत्तिरनुपलब्धिश्चेति षट्। तत्र चाक्षुषादिभेदात् प्रत्यक्षं पूर्ववदादिभेदादनुमानं नित्यानित्यभेदाच्छब्दश्च प्रागेव सांख्यप्रस्थाने दर्शितानि।

उपमानं त्रिविधं सादृश्यविशिष्टपिण्डज्ञानम्, असाधारणधर्मविशिष्ट पिण्डज्ञानम्, वैधर्म्यविशिष्टपिण्डज्ञानं चेति। तत्राऽऽद्यमश्वसादृश्यविशिष्टपिण्डज्ञानम्। द्वितीयं खड्गमृगज्ञानम्, खड्गमृगे नासिकालसदेकशृङ्गत्वादसाधारणधर्मो ज्ञेयः। अन्त्यमुष्ट्रज्ञानम्। तत्र वैधर्म्यं तु न्युब्जदेहत्वं दीर्घग्रीवत्वं वा। दृष्टिभेदतः पुनरुपमानं त्रिविधं साधर्म्योपमानं वैधर्म्योपमानं धर्ममात्रोपमानं चेति। तत्राऽऽद्यमश्वसदृशपिण्डानुभवः। द्वितीयं क्षितिरियं जलादिधर्मगुणवतीत्यनुभवः। अन्त्यं तु सैव गन्धवतीत्यनुभवः।

अनुपपद्यमानेनार्थेनोपपादककल्पनमर्थापत्तिः। अर्थस्य आपत्तिर्नाम कल्पना यस्मादिति विग्रहेण बहुव्रीहिसमासः। सा च द्विविधा—दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। तत्र दृष्टार्थापत्तिर्यथेदं रजतमिति पुरोवर्त्तिनि प्रतिपन्नस्य रजतसदृशस्य वस्तुनो नेदं रजतमिति तत्रैव निषिध्यमानत्वात् तन्मिथ्यात्वसिद्धिः। श्रुतार्थापत्तिस्तु श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तरकल्पनं यथा तरति शोकमात्मविदिति। अत्र हि श्रुतस्य शोकशब्दवाच्यबन्धजातस्य ज्ञाननिर्वर्त्त्यस्यानुपपत्त्या बन्धस्य मिथ्यात्वसिद्धिः। उत्तराऽपि द्विविधा—अभिधानानुपपत्तिरभिहितानुपपत्तिश्चेति।

तत्र यदि वाक्यैकदेशश्रवणे अन्वयाभिधानानुपपत्त्या अन्वयाभिधानोपयोगि पदान्तरं कल्प्यते तर्हि साऽभिधानानुपपत्तिः, द्वारमित्यत्र पिधेहीत्यध्याहारः। अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति तत्र द्रष्टव्या। यथा स्वर्गकामो ज्योतिष्टोमेन यजेतेत्यत्र क्षणिकतया अनवगतज्योतिष्टोमस्य स्वर्गसाधनत्वानुपपत्त्या मध्यवर्त्त्यपूर्वं कल्प्यते।

अर्थापत्त्या सह प्रत्यक्षादिचतुष्टयप्रामाण्यवादिनो गुरोः, अभावेन सह प्रत्यक्षादिपञ्चकप्रामाण्यवादिनो गुरोरपि गुरोः कुमारिलस्य च शाबरभाष्य-व्याख्यातृत्वे तुल्येऽपि प्रमातृप्रमेययोः प्रमाणवद् विसंवादः। अभावो यस्य न प्रमाणं तस्य प्रभाकरस्य नाभावो नाम कश्चिद् विषयः। कुड्ये पटो नास्तीति केवलकुड्यानुभवात्। तदेव रूपदर्शनाभावमात्रं न तु द्रव्यान्तरमिति गुरुमतम्। अभावो हि पुनर्यस्य प्रमाणं तस्य भट्टपादकुमारिलस्य अभाव-लक्षणोऽपि विषयविशेषः। स च पञ्चविधः—अत्यन्ताभावः प्रागभावः प्रध्वंसाभावोऽन्योन्याभावः संसर्गाभावश्चेति। तत्र पुंसि विषाणस्यात्यन्ता-भावः। उत्पत्तेः प्राचीनो घटपटादीनां प्रागभावः। विनाशोत्तरकालीनः प्रध्वंसाभावः। पटस्य घटाद्यात्मत्वाभावोऽन्योन्याभावः। प्राङ्गणादौ गर्भगृहाभावः संसर्गाभावः। अतस्तमोऽपि द्रव्यान्तरमिति भाट्टाः। 'तम आसीत्' इत्येवमादिश्रुतेः। तदुक्तं वार्त्तिके—

तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥ इति।

प्राच्यां मीमांसायां सर्वं ज्ञानं प्रमैवेति देवता मन्त्रमयी न तु चिन्मयी भवितुमर्हति। अतस्तस्या ईश्वरांशो न ग्राह्य इति केचित्। यत्परः शब्दः स शब्दार्थ इति न्यायेन मुख्यविषयस्य कर्मणो बलवत्त्वात्। अन्ये तु तत्र मन्यन्ते धर्मस्य परमेश्वरबुद्ध्या निष्कामतया संराधने चित्तशुद्धितः क्रमशो ब्रह्मात्मैक्यज्ञानात्मको मोक्ष इति जैमिनिगुरोर्मतं न वेदान्तविरुद्ध-मिति। निर्वचनं च तत्र —

जैमिनीये च वैयासे विरुद्धोऽंशो न कश्चन ।

श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥ इति ।

ननु, प्राच्यां मीमांसायां परमेश्वरमोक्षयोरनुल्लेखात् कथमेतन्मते तयोरङ्गीकारः ? कर्मकाण्डश्रुतिषु स्वर्गादिफलानामेव कीर्त्तनात् तन्मीमांसाऽवसरे तयोरसम्मतत्वानुमापकं वाक्यं न दृश्यते । एवं हि परमेश्वरमोक्षयोरप्रतिषिद्धत्वाद् 'अप्रतिषिद्धं परमतमनुमतमि'ति न्यायेन तन्त्रान्तरसिद्धयोस्तयोरङ्गीकारो न शास्त्रविरुद्धः । तदेवं वेदान्तदर्शने परमेश्वरविषयकश्रुतिषु जैमिनिसिद्धान्ता भगवता व्यासेन बहुभिः सूत्रैरुदाहृताः—साक्षादप्यविरोधं जैमिनिः ( १।२।२८ ), सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ( १।२।३१ ), मध्वादिष्वसंभवादनधिकारं जैमिनिः ( १।३।३१), अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ( १।४।१८ ), परं जैमिनिर्मुख्यत्वात् ( ४।३।१२ ), ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ( ४।४।५ ) इत्येवमाद्यैः । अपि च जैमिनिदर्शने भट्टपादादिभिर्मीमांसकप्रवरैर्मोक्षोऽप्यङ्गीकृतः । तथा हि श्लोकवार्त्तिके—

तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते ।

न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ॥ इति ।

मोक्षावस्थायामिन्द्रियाद्यभावात् खण्डसुखविशेषा विलीयन्ते न तु स्वाभाविकचैतन्यानन्दविभुत्वादय इत्येतदपि स्वीकृत्य भट्टपादा आहुः—

निजं यत्त्वात्मचैतन्यमानन्दश्चेष्यते च यः ।

यश्च नित्यविभुत्वादि तैरात्मा नैव मुच्यते ॥ इति ।

तदेव शास्त्रदीपिकायाः प्रथमाध्यायप्रथमपादे पार्थसारथिमिश्रपादैरुक्तम्—"तस्मान्न प्रपञ्चविलयो मोक्षः, किन्तु प्रपञ्चसम्बन्धविलयः । त्रेधा हि प्रपञ्चः पुरुषं बध्नाति, भोगायतनशरीरम्, भोगसाधनानीन्द्रियाणि, भोग्याः शब्दादयो विषयाः । भोग इति च सुखदुःखयोरपरोक्षानुभव उच्यते । तदस्य त्रिविधस्यापि बन्धस्याऽऽत्यन्तिको विलयो मोक्षः । किमिदमात्यन्तिकत्वम् ? शरीरेन्द्रियविषयाणां विनाशोऽनुत्पन्नानां चाऽऽत्यन्तिकोऽनुत्पादः ।

कथमत्यन्तानुत्पत्तिः ? उत्पादकयोर्धर्माधर्मयोर्निःशेषयोः परिक्षयात्। सोऽयं प्रपञ्चसम्बन्धो बन्धस्तद्विमोक्षश्च मोक्षः" इति।

पूर्वमीमांसायां बादरायणस्य चोत्तरमीमांसायां जैमिनेश्च कीर्त्तनादुभयोरविरोधो विस्पष्ट एव। ये तु तत्र तत्र केचिदधिकारभेदमनुसृत्य विरोधाः प्रतीतास्ते न गणनीयाः, प्रकारान्तरेण तेषामविरोधात्। यच्च नवमाध्यायादौ शब्ददेवतात्वसमर्थनं देवताविग्रहनिरासकं दृश्यते, तदपि वैदिकेषु शब्देषु श्रद्धातिशयं प्रकाशयितुं न तु देवताविग्रहं निरसितुमिति बोध्यम्। सङ्कर्षणकाण्डे जैमिनिमुनेर्देवताविग्रहाद्यङ्गीकारात्।

शरीरात्मनिरासो हि जैमिनिनये न सूत्रारूढः। 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इत्यादिसूत्रभाष्ये तु क्षणिकविज्ञानादिरूपत्वनिरासेन वेदान्ततात्पर्यमाकृष्य स्थिरविज्ञानात्मत्वमभ्युपगतम्। तदुक्तं श्लोकवार्त्तिके भट्टपादैः—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन॥ इति।

अत 'एक आत्मनः शरीरेऽभावादि'ति शारीरकसूत्रभाष्ये भगवत्पादैरप्युक्तम्—"ननु, शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तम्। सत्यमुक्तं भाष्यकृता, न तु तत्राऽऽत्मास्तित्वे सूत्रमस्ति। इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम्। इत एवाऽऽकृष्याऽऽचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम्। अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः।" इति।

एवमेव हि मीमांसाशास्त्रमिदं वेदार्थविचाररूपं देहातिरिक्तात्मस्वरूपवेदप्रामाण्यमुपजीव्य सर्वत आस्तिक्यदर्शनतामर्हति।

( क्रमशः )

# मेघनादवधम्

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदः ]

द्वितीयः सर्गः

अथामात्यः कृतिश्रेष्ठः सारणो नाम वाक्यवित् ।
बद्धाञ्जलिः समुत्तिष्ठन्निदं वचनमब्रवीत् ॥१॥
भो राक्षसकुलेन्द्र त्वां को न्वस्ति जगतीतले ।
बोधयेद् यो जगद्वन्द्यं शस्त्रशास्त्रविशारदम् ॥२॥
महासत्त्वो न जात्वेव प्रयाति शोकनिघ्नताम् ।
तुल्यकम्पितयोर्वायौ को भेदो द्रुमशैलयोः ॥३॥
विचिन्तय जगन्नाथ वज्रं यदि विचूर्णयेत् ।
अद्रेरभ्रंलिहं शृङ्गं ततः किमचलश्चलेत् ॥४॥
मायामयमिदं विश्वं सुखदुःखं न तात्त्विकम् ।
ग्रीष्मशीतमये देशे युगपद् वह्नितापवत् ॥५॥
अविद्याशृङ्खलाबद्धं ममताशङ्कसंहतम् ।
अनित्ये पितृपुत्रत्वे मोहमूलमिदं जगत् ॥६॥
मूढदृष्टिर्यथा रज्जुं सर्पत्वेनाभिमन्यते ।
तथाऽज्ञजनता मिथ्यासंसारे सारमीक्षते ॥७॥
मरौ पतितसूर्यांशुं जलं मत्वा यथा मृगाः ।
धावं धावं तृषा मृत्युं प्राप्नुवन्ति तथा नराः ॥८॥
अतो विनश्वरं बुद्ध्वा सर्वं सलिलबिम्बवत् ।
जहीहि मूढवच्छोकं संस्तभ्याऽऽत्मानमात्मना ॥९॥
प्रत्युवाच ततो लङ्काधीश्वरो मन्युगद्गदम् ।
जाने मन्त्रिन् यथोक्तं ते सारगर्भमिदं वचः ॥१०॥
भवोऽयं सर्वथा मिथ्या गन्धर्वनगरोपमः ।
योगायोगौ सदैवात्र प्रपायां पथिको यथा ॥११॥

---

। ३ जातु कदाचित् । शोकनिघ्नतां शोकवश्यताम् । ११ । प्रपायां पानीयशालायाम् ।

जानतोऽपि यथाऽज्ञस्य रुद्यते चेतसा मम ।
प्राप्य ते सान्त्वनावाच्यमहो माया बलीयसी ॥१२॥
छिन्ने पुष्पे मनोवृन्तात् कृतान्तेन बलीयसा ।
शोकाब्धौ मज्जति स्वान्तं बिसं वाऽनलिनं जले ॥१३॥
उक्त्वैतावन्महाराजो दृष्ट्वा वार्त्ताहरं पुनः ।
आदिदेश कथं सङ्ख्ये ब्रूहि वीरो निपातितः ॥१४॥
नत्वा नृपपदाम्भोजं विधाय विनयाञ्जलिम् ।
दुःखितो भग्नदूतोऽसौ प्रवक्तुमुपचक्रमे ॥१५॥
हा लङ्केश्वर दुर्भाग्यो वर्णयामि कथं कथाम् ।
वीरत्वविपुलां सम्यग् वीरवाहुवधाश्रिताम् ॥१६॥
मदमत्तो यथा दन्ती मृद्नाति नलकाननम् ।
अरिन्दमस्तथा वीरकुञ्जरोऽरिगणान् सुखम् ॥१७॥
हृदयं वेपतेऽद्यापि वृत्तं तत् स्मरतो मम ।
हुङ्कारभैरवं तस्य स्वतिमेघाब्धिगर्ज्जितम् ॥१८॥
इरम्मदं द्रुतं मेघेऽदर्शं पवनवेगितम् ।
नापश्यं जातु धावन्तं सवेगं बाणमीदृशम् ॥१९॥
वीरबाहुर्यदा वीरसिंहैर्निविविशे वनम् ।
तदा धूलिघनच्छन्नं नभोऽसूर्यमिवाऽऽबभौ ॥२०॥
एवं स शत्रुभिः सार्द्धं विगृह्य सुचिरं बली ।
न्यवधीत्ताननायासं रम्भावनमिभेन्द्रवत् ॥२१॥
अथ भीमधनुष्पाणी रामो वासवसन्निभः ।
प्रविवेश महायुद्धं सुरासुरभयङ्करम् ॥२२॥
हर्यक्ष इव दीप्राक्षो दन्तान् कटमटाय्य सः ।
वृषं सरोषमुत्प्लुत्य वीरपुङ्गवमाक्रमीत् ॥२३॥

---

१३। बिसं मृणालम् । २३। हर्य्यक्षः सिंहः ।

दिग्विदिक्षु तदा युद्धं बभूवातिभयप्रदम् ।
वात्याक्षुब्धो यथोदन्वान् घोरस्तनितभीषणः ॥२४॥
असिपंक्तिर्विपुस्फोर ज्वालेव जातवेदसः ।
विरेजे चर्मणामन्तो धूमपुञ्जसमप्रभः ॥२५॥
दध्वनुर्विविधाः शङ्खाः पयोधिस्तनितस्वनाः ।
तस्मिन् घोरे महायुद्धे त्रातोऽहं भाग्यदोषतः ॥२६॥
धिग् दैवं त्वं कथं त्यक्तं कृतवन् मामपत्रपम् ।
युद्धेष्टौ मामनाहृत्य वीरेण वीरबाहुना ॥२७॥
नृपव्याघ्र न मन्यस्व दोषिणं मां मनागपि ।
क्षतं मे पश्य वक्षोऽरिशस्त्रैः पृष्ठं तथाऽक्षतम् ॥२८॥
रोरुद्यमानो दुःखेन निगद्येदं सगद्गदम् ।
जोषमासिष्ट दूतोऽसौ शोकः सत्त्वहरो नृणाम् ॥२९॥
श्रुत्वैतद्रक्षसां नाथस्तं प्रशस्य पुनः पुनः ।
प्रत्यवादीद् वचो युक्तियुक्तं वीरत्वसुश्रवम् ॥३०॥
साधो सन्देशहारिंस्त्वद् वीरवृत्तिं सुतस्य मे ।
निशम्य हृदयं सद्यो युद्धाय स्पन्दते मुहुः ॥३१॥
नातः परं पितुः श्रेयो यत् स्वातन्त्र्यसुरक्षणे ।
स्वदेशस्य सुतो वीरो युद्धे मृत्युं समृच्छति ॥३२॥
स्वयंवरा भवेत् पृथ्वी तं लब्ध्वा वीरशेखरम् ।
अन्यैः सा केवलं भारं वहते मृत्युकिङ्करैः ॥३३॥
शूररत्नं पतिं हित्वा तादृशं द्यौर्नहीच्छति ।
जातिमात्रं नरं कश्चित् कृष्णेवार्जुनसङ्गमम् ॥३४॥
तेन नूनं धरा धन्या तेन सृष्टिर्महीयसी ।
मातापितृकुलं तेन पूतं धन्यं यशोमयम् ॥३५॥

---

२९। जोषं तूष्णीम्। ३३। मृत्युकिङ्करैः मान्येन भवताम् इतिवद्भेदे तृतीया।

वीरपुत्रप्रसूर्धन्या लङ्का स्वर्गाद् गरीयसी ।
सर्वे वयश्च धन्याः स्मो यूयमन्ये च राक्षसाः ॥३६॥
पुत्रकीर्त्तिमरुद्दीप्तो रणोत्साहानलोऽज्वलत् ।
वैरीन्धनानि संदग्धुं मनोवेद्यां रघुद्विषः ॥३७॥
तस्माद् गच्छत सोत्साहं प्रेक्षध्वं वीरगौरवम् ।
कथं निपतितं युद्धे हिमाद्रेस्तुङ्गशृङ्गवत् ॥३८॥
प्रासादशिखरं राजेत्युक्त्वारोहदतित्वरम् ।
विजेतुं श्रियमारूढकनकाद्रेरिवोष्णगोः ॥३९॥
नगरीं सर्वतोऽपश्यद् योधान् शस्त्रसुसज्जितान् ।
हस्त्यश्वरथपादातं सैन्यञ्चापि महाबलम् ॥४०॥
नगराद् बहिरागत्य विपुलं द्विषतां बलम् ॥
जुष्टं नीलाङ्गदनलवानरानीकपैः शतैः ॥४१॥
विभीषणहनूमन्तौ लक्ष्मणश्च तथाऽपरे ।
वीरा न्यरुन्धन् लङ्कान्तां सिंहीं व्याघ्रा यथा वने ॥४२॥
भीषणां स ददर्शाराद् युद्धभूमिमसंख्यकैः ।
श्वशिवागृध्रशकुनिप्रमुखैः श्वापदैर्वृतम् ॥४३॥
केचित् तेषां विरुन्धन्ति तथोद्गच्छन्ति केचन ।
एके समासते चान्ये पक्षैराघ्नन्ति चापरान् ॥४४॥
दूरमुत्सारयन्त्यन्यानेके धावन्ति हर्षिताः ।
बुभुक्षां शमयन्त्यन्ये पिबन्तो रक्तमागलम् ॥४५॥
पतिताः कुत्रचिन्नागा भीषणाकृतयो रणे ।
क्वचिदश्वा मरुद्वेगास्तिष्ठन्ति चित्रवत् स्थिराः ॥४६॥
असंख्येयरथाश्चूर्णाः शूलिनो रथिनस्तथा ।
सादिपादातवृन्दानि लुठन्त्येवात्र भूतले ॥४७॥

---

३९। उष्णगोः सूर्य्यस्य। ४५। आगलम् आकण्ठम्। ४६। नागाः हस्तिनः।

स्थाने स्थानेऽसिपरशुतूण-मुद्गर-खेटक-
गदाशरासनादीनि पतितान्यायुधानि च ।।४८।।
हैमध्वजकराः सर्वे पतिता ध्वजवाहकाः ।
तथा यन्त्रिगणाः सन्ति यन्त्रमध्ये गतासवः ।।४९।।
शेरते राक्षसा राम-बाण-विक्षतविग्रहाः ।
स्वर्णशीर्षाणि शस्यानि कृत्तानि कर्षकैरिव ।।५०।।
वीरबाहुर्महावीरो निष्पिष्य बलिदुर्हृदः ।
घटोत्कच इवापप्तत् कालपृष्ठसमाहतः ।।५१।।
महाशोकाकुलो राजा विललाप पुनर्भृशम् ।
तत्तल्पं रोचते मह्यं यदशेथा गुणार्णव ।।५२।।
को न वाञ्छति लोकेऽस्मिन् शयितुं कीर्त्तिकामुकः ।
वीराणां शयने हत्वा जन्मभूमिभुजो रिपून् ।।५३।।
यस्य चित्तं न विद्यायै वीर्याय तपसेऽथवा ।
स्पृहयत्यर्थलाभाय मातुर्वर्चः स वै सुतः ।।५४।।
तथाऽपि तात मे चेतः पुष्पपेलवमाहतम् ।
शोकाशनिनिपातेन दीर्यते हि सहस्रधा ।।५५।।
सहेऽहं यां व्यथामद्य, प्रकाशयितुमक्षमः ।
अन्तरात्मा हि मे वेत्ति शोको वाचामगोचरः ।।५६।।
विश्वं विलासभवनं भवदीयमेतद्
भो धातरेधि मुदितो नु परस्य दुःखैः ।
दृष्ट्वा पिता सुतसुखं मुदमेत्यनन्तां
को वाऽनयस्त्वयमहो जगतः पितुस्ते ।।५७।।

इति श्रीमेघनादवधे महाकाव्ये रावणस्य रणक्षेत्रदर्शनं नाम
द्वितीयः सर्गः ।

---

५१ । कर्णस्य शरासनं कालपृष्ठं तेन समाहतः । ५२ । तल्पं शय्या । ५४ । वर्चः पुरीषम् ।
५५ । पेलवं कोमलम् । ५७ । (क) एधि भव (ख) अनयः नीतिविपरीतं कर्म ।

# संस्कृत-साहित्यपरिषदः सप्तदशवर्षीयमधिवेशनम्

सुनिष्पन्नं संस्कृतसाहित्यपरिषदः सप्तदशवर्षीयमधिवेशनं व्यतीते सौराश्विनस्य द्वितीयदिवसे। सभामण्डप 'इउनिभार्सिटि इनष्टिटिउट्' इत्याख्यस्थाने कल्पितः। अस्य चाधिवेशनस्य सुसम्पादनविधावन्तरोत्पद्यमानानपि प्रतिकूलव्यवहारनिवहान् समुत्सारयन्त्या भगवदनुकम्पाया अनुपदं प्रथमतस्तेषामेव परिषत्सदस्यानां तदनुवर्त्तिनाञ्च सहृदयानां महानुत्साहः कारणतामधिगच्छति येऽविगणय्य कायक्लेशम् अप्रमाणीकृत्यामूल्यसमयातिवाहनदोषमनवधार्य चावश्यशङ्कनीयामवधीरणाभीतिमनारतमुपस्थाय समनुशीलितैरभिनयैः सुव्यवस्थापितैश्चाधिवेशनकर्मनिवहैर्महोत्सवमिमं सुसम्पादितं व्यदधुः। अतस्तेभ्यः, तेभ्यश्च यथाकालमिहागत्य दर्शकतया महोत्सवं साङ्गं विदधानेभ्यो धन्यवादसहस्रमादावुत्सृजामः।

प्रारिप्सिते सभाकर्मणि प्रथमतस्तावत् परिषदं प्रति चिराय दयमानेन स्निह्यता भक्तिप्रह्वेण च श्रीमता विष्णुपददत्तमहोदयेन यथारीति प्रबोधनसङ्गीतमुपगायाऽऽवर्जितेषु सभास्तारचेतःसु परिषदः सहकारिसभापतेः म० म० श्रीयुक्त-शितिकण्ठवाचस्पतिमहोदयस्य प्रस्तावमवलम्ब्य कविराजशिरोमणेः श्रीयुक्त-श्यामादासवाचस्पतिमहोदयस्य समर्थनायामुपलब्धायां वैद्यप्रवरेण प्रत्यक्षशारीरकादिग्रन्थरत्ननिर्मात्रा विद्वद्वरेण महामहोपाध्यायपदभाजा श्रीमता गणनाथसेन-सरस्वतीमहोदयेन सभापतिपदमलमकारि। पाण्डित्याभिजनयोरनुरूपां विनयसम्पदमुपदर्शयद्भिस्तैरादौ तथाविधायामभिरूपभूयिष्ठायां सभायामात्मनः साभापत्येन विस्मयद्भिरिव विलज्जमानैरिव च स्वल्पेन संस्कृतवचसा स्वाहंकारः परिहृतः।

सभाकार्यप्रारम्भे च परिषत्सम्पादकेन श्रीमता अमरेश्वरठाकुरवेदान्तशास्त्रिमहोदयेन परिषदः सप्तदशवर्षीयं कार्यविवरणं स्वरचितसंस्कृतभाषामयं वाचितमभूत्। संक्षेपेण सर्वकार्यविवरणगर्भः सुललितः सोऽयं निबन्धः

पत्रिकाया अस्याः प्रथमांशे दिदृक्षुभिर्द्रष्टव्यः । ततश्चान्यतमेन सहसम्पादकेन श्रीमता दीनबन्धुसाहित्यशास्त्रिमहोदयेन वङ्गदेशवास्तव्यानां असंस्कृतज्ञानाञ्च सभ्यानां सुबोधार्थं विस्तरतो वङ्गभाषया संकलितं परिषदः कार्यविवरणम् अन्यतमेन सम्पादकेन श्रीमता सत्येन्द्रनाथवसुज-महोदयेन वाचितमासीत् ।

अस्ति चायं चिराचरितः समुदाचारविशेषः परिषदः—यदत्र वार्षिकाधिवेशनमहोत्सवे कस्यचन विश्रुतकीर्त्तेर्विदुषो वा भूस्वामिनो वा परासोस्तैलचित्रमपावृतं कर्त्तव्यमिति । तन्नियमानुगत्या चास्मिन्नधिवेशन-महोत्सवे स्वर्गतसुषङ्गाधिपतेः कुमुदचन्द्र-सिंहमहोदयस्य तैलचित्रं योग्यतमेन तदीयपुत्रेण स्वव्ययेन चित्रयित्वा परिषदे दत्तमुन्मोचितमभूत् । तदुन्मोचनावसरे च म० म० शितिकण्ठवाचस्पतिना म० म० भागवतकुमार-गोस्वामिना श्रीयुक्तकालीपदतर्काचार्येण च परासोर्धरणीशस्य, शीलं सौजन्यं संस्कृतभाषायामनुरागविशेषञ्चाधिकृत्य भाषणानि प्रकटितानि ।

तैस्तैर्गुणानुवादैः प्रबलीभूते तद्गुणाधिकारिणो दर्शनकुतूहले तत्रभवता सभापतिना तेषां तेषामसाधारणगुणानां प्रत्यक्षताचिकीर्षयेवाकृतिमपाकर्षता सर्वाध्यक्ष्यतामनायि सा मूर्त्तिर्या राजोचितगाम्भीर्यविशेषजुष्टाऽपि नानधिगम्या जनानामसंस्तुतानामपीति व्याख्यातमादिमं पर्व ।

ततश्च सभापतिमहोदयेन स्वीयपाण्डित्यबहुज्ञत्वयोरनुरूपं मधुरमधुरं भाषणं पत्रारूढं सरसललितया वाचा सभासदां पुरतो निवेदितम् । तदेतदपि भाषणमस्यामेव सच्चिकायां स्थानान्तरे मुद्रापितं वाचकैरवलोकनीयम् ।

सभासमाप्तौ च परिषदः सदस्याः भासकविकृतस्य 'प्रतिमा'नाटकस्य बोधायनकविकृतस्य 'भगवदज्जुकीय'प्रहसनस्य चाभिनयेन समुपस्थितानां तावतामेव सभ्यानां मनांस्यरञ्जयन् अभिनयस्य च किमधिकं ब्रूमो वैशिष्ट्यं यं किल संस्कृतासंस्कृतज्ञनिर्विशेषं सादरमुपशृण्वन्तो निखिला एव सामाजिका गलितयामद्वयामपि त्रियामां तन्मनस्कतया नाज्ञासिषुरिति शिवम् ।

---

## संस्कृत-साहित्य-परिषदः १३४०-वङ्गाब्दीय-

## कार्यपरिचालकाः

### सभापतिः

महामहोपाध्याय-श्रीयुक्त-दुर्गाचरण-सांख्यवेदान्ततीर्थः

### सहकारि-सभापतयः

१। महामहोपाध्याय-श्रीयुक्त-अनन्तकृष्णशास्त्री
२। महामहोपाध्याय-श्रीयुक्त-शितिकण्ठ-वाचस्पतिः
३। महामहोपाध्याय-श्रीयुक्त-कुञ्जविहारी तर्कसिद्धान्तः।
४। डक्टर-श्रीयुक्त-आदित्यनाथमुखोपाध्यायः, एम्. ए., पि-एइच्. डि.
५। पण्डित-श्रीयुक्त-द्वारिकानाथ-न्यायशास्त्री
६। कविराज-शिरोमणि-श्रीयुक्त-श्यामादास-वाचस्पतिश्च

### सम्पादकौ

१। श्रीयुक्त-अमरेश्वर-ठाकुर-वेदान्तशास्त्री, एम. ए., पि-एइच्. डि.
२। श्रीयुक्त-यतीन्द्रनाथ-वसुजः, एम. ए., एम्. एल्. सि. च।

### सहकारि-सम्पादकाः

१। पण्डित-श्रीयुक्त-दीनबन्धु-साहित्यशास्त्री
२। ,, ,, श्यामाचरण-काव्यतीर्थः
३। ,, ,, चिन्ताहरण-चक्रवर्त्ती काव्यतीर्थः, एम. ए.
४। ,, ,, रामकृष्ण-चक्रवर्त्ती, एम. ए.
५। ,, ,, अशोकनाथ-भट्टाचार्य-वेदान्ततीर्थः, एम. ए. च।

# कार्यनिर्वाहकसमितेरन्ये सदस्याः

१। पण्डित-श्रीयुक्त-जगदीशचन्द्र-वेदव्यासः
२। „ „ जगन्मोहन-ज्योतिर्विनोदः
३। „ „ वामापद-विद्यारत्नः
४। „ „ दक्षिणाचरण-भट्टाचार्यः, एम. ए.
५। „ „ जानकीनाथ-साहित्यशास्त्री
६। „ „ कालीपद-तर्काचार्यः
७। „ „ योगेन्द्रमोहन-विद्यारत्नः
८। „ „ सीतानाथ-सिद्धान्तवागीशः
९। „ „ दक्षिणाचरण-भट्टाचार्यः
१०। कविराज-श्रीयुक्त-वसन्तकुमार-राय-विद्यारत्नः
११। श्रीयुक्तसत्येन्द्रनाथ-वसुजः, एम. ए., बि. एल्.
१२। पण्डित-श्रीयुक्त-भुवनमोहन-सांख्यतीर्थः
१३। श्रीयुक्तजगमोहन-वसुजः, वि. एल्. ( काउन्सिलर )
१४। श्रीयुक्त-राजेन्द्रनारायण-वन्द्योपाध्यायः, वि. एल्. ( काउन्सिलर )
१५। पण्डित-श्रीयुक्त-दुर्गामोहन-काव्यसांख्यपुराणतीर्थः, एम. ए.
१६। „ „ कालीपद-व्याकरणतीर्थः
१७। „ „ क्षितीशचन्द्र-चट्टोपाध्यायः, एम. ए.
१८। श्रीयुक्त-भूपतिरायचतुर्धुरीणकाव्यतीर्थः
१९। „ सुनीतिकुमार-चट्टोपाध्यायः, एम. ए., डि. लिट्.
२०। पण्डित-श्रीयुक्त-चिन्तामणिसाहित्याचार्यः
२१। „ „ वनमालिवेदान्ततीर्थः, एम. ए.
२२। श्रीयुक्त-क्षितीशचन्द्र-चक्रवर्त्ती, एम. ए, बि. एल.
२३। पण्डितश्रीयुक्त-रसमय-चट्टोपाध्यायः, एम. ए.
२४। „ „ उपेन्द्रमोहन-सांख्यतीर्थः

२५। श्रीयुक्त-ब्रजेन्द्रकिशोर-भट्टाचार्यः ( छात्रसमितिप्रतिनिधिः )
२६। पण्डितश्रीयुक्त-चण्डीचरण-तर्कतीर्थः
२७। " " सारदाप्रसाद-सप्ततीर्थः
२८। " " भवविभूति-विद्याभूषणः, एम. ए.
२९। श्रीयुक्त-उपेन्द्रनाथ-घोषालः, एम. ए., पि-एइच्. डि.
३०। " उमेशचन्द्र-भट्टाचार्यः, एम्. ए.
३१। " यतीन्द्रनाथ-मैत्रेयः, एम. बि.
३२। " दाशरथि-चट्टोपाध्यायः, बि. एल्., बि. सि. एस्.

---

## विभागीय-कर्मपरिचालकाः

### पत्रिकासम्पादकः

पण्डित-श्रीयुक्त-क्षितीशचन्द्र-चट्टोपाध्यायः, एम. ए.

### पत्रिका-सहकारि-सम्पादकः

पण्डित-श्रीयुक्त-उपेन्द्रमोहन-सांख्यतीर्थः

### ग्रन्थाध्यक्षः

पण्डित-श्रीयुक्त-जानकीनाथ-साहित्यशास्त्री

### आचार्यौ

पण्डित-श्रीयुक्त-सीतानाथ-सिद्धान्तवागीशः
" " शशिकुमारशिरोमणिश्च

## नाट्यसम्पादकौ

पण्डित-श्रीयुक्त-जगन्मोहन-ज्योतिर्विनोदः

" " वामापद-विद्यारत्नश्च

## नाट्य-सहकारि-सम्पादकाः

श्रीयुक्त-क्षेत्रनाथ-विद्यारत्नः

" व्रजेन्द्रकिशोर-भट्टाचार्यः

" कार्त्तिकचन्द्र-चक्रवर्त्ती च

## सङ्गीताचार्यः

श्रीयुक्त-सतीशचन्द्रदत्तजः

## आय-व्यय-लिपिरक्षकः

पण्डित-श्रीयुक्त-रामकृष्ण-चक्रवर्त्ती, एम्. ए.

## आय-व्यय-लिपिपरीक्षकः

श्रीयुक्त-मलयकुमार-देवः, बि. एस्-सि., जि. डि. ए.

---

संस्कृत-साहित्य-परिषदः सप्तमवर्षस्य (१३३९ वङ्गाब्दस्य)

आय-व्यय-निष्कर्षः

## (१) साधारणकोषः

**आयः**

| | |
|---|---|
| गतवर्षस्य व्ययावशिष्टः | |
| सेविंस ब्याङ्कागारे | १३८≡१५ |
| हस्ते ... | १३६।१० |
| ष्ट्याम्प ... | ११।=० |
| अग्रिमादिः ... | २४॥–१५ |
| वृत्तिरूपेण प्राप्तः | |
| ( कलकत्तातः ) | १५३३॥० |
| „ ( स्थानान्तरात् ) | ४६७॥० |
| सामयिक-दानरूपेण | |
| दातृभ्यः ... | ६७।–१० |
| गवर्णमेण्ट-सकाशात् | |
| (१९३२-३३) | ७००) |
| करपोरेशन-सकाशात् | |
| (१९३१-३२) | ८००) |
| पुस्तकादि-विक्रयात् | १३८) |
| प्रावेशिक-रूपेण ... | ४।० |
| वि. पि. शुल्कपत्रात् | ३० ५) |
| कुसीदरूपेण ( सेविंस-ब्याङ्कागारात् ) | २२॥=१५ |
| अन्यतः ... | ६) |
| ऋणात् ( गृहकोषतः ) | १०८७॥० |
| | ५२२१ १०) |

**व्ययः**

| | |
|---|---|
| पत्रिकार्थम् ... ... | १३३५॥≡५ |
| पुस्तकालयार्थम् ... | १०३६॥–० |
| पुस्तक-प्रकाशार्थम् ... | २१५॥≡१० |
| सभाभिनयाद्यर्थम् ... | २४६॥–५ |
| शिक्षाविभागार्थम् ... | १६७=० |
| गृहभाटकाद्यर्थम् ... | ६३७।१० |
| वर्तनाद्यर्थम् ... | ५४७।=५ |
| गृहोपकरणाद्यर्थम् ... | १७॥–१५ |
| पुस्तकविक्रयेण ... | २।० |
| स्मृतिरक्षार्थम् ... | १६५।≡ |
| पाथेयार्थम् ... | ३८।=१० |
| पत्रादि-शुल्कपत्रार्थम् | ३२≡० |
| वि. पि. शुल्कपत्रार्थम् | ६१॥=५ |
| विविध-विषयार्थम् | २८।– |
| | ४८३४≡५ |
| उद्वृत्तः | |
| ष्ट्याम्प ... | २।≡१० |
| प्राप्यः ( अग्रिमादिः ) | २४ १५) |
| हस्ते ... | ३=१० |
| सेविंस-ब्याङ्कागारे ... ( पोः आः + ब्याङ्क ) | ३५६॥=१० |
| | ५२२१ १०) |

## (२) गृहकोषः

( १३३९ वङ्गाब्दे )

गतवर्षस्य व्ययावशेषितः

(१९४५-५५) ५%

गवर्णमेण्ट लोनपत्रे ... १०००)

क्याश सार्टिफिकेट

पत्रत्रये ... २२५०)

३२५०)

गवर्णमेण्ट लोनपत्रस्य

कुसीदरूपेण प्राप्तः ३३७॥०

३५८७॥०

परिषदः साधारण-कोषे

ऋणरूपेण प्रदत्तः १०८७॥०

उद्वृत्तः ... २५००)

उद्वृत्तस्य विवरणम्

पूर्व्वोक्ते गवर्णमेण्ट लोन-

पत्रे ... ... १०००)

क्याश-सार्टिफिकेट-

पत्रद्वये ... १५००)

२५००)

आय-व्यय-लिपिरक्षकः

श्रीरामकृष्ण-चक्रवर्त्ती

आय-व्यय-लिपिपरीक्षकः

श्रीमलयकुमार-देवः

## (३) ग्रन्थालय-कोषः

( १३३९ वङ्गाब्दे )

गतवर्षस्य प्रत्यर्पणावशेषितः २६२)

१३३९ वङ्गाब्दे न्यासरूपेण

प्राप्तः ... ... १२८)

३९०)

१३३९ वङ्गाब्दे प्रत्यर्पितः २४)

अतिरिच्यमानः ..... ३६६)

१३३९ वङ्गाब्दावसाने

## परिषदः साधारण-कोषस्य

ऋणम्

१३३३ वङ्गाब्दे गृहकोषात

गृहीतम् ... ७८॥०

१३३४ " " ... ७७५)

१३३६ " " ... १०२५)

१३३७ " " ... १०००)

१३३८ " " ... १२५)

३००३॥०

१३३८ वङ्गाब्दे ऋण-

प्रत्यर्पणम् ... ७७५)

२२२८॥०

१३३९ वङ्गाब्दे

गृहकोषाद् गृहीतम् १०८७॥०

३३१६)

सम्पादकौ

श्रीअमरेश्वर-ठाकुरः

श्रीसत्येन्द्रनाथ-वसुजश्च

// संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| December, 1933. | १८५५ शकीये अग्रहायणे १६श-वर्षस्य ८म-संख्या | Vol. XVI. No 8. |
|---|---|---|


# प्रत्यभिज्ञारसिकः कः ?

[ निबन्धकः—के. ए. रामलिङ्ग-शास्त्री ]

को नु खलु महाभागः स महाकविः, यः किल प्रत्यभिज्ञाद्वारा सरस-काव्यग्रथने सुधा-रसातिशायितदीयस्वादुता-प्रकाशने च प्रथितः ? सोऽयं महाकविर्भवभूतिर्नामः । अस्ति विदर्भेषु पद्मपुरं नाम किमपि महनीयं नगरम्; तत्र बहवः श्रोत्रियाः श्लाघनीयशीलाः; तेषु नीलकण्ठभट्टाचार्यस्य पवित्रकीर्तेरात्मसंभवः, जतुकर्ण्या नाम जनन्या नयनानन्दकरोऽसौ पद-वाक्य-प्रमाण-पारावारपारीणः; 'एको रसः करुण एव निमित्तभेदाद् भिन्नः पृथक् पृथगिव श्रयते विवर्त्तान् ।.........' इतिसिद्धान्तस्थापकः, काननसन्निवेश-गिरि-नदी-निर्झरनिष्कुट-निकुञ्ज-वन्यमृगविहगजाललावण्य-स्वन-स्वभावादिस्वरूपवर्णननिष्णातश्च ।

"यद् वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं नहि ततः कश्चिद् गुणो नाटके ।
यत् प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्य-वैदग्ध्ययोः ॥"

इति मालती-माधवस्थप्रस्तावनापद्येन ज्ञायते कविशिखामणिरसौ गुरुकुल-

वासक्लेशेन अवगतसमस्तशास्त्रतत्त्वश्च, विप्रलम्भशृङ्गाररसवर्णने असदृशश्चेति। अमुष्य महाकवेः पितृकृतं नामधेयं तु 'श्रीकण्ठ' इति। 'भवभूति-' रिति बिरुदम्। उत्तररामचरितव्याख्यात्रा वीरराघवेण विदुषा--'साम्बा पुनातु भव-भूति-पवित्रमूर्तिः.........' इति अदसीयसूक्तिश्रवणमुदितेन जीवातुभूतेन केनचिद् भूपतिना तादृशं बिरुदं दत्तम् एतस्मै महाकवये— इति व्याख्यातम्। कान्यकुब्जाधीश्वरस्य यशोवर्मणः सार्वभौमस्य सभायां महाकविरयं सभापतिरासीत्। तदानीम्—

'तपस्वी कां गतोऽवस्थामिति स्मेराननाविव।
गिरिजायाः स्तनौ वन्दे भव-भूति-सिताननौ॥'

इत्येतदीयसुभाषिताकर्णनप्रहृष्टेन प्रभुणा तादृग् बिरुदं समर्पितम् इति राजतरङ्गिणीतो ज्ञायते; एतेन कविना निर्मितानि तावद् दृश्यकाव्यानि त्रीणि—महावीरचरितम्, उत्तररामचरितम्, मालती-माधवम् इति। तेषु अन्तिमं तु प्रकरणम्, रूपकस्य दशविधेषु प्रभेदेषु द्वैतीयीकतया परिगणितम्। चरित-द्वयं तु नाटकतया विख्यातम्। एतदतिरिक्तं किमपि सुभाषितग्रन्थरत्नम्, कुमारिलभट्टस्य वार्त्तिक-व्याख्या, कोऽपि दर्शनग्रन्थश्च प्रथ्यते स्मेति सप्रमाणं परिज्ञायते।

अस्य महाकवेः पण्डितगोष्ठीषु 'भट्टोम्बेक' इति, 'उम्बेक-भट्ट' इति वा प्रख्यातिः काऽप्यासीदिति सम्यङ् निरूपयिष्यते; तथा हि, शास्त्र-दीपिका-व्याख्यायां युक्तिस्नेहप्रपूरण्यां नाम सिद्धान्तचन्द्रिकायाम्—'विशुद्धज्ञान-देहाय.........'इति वार्त्तिककारिका एवम् अवतारिता इति आदौ न्यरूपि। तथा हि—"उक्तं च भट्टोम्बेकेन—ग्रन्थारम्भेऽभिमतदेवता-नमस्कारं करोति वार्त्तिककारः इति॥"

श्रीमच्चित्सुखाचार्यविरचितायां 'प्रत्यक्तत्त्वप्रदीपिकायाम्'—द्वितीय-परिच्छेदे मीमांसक-नैयायिकाभ्याम् अभ्युपगतशब्दप्रमाणलक्षणखण्डनावसरे—"तस्मात्—'शाब्दं शब्दविज्ञानाद् असन्निकृष्टेऽर्थे बुद्धिः'—इति लक्षणम् अलक्षणम्; तथा, आप्तवाक्यं शब्दप्रमाणम् इति नैयायिकानामपि...... ;

आप्ताद्दीरितवाक्येषु मालती-माधवादिषु ।
व्यभिचारान्न तद्युक्तम् आप्तत्वस्यानिरुक्तितः ॥

स्वकपोलकल्पितमालतीमाधवादिवाक्येषु प्रामाण्याभावाद् अतिव्याप्तिः ; नहि—पुरा आप्त एव सन् नाटक-नाटिकादि-प्रबन्धविरचनमात्रेण अनाप्तो भवति भवभूतिः। उक्तं चैतद् उम्बेकेन—'यदा आप्तोऽपि कस्मैचिदुपदिशति—न त्वया अननुभूतार्थविषयं वाक्यं प्रयोक्तव्यम्—यथा अङ्गुल्यग्रे हस्तियूथशतम् आस्ते इति ; तत्र, अर्थव्यभिचारः स्फुटः' इति ।"

नयनप्रसादिनीव्याख्यायाम्—'नाटकादिका व्यायोगान्ता नाटक-विशेषाः, भवभूतिः—उम्बेकः ; एतदेव ग्रन्थान्तरस्थेन तद्वचनेन संमतयति—उक्तं चैतदिति ।' अमुष्य कविपुङ्गवस्य प्रत्यभिज्ञा-रसिकत्वं तावदधुना सोदाहरणं प्रतिपिपादयिषामः। तत्र प्रत्यभिज्ञा-स्वरूपम् आदौ जिज्ञासितं भवति—केयं प्रत्यभिज्ञा नाम ?

यत्र कुत्रापि देशे काले वा पूर्वं सन्दृष्टायाः पश्चात् कियन्तंचित् समयम् अतिक्रम्य पुनः सन्दृष्टायाश्च व्यक्तेरैक्यावगाहिनी, तद्देश-तत्कालैतद्देशैतत्कालाद्यनवगाहिनी च या धीः सैषा प्रत्यभिज्ञा इति लक्षणम् अस्या विशदयन्ति विशारदाः। असन्निहितविषयत्व-सन्निहित-विषयत्वाभ्यां च स्मरण-प्रत्यभिज्ञानयोर्भेदः । सोऽयं देवदत्त इति उदाहरणं प्रत्यभिज्ञायाः ।

श्रीमद्रामभद्र-भद्रासनाधिरोहणमङ्गलमहोत्सवसम्भावनार्थम् अयोध्या-नगरीम् अभियातस्य मिथिलाधिपतेर्जनकमहाराजस्य स्वनगरप्रस्थानेन विमनायमानायाः सीतादेव्याः परिसान्त्वनाय परिकल्पिते काननसञ्चार-प्रदर्शके चित्र-सन्दर्शने शम्बूकवधार्थं दण्डकारण्याभिप्रयाणे च तत्र तत्र महाकवितल्लजोऽयम्—पूर्वानुभूतविषयसन्दर्शने तन्मयताम् उपगत इव वर्णयन् सहृदयान् रञ्जयतीत्यहो ! अन्यादृशी कविताचातुरी । तथा हि—

सोऽयं शैलः ककुभ-सुरभिर्माल्यवान्नाम यस्मिन्
नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।
आर्येणास्मिन्……

रामः— वत्सैतस्माद् विरम विरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः स पुनरिव मे जानकीविप्रयोगः ॥
प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥
पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घन-विरल-भावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥
एतानि तानि गिरि-निर्झरिणी-तटेषु
वैखानसाश्रित-तरूणि तपोवनानि ।
येष्वातिथेय-परमा यमिनो भजन्ते
नीवार-मुष्टि-पचना गृहिणो गृहाणि ॥
समयः स वर्त्तत इवैष यत्र मां
समनन्दयत् सुमुखि ! गौतमार्पितः ।
अयमागृहीत-कमनीय-कङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥
इङ्गुदी-पादपः सोऽयं शृङ्गिबेरपुरे पुरा ।
निषाद-पतिना यत्र स्निग्धेनाऽऽसीत् समागमः ॥
दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्द्धनः ।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥

एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि ।
आमञ्जु-वञ्जुल-लतानि च तान्यमूनि
नीरन्ध्र-नीप-निचुलानि सरित्तटानि ॥

मेघ-मालेव यश्चायमाराद्दिव विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥

एते ते कुहरेषु गद्गदनदद्गोदावरी-वारयो
मेघालम्बित-मौलि-नील-शिखराः क्षोणी-भृतो दक्षिणाः ।
अन्योन्य-प्रतिघात-सङ्कुलचलत्कल्लोल-कोलाहलै-
रुत्तालास्त इमे गभीर-पयसः पुण्याः सरित्सङ्गमाः ॥

सीता-देव्या स्व-कर-कलितैः सल्लकी-पल्लवाग्रै-
रग्रे लोलः करि-कलभको यः पुरा वर्धितोऽभूत् ।
वध्वा सार्द्धं पयसि विहरन् सोऽयमन्येन दर्पा-
दुद्दामेन द्विरद-पतिना सन्निपत्याभियुक्तः ॥

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रिया-सहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुकन्दरनिर्झराणि
गोदावरी-परिसरस्य गिरेस्तटानि ॥

येनोद्गच्छद्बिस-किसलय-स्निग्ध-दन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु ! लवली-पल्लवः कर्ण-मूलात् ।
सोऽयं पुत्रस्तव मद-मुचां वारणानां विजेता
यत् कल्याणं वयसि तरुणे भाजनं तस्य जातः ॥

अनुदिवसमवर्धयत् प्रिया ते
यमचिरनिर्गत-मुग्ध-लोल-बर्हम् ।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधू-सखः शिखण्डी ॥

नव-कुवलयस्निग्धैरङ्गैर्ददन्नयनोत्सवं
सततमपि नः स्वेच्छादृश्यो नवो नव एव यः ।
विकल-करणः पाण्डुच्छायः शुचा परिदुर्बलः
कथमपि 'स' इत्युन्नेतव्यस्तथाऽपि दृशोः प्रियः ॥
नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः ।
एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि ॥

रामः— गृहीतो यः पूर्वं परिणय-विधौ कङ्कण-धरः
सुधा-सूतेः पादैरमृत-शिशिरैर्यः परिचितः ।

सीता— अज्जउत्त ! सो एव्व दाणिंसि तुमम् ।

रामः— स एवायं तस्यास्तदितरकरौपम्य-सुभगो
मया लब्धः पाणिर्ललित-लवली-कन्दल-निभः ॥

... ... ... ... ...

रामः— हन्त ! तिर्यञ्चोऽपि परिचयम् अनुरुन्धते ।
कतिपय-कुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितो य आसीत् ।

सीता— ( सास्रम् ) सुट्ठु पच्चहिजाणिदं अज्जउत्तेण ॥

एतावता प्रबन्धेन प्रत्यभिज्ञापनमूलकवर्णनस्य दिङ्मात्रं प्रदर्शितम् ; इतोऽप्यधिकं च रसिकैः स्वयमेव अभ्यूहनीयम् । यद्यपि पूर्वम् अनुभूता विषयाः प्रत्यभिज्ञापकैः स्मारकैर्वा विषय-विशेषैरेव वर्णयितुं शक्यन्ते, तथाऽपि भवभूतिमहाकविरसौ प्राचुर्येण प्रत्यभिज्ञां तत्साधनतया उपायुङ्क्त इत्यतोऽस्माभिः 'प्रत्यभिज्ञा-रसिको भवभूतिः' इति अभिप्रेयते । किं च, मुरारिमहाकविरिव 'तत्तादृक्'-पदस्य स्थाने द्विरुक्तं तच्छब्दं तत्र तत्र बहुलम् उपयुयुजेऽयम् । प्रसन्नगम्भीराणि अस्य महाकवेः कवितास्पदानि पदानि । कवीन्द्रोऽयं समुच्चायकेन च-कारद्वयेन सह तिङन्त-द्वयं वर्णने घटयेत् सदा । तीर्थाश्रम-गिरि-सरिद्गर्त-वन्यमृग-विहग-विहरण-काननाभोग-कमनीयतादिदिव्यस्वरूप-वर्णने असदृश इति प्रथितः । अपि

च, शास्त्रज्ञ-रसिकशेखराणामपि निरतिशयानन्दाधायिनी शैली भवभूतेः। उत्तरे रामचरिते, धार्मिकान् औपनिषदान्, योगानुविद्धान्, वात्स्यायनीयान्, आन्वीक्षिक्यादिसम्बद्धान्, नवरसभरितांश्च नाट्यशास्त्रसम्पूर्णान् विषयान् अविच्छिन्नधारमभिवर्णयति। किं बहुना, सर्वथा श्रीमद्रामायणानुसरणेन भवभूतिः अनुपमवर्णनकौशलः समजनि। सरस्वतीवाग्विभूतिशालिनम् एनं भवभूतिम्—केचित् निन्दन्ति 'शवभूति'रिति, यतः कविरेष मालती-माधवे अघोर-कण्ठ-कपालकुण्डलादिपात्रसङ्घट्टनेन प्लुष्यच्छ्मशानाग्निवर्णनेन च कापालिकव्रतानुष्ठायीव प्रतिभाति इति। अपरे तु सकलशास्त्र-पारावार-पारीणोऽप्ययम् Novel-तुल्यं प्रकरणम् अरचयदिति।

एतेषां कुमतीनां समुचितम् उत्तरं गम्भीरया वाग्धोरण्या कविरेव दत्तवान्—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यते मम तु कोऽपि समान-धर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥' इति।
स्यादेतत्; 'उत्तरे रामचरिते भव-भूतिर्विशिष्यते।'
'उत्तरे राम-चरिते बिन्दु-मात्रं विशिष्यते॥'
'किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलित-कपोलं जल्पतोरक्रमेण।
अशिथिल-परिरम्भ-व्यापृतैकैक-दोष्णो-
रविदित-गत-यामा रात्रिरेवं व्यरंसीत्॥'

इति भवभूतिः कवयाञ्चकार; ताम्बुलधारी कालिदासः—एतत्सूक्तपठनसमये (शून्यम्०) खम् अधिकम् इत्युक्तवान्; तथा सति—रात्रिरेव विरता; न तु सीता-रामयोः स्वैरविहार-सल्लाप-गाढालिङ्गनादयः इति—एतादृशप्रशस्तार्थप्रकटनेन कालिदासेन शोधितम् इति, बिन्दुमात्रं विशिष्यते इति च ऐतिह्यं श्रूयते।

मुरारि-भवभूत्योस्तारतम्यविवेचकं प्राचीनं किमपि पद्यम् अन्योन्यं व्यवह्रियते वृद्धैः।

'मुरारि-पद-चिन्ता चेत् तदा माघे मतिं कुरु।
" " " माऽघे मतिं कुरु॥
मुरारिपदचिन्तायां भवभूतेस्तु का कथा ?।" इति।

महाकविरयं गोदावरी-परिसरारण्येषु बहुकालम् उषित्वा, देवीं वाचं समाराध्य वश्य-वाग् अभवत् इति सम्भाव्यते। तथा हि—

यं ब्रह्माणमियं देवी वाग् वश्येवान्ववर्तत।
उत्तरं राम-चरितं तत्प्रणीतं प्रयोक्ष्यते॥

इति आमुखस्थं पद्यम् आवेदयति; 'आदित्यम् अम्बिकां विष्णुं गण-नाथं महेश्वरम्' इति निर्दिष्टपञ्च-देवताराधन-श्रद्धालुरयं कवि-कण्ठीरवः 'कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते !…………' इत्यादिपद्येन प्रणमति सूर्यम्, 'वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कार-वत्यः' 'इदङ्कविभ्यः पूर्वेभ्य' इत्यनेन नान्दीपद्येन 'कविः शुक्र-गजाननौ' इति, 'गणानां त्वा गणपतिं हवामहे कविं कवीनाम्' इति च कोशवेदप्रामाण्यात् वाल्मीकिशुक्र-गजाननाः कविना नम्यन्ते, 'सानन्दं नन्दि-हस्ताहत-मुरजरवाहूतकौमार-बर्हि-त्रासात्' 'चूडापीडकपाल-सङ्कुल-गलन्मन्दाकिनीवारयो' इत्यादिनान्दी-पद्यैः परमेश्वरो नमस्क्रियते; पवित्रायाः 'वासन्ती'-नाम्न्याः पात्रस्थवनदेवतायाः सङ्घटनाद् वन-दुर्गोपासकत्वम् अप्युह्यते भवभूतेः।

महावीरचरितोत्तररामचरितद्वयविरचनेन श्रीमहाविष्णूपासकोऽय-मासीत् इति विशदीभवति।

उत्तररामचरितेऽस्मिन् अत्याह्लादकराणि बहूनि सुभाषितानि विल-सन्ति—तेषु कतिपयानि परम् अत्र निर्दिदिक्षामः—

लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तते॥

एतत्पद्यसमानार्थकं पद्यम् अनर्घ-राघव-नाटके मुरारि-महाकविः श्रीमल्लक्ष्मणवचनव्याजेन निरदिक्षत्—

मीमांसते किमार्योऽयं कौशिकेऽप्यनुशासति।
वाचमेषामृषीणां हि शास्त्रमेवाऽनुरुध्यते॥ इति
प्रभवति शुचिर्बिम्ब-ग्राहे मणिर्न मृदां चयः।
वज्रादपि कठोराणि, मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ?

कुसुम-सधर्माणो हि योषितः···इति वात्स्यायनः।

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्व-वैराणां सा हि लोकस्य निष्कृतिः॥

कामं दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्तिं सूते दुर्हृदो निष्प्रहन्ति।
शुद्धां शान्तां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः॥

आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयो भूत्।
भव्या ह्येषां वाचि लक्ष्मीर्निषक्ता नैते वाचं विप्लुतार्थां वदन्ति॥

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि॥

इति श्रुत्यर्थः पूर्वसुभाषिते स्फोरितः। जृम्भकास्त्र-प्रस्तावे—ब्राह्मणानाम् आविर्भूत-ज्योतिष्म्—

ब्रह्मादयो ब्रह्म-हिताय तप्त्वा परःसहस्रं शरदस्तपांसि।
एतान्यपश्यन् गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि॥

इत्यनेन पद्येन प्रतिपाद्यते। उत्तररामचरित-नाटकं व्याचिख्यासुः श्रीवीरराघवः—

भवभूतेः कवीन्द्रस्य क्व गम्भीरो गिरां भरः ?।
क्व मन्मतिरतिस्थूला ? सहायोऽत्र हयाननः॥

इति सूक्त्या भवभूति-महाकवेर्वाङ्मयं श्लाघ्यते। उत्तर-रामचरितोपक्रमे श्रीमद्वाल्मीकि-प्रभृतीन्, भगवतीं वाग्देवतां च नान्दीश्लोकेन भवभूति-महाकविर्ववन्दे। उपसंहारे च महाकवितल्लजेन—

'पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि सेयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च।
तामेनां परिभावयन्त्वभिनयैर्विन्यस्त-रूपां बुधाः
शब्द-ब्रह्म-विदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम्॥'

इति अनेन भरतवाक्येन शुभशंसनात्मकेन, जगन्मातेव गङ्गेव च जगन्मनोहारिणी चेयं श्रीमद्रामायणकथा जगत् पापेभ्यः पवित्रयति, भूयांसि श्रेयांसि च परिबृंहयति, यतः, ततः शब्दविदः परब्रह्मविदश्च महाकवेः सर्वतन्त्र-स्वतन्त्रस्य उत्तररामचरितात्मना परिणताम् इमां ताम् एनाम् अभिनयैर्विन्यस्तक्रमाकारां कथागाथां सर्वेऽपि बुधाः सदा परिशीलयन्तु च परमानन्दम् अनुभवन्तु चेति शुभम् आशास्यते इति।

---

# भारतीयश्चिन्ताप्रवाहः

[ निबन्धकः—श्रीयुक्त-प्रभातचन्द्र-चक्रवर्त्ती काव्यतीर्थः, एम्.-ए. ]

प्राचीनकालात् प्रभृति भारतवर्षस्य चिन्ताप्रवाहः कं पन्थानमवलम्बमानः प्रावहत्, भारतीयानामार्याणां मनीषा युगभेदात् केन कियता वा प्रकारेण स्वं प्राकाशयत्, समाजस्य धर्मस्याध्यात्मजीवनस्य च विविधैर्विपरिवर्त्तनैर्विपर्ययैश्च भारतस्यान्तर्जगति कदा कथम्भूतमान्दोलनमुपातिष्ठच्चेति ज्ञातुमनेके विशेषतो भारतीयाः सत्यमेवाऽऽग्रहं पुष्णन्तीति। येषां वेदा उपनिषदो धर्मशास्त्राणि दर्शनानि शिल्पशास्त्राणि नाट्यानि काव्यकलाश्च जगतो ज्ञानागारे अतुल्यां सम्पदमार्पयन्, येषां विश्वतोमुखी

प्रतिभा तावतां पदार्थानां गूढं तत्त्वमुद्घाटयत्, तेषां भारतीयार्याणां चिन्ताप्रवाहेषु ज्ञातव्यं शिक्षितव्यञ्चानेकं वस्त्वस्तीत्यत्र नास्ति स्तोकोऽपि विकल्पावसरः। एकदा ज्ञानचर्चया धर्मालोचनया च भारतं वर्षं जगतो गुरुस्थानमभ्यकरोत्, अद्यापि भारताद् बहिर्भारतस्य धर्म आचारपद्धतिश्च सुप्रतिष्ठौ दृश्येते।

ये तावद् वर्त्तमानकालस्यैवोपासकाः पुरावृत्तञ्चालीकस्वप्नधियाऽश्रद्दधते, ते नूनं ब्रूयुः—यानि युगानि अतीतगर्भेऽन्तर्दधिरे तेषां चिन्तास्रोतोऽनुसन्धानेन किमस्ति फलमिति। तथाऽपि किं नामैतदपि नावश्यं स्वीकर्त्तव्यम्— ये तावदद्यत्वे दुःस्थाः पतिताश्च वर्त्तन्ते तेषां पूर्वस्मृतेः क्षीणं रेखामात्रमपि नितरां गौरवसामग्रीति। यत् सत्यम् अतीतस्य गौरवोज्ज्वलां स्मृतिं विनाऽद्यत्वे जगतः सभ्यानामुन्नतानाञ्च जातिसमूहानामन्वत्तं नास्ति भारतस्य स्पर्ध्यं वस्त्वन्तरं किमपीति।

'प्राचीनभारतस्य चिन्तेतिहासः' इत्यस्मिन् वाक्येऽपि बहूनां विप्रतिपत्तिः संशयश्चापि सञ्जायमानौ सम्भाव्येते। यतो भारतीयसाहित्यस्य दुरपनेयः कलङ्कस्तावदितिहासस्याभावः। अस्माकं देशस्य वास्तव इतिहासो वर्त्तते नवेत्येतदेव विपश्चितां सन्देहविषयः। प्रतिपाद्यविषयाणां यथायथं दैशिकः कालिकश्च विवरणोपन्यास एव यदीतिहासस्यासाधारणं लक्ष्यं स्यात्तदा वयममुन्नतहृदयेन संस्कृतसाहित्ये वस्तुत एवेतिहासाख्यं किमपि वस्तु नास्तीति प्रतिपत्स्यामहे। आर्याणाम् इतिहाससंज्ञयाऽभिहितेष्वपि रामायणमहाभारतपुराणादिषु देशकालयोरुल्लेखो नास्तीति।

इदं तावदादावेवतन्निबन्धपाठकाः स्मारयितव्या यत् प्राचीनभारतस्येतिहाससङ्कलनं नैतस्य प्रबन्धस्य विषयः। जातीयस्य वैयक्तिकस्य वा जीवनस्याभ्यन्तरे मानवानां चिन्ताशक्तेर्यो नाम विकासः परिदृश्यते, इतिहासनिबद्धानां लोकप्रसिद्धानाञ्च व्यापारपरम्पराणाम् आविर्भावतिरोभावाभ्यां सह मानवानामन्तर्जगत्स्वपि कथङ्कारं नवनवा भावाः प्रादुर्भवन्ति तदेवास्मिन् प्रारिप्सिते प्रबन्धे किञ्चिद् विवरीतुं यतिष्यामहे।

वेदमन्त्रान्, उपनिषद् उदात्तगम्भीरां भारतीम्, गुरुपरम्परागतानि शास्त्रवाक्यानि च द्वारीकृत्य या नाम भारतीया चिन्ताधारा प्रवाहितासीत् निबन्धेऽस्मिन् तामेव मनागालोचयिष्यामः।

सृष्टेः क्वचन सुप्रभाते मानवानां चिन्ताशक्तिः प्राथमिकमुद्बोधमविन्दत, प्रकृतेर्वा केनचनानिर्वाच्येन स्पर्शेन तेषां मनोराज्येषु कल्पना स्फुरणमभजतेत्यति हि नाम दुर्वचमेतत्। यया हि मननव्यापारशक्त्या मानवा इतरेभ्यो जीवेभ्यः प्राधान्यमधिकर्त्तुमीहन्ते, सा किल तेषां साहजिकी शक्तिर्नाम। मानवाश्चिन्ताशक्त्या सहैव जायन्ते, देहपिण्डस्याभिवृद्ध्या सह तेषां चिन्तादयो मानसिकवृत्तिनिचया अपि विकसन्ति। पण्डिता ब्रुवन्ति—बहिर्जगति समागतानां मानवानां यदा ज्ञानवहासु धमनीषु स्पन्दः समुपजायते तदा तेषां चिन्ताशक्तिः शनैः शनैरुन्मिषति। चिन्ता नाम काचिन्मानसी वृत्तिरित्यतश्चिन्तायाः पुरावृत्तं मानवानां मनसः पुरावृत्तमिति ब्रुवाणा नासत्यभाषणदोषेण स्पृश्येमहि।

मनसा सह जगतः प्रमात्रा सह प्रमेयस्य वा नितरां निबिडः सम्बन्धः, एकं विनाऽपरः कदापि न कर्मणे प्रभवति। बाह्यं जगदवलोकयतां मानवानां मनसि यो हि नाम प्रतिबिम्बः पतति, यो वा संस्कारः समुद्भवति तत एव चिन्ताया जन्म। एकतश्चिन्ताकुशलं चेतोऽन्यतश्च चिन्तनीयं जगदिति द्वे एवाऽऽश्रित्य प्रवर्त्तते चिन्ताया इतिहासः। मानवीयं जीवनं विश्लेषयन्तो वयं तेन सह चिन्तायाः कथम्भूतो निरवच्छिन्नः सम्बन्ध इति ज्ञातुमर्हामः। प्राकृते जगति समाजे धर्मे अध्यात्मविषये च मानवानां यावन्ति ज्ञानान्युत्पद्यन्ते तेषां सर्वेषामेव मूले चिन्तायाः किञ्चन प्रस्रवणमनुस्यूतं वर्त्तते।

न तावन्मानवानां सर्वास्वेव चिन्तासु स्वाधीनभावो वैशिष्ट्यं वा वर्त्तते। तेषां चिन्ताया गतिस्तावद् भूयसा वंशस्य धर्मस्य स्थानविशेषस्य च वशीभूता प्रवर्त्तते। मानवानां चिन्तां तावत् प्राधान्येन समष्टिगता समाजगता व्यक्तिगता चेति त्रिधा विभजितुं शक्नुमः। सन्ति च कियन्तश्चिद्

विषया यांस्तावत् प्रायेण सर्व एव नूनतयाऽधिकतया वा चिन्तयन्ति। अन्यतश्च कचिद् युगे किञ्चन चिन्तास्रोतस्तथा प्रबलं भवति यथा तत् सर्वेषामन्तरात्मानं प्रकाशयति। इयमेव समष्टिगता वा समवेता वा चिन्तेत्युच्यते। या नाम समाजविशेषेषु निबद्धा सैव सामाजिकी चिन्ता। समष्टेः समाजाच्च पृथग्भूय स्थितानां मानवानां या नाम चिन्ता सैव वैयक्तिकी चिन्ता। मानवानां सामाजिकी वैयक्तिकी च चिन्ता प्रायेणै-वैकरूपा न भवति। कस्यापि चिन्ताशीलस्य जनस्य चिन्ताप्रवाहे विश्लेषिते अन्विष्टे च तत्र साधारण्येन प्रोक्तास्तिस्र एव चिन्ताधारा अस्माभिर्द्रक्ष्यन्ते।

संहितायाम् उपनिषदि धर्मसूत्रे दर्शनशास्त्रेषु च भारतस्य चिन्ताधारा अपि त्रीनेव पथः प्राप्य प्रावहन्। संहितया मन्त्रभागद्वारेण चाऽऽर्याणां या मनोवृत्तिः प्रकटिताऽस्ति सा बाहुल्येन सार्वजनीना। वेदमन्त्राः प्रकृतिसरलानामार्यहृदयानां पुञ्जीभूतः पवित्र उच्छ्वासः। तेषु मन्त्रेषु वयं देवानामस्तितायामचञ्चलं विश्वासम्, यज्ञहोमादीनामनुष्ठानेन देवानां प्रीत्युत्पादने च प्रभूतम् उत्साहम् उपलभामहे। भूयांसो वेदमन्त्रा एव तदानीं जनसाधारणानां सम्पदासीत्। कियन्तः पुनः कियत्सुचिदृषिपरि-वारेष्वेव संबद्धा आसन्। धर्मचिन्तायां धर्मानुष्ठाने च ऋषिमण्डलीनां परस्परं विरोधो नासीदिवेति प्रतिभाति। उपनिषत्समयादेव सामाजिक्या वैयक्तिक्याश्च चिन्ताया स्पष्टो निर्देशः प्राप्यते।

'चिन्ते'त्यनेन का शक्तिः का वा मानसिकी वृत्तिरस्माभिरभिप्रेयते मुखबन्धे तदपि मात्रया वक्तव्यपथमापतत्येव। आदौ तावच्चिन्ताया यथार्थलक्षणनिर्देशो नितरां दुष्करः। विप्रतिपद्यन्ते हि वादिनश्चिन्तायाः स्वरूपभेदमधिकृत्य। वयं पुनरत्र बह्वर्थवादिनं चिन्ताशब्दमधिकुर्मः। मानवानामिच्छा चाभ्यन्तरीणप्रेरणा च, अनुभवः कल्पना च, सत्यानु-सन्धानम् अन्तर्दृष्टिश्च, ज्ञानं विज्ञानञ्च सर्वमेवैतच्चिन्ता चिन्ताया रूपभेदा वा। संक्षेपतः पुनः सर्वमानवानामन्तर्जगदेव चिन्ताया राज्यम् इति

वक्तव्यम्। तस्याभिव्यक्तिः स्फुटा च निर्देशयोग्या च, यद्वि विज्ञानसम्मतं लोकप्रसिद्धञ्च न तावदेव मानवानां चिन्ता। मानवीया चिन्तागतिरसङ्ख्येया चानिर्देश्या च। मानवजीवनस्य दीर्घदीर्घेष्वितिहासेषु एवं नाम काश्चन चिन्ता आभासन्ते यास्तावद्सुप्रचारिता अपि सुशृङ्खलं न संबद्धा अपि नैकान्तत उपेक्षणीया भवितुमर्हन्तीति। मानवजीवनस्येव चिन्ताशक्तेरप्यस्ति शैशवं यौवनं वार्द्धकञ्च। यांश्च वयम् असभ्या इति वा अनुन्नतजातीया इति वा जुगुप्सामहे तेषां क्षीणानामपरिस्फुटानां वा चिन्ताप्रवाहाणां नास्तीतिहास इत्यप्यवाच्यमेव।

केचिच्चिन्ताया इतिहासं दर्शनचर्च्चाया इतिहासस्य पर्यायान्तर्गतं मन्यन्ते। वस्तुगत्या द्वयमिदं नैकं वस्तु। उभयोः पार्थक्यञ्च सुमहमेव। दर्शनेतिहासापेक्षया चिन्तेतिहासो दूरव्यापी। यत् सत्यं न कदापि मानवानां समग्रा चिन्ताशक्तिः केवले दर्शनशास्त्रानुशीलने व्यापृता आसीदिति। कस्याश्चन जातेश्चिन्तेतिहास इत्युक्त्या विज्ञाने धर्मे दर्शने साहित्यादिषु च प्रभूततमेषु विषयेषु तस्याश्चिन्तायाः कल्पनायाश्च प्रसार इत्येव वयं प्रतीमः। दार्शनिकी चिन्ता चिन्तेतिहासस्य कश्चनाध्यायो वाऽंशविशेषो वेति ग्रहीतुं शक्यते। साहित्येतिहासोऽपि चिन्तेतिहासाद्न्य एव। इदानीञ्च भारतीयाः केचन कृतविद्या भारतीयदर्शनशास्त्रस्येतिहासं विरचय्यास्माकं बहुमानास्पदं संवृत्ताः।

चिन्ताप्रवाहेभ्य एव जातीयजीवनस्य यथार्थ इतिहासोऽन्विष्यान्विष्य बहिष्कर्त्तव्यः। यज्जातीया मानवा यावतीमुन्नतिमधिचक्रुस्तेषां चिन्ताधारास्वपि तावानुद्भवो भावस्तावती चोच्चैस्तरां तत्त्वानुसन्धित्सा दृष्टिपथमधिरोहतः। चिन्ताशीलतायास्तुलादण्डसाहायकेनैव वयं प्राच्यां 'ग्रीक्'-जातीयानां महत्त्ववैशिष्ट्ये अभिनिवेशाभ्युदयौ चोपलभामहे। बहोः कालात् प्रभृत्येव युरोपखण्डे दार्शनिकदिशा इतिहासचर्च्चा समारब्धा। कस्याश्चन जातेरुत्थानपतनयोर्वृत्तान्त एव नास्या यथार्थत इतिहासः। जातीयजीवनस्य यथार्थेतिवृत्तमूलसूत्रं तस्याश्चिन्ताप्रवाहे-

ष्वन्तर्लीनं वर्त्तते। भावप्रवाहं चिन्ताप्रणालीं वाऽननुसन्दधता लिखित इतिहासः कदाऽपि यथार्थेतिहासपदवाच्यो न स्यात्—यच्च स्यात् तत् केवलं मांसमज्जवर्जितः कङ्कालो वृत्तव्यापाराणां सूचीपत्रमात्रं वा।

कथमिदं यद्द्यापि भारतस्य चिन्तेतिहासो न यथायथं लिखितः। न जाने कियद्भिर्दिवसैरैतिहासिकानां दृष्टिरत्राऽऽकृष्टा भवेदिति। ये तावदस्माकं मध्ये इतिहासमालोचयन्ति ते प्रायेण पुरावृत्तस्य बहिरावरणे प्राचां नृपतीनां जन्मपत्रिकारचनायां चैव व्यग्रा वर्त्तन्ते। परं कथं कथांशानां प्रादुर्भावः कथं वैतेषां पश्चाच्चिन्तास्रोतः प्रच्छन्नं वर्त्तते तत्तानि नानुसन्धातव्यानि मन्वते। पाश्चात्या विद्वांसो महता प्रयत्नेन ग्रीस्-रोमयुरोपाणां चिन्ताधारायाः सुविस्तृतम् इतिहासं व्यरचयन्। तमिममितिहासं पठतामस्माकं सुखञ्च दुःखञ्च युगपदुपतिष्ठेते। सोऽयं दुःखहेतुर्यत् पृथिव्यां यो हि भूखण्डः प्रथमं सभ्यतालोकेन समुद्भासित आसीत्, एकदा यस्य ज्ञानस्य धर्मस्य चोपदेशमन्यजातीया उत्कर्णाः श्रुतवन्तः, यस्य चापत्यानां पृथुतरायाश्चिन्ताशीलतायाः साधनायाश्च फलमद्याप्यक्षयकीर्त्तिस्तम्भरूपेण वर्त्तते तस्य पुण्यस्थानस्य भारतवर्षस्य निर्मलचिन्ताप्रवाहेतिहासो नास्ति। किमिदमल्पं परितापपदम्!

प्रायः सर्वेषामेव काचिद् विशिष्टा साधना विशिष्टा च चिन्ताधारा वर्त्तते। इयमेव तेषां स्वकीया सम्पत्। यथा वर्णगतं देशोचितम् आचारनिष्ठञ्च वैलक्षण्यं मानवान् स्वस्वश्रेण्यां व्यभाजयत् एवं चिन्ताशक्तेस्तारतम्यमपि मानवेषु विपुलं व्यवधिं समसृजत्। स्वल्पमात्रं प्रणिदधतैवेदं सुज्ञेयं यद् ये नामाद्यत्वे जात्या दूरं विभिन्नाः, ऐक्येऽपि पूर्वपुरुषस्य तेषां चिन्ताप्रणाली कियन्नाम भिन्नं रूपमवालम्बत। कस्यापि विषयस्य तथ्यानुसन्धानवेलायां कस्यचिद् भारतीयस्य कस्यचन युरोपीयस्य च चिन्ताप्रणाली प्रायो नैकविधा परिदृश्यते।

'विश्वस्य जातिसङ्घेषु कुतस्तावद् भारतस्य यथार्थतो वैशिष्ट्यमि'ति प्रश्ने नृतत्त्वं भाषातत्त्वं वाऽनाश्रित्य वयं स्वल्पेन वचसा 'भारतस्य प्राधान्येन

वैशिष्ट्यं तस्य चिन्तायाम्' इत्येवोत्तरयितुं शक्नुमः। भारतीया आर्य-मनीषिण इतरासां जातीनां तुलनया क नामाऽऽत्मनः स्वातन्त्र्यं निर्वोढु-मर्हन्तीत्यनुसन्दधतामस्माकं दृष्टिरादावेव तेषां चिन्ताप्रवाहेषु निपतिष्यति। भारतस्य शिक्षादीक्षे, आचारधर्मौ, भुक्तिमुक्ती इत्येतेषां सर्वेषामेव भावानां मूले तस्य चिन्ताविशेषस्य प्रभावः स्पष्टत उपलभ्यते। निखिलेषु विषयेषु ज्ञानविज्ञानयोः परां काष्ठामुपदर्शयितुमशक्नुवतोऽपि भारतवर्षस्य चिन्ता-धारायामस्ति तथाविधं किञ्चन वैशिष्ट्यं तथाविधञ्च किञ्चनानन्यसाधारण्यं यन्नाम चिरायैव भारतमन्यस्या जातेरन्यस्माद्देशाच्च पृथक्त्वेन प्रति-पादयिष्यति। इदमेव वैशिष्ट्यं भारतस्य प्राणभूतम्, इयमेव भारतस्य चिरागता साधना।

निबन्धमिमं निबध्नतो मे मनस्यादावेवेदं प्रश्नत्रितयं समुदैत्। तत्र क तावद् भारतीयचिन्ताप्रवाहस्य मूलम्? कुतः प्राथमिकी चिन्ता सूत्रपात-मनुभूतवती? कानि च सन्त्यस्माकं भारतीयचिन्ताया इतिहास-निबन्धनोपयोगीन्युपादानापरपर्यायाण्युपकरणानीति। यद्यपि समाधा कष्टकल्पितमेव, तथाऽप्यवसरेऽस्मिन् प्रश्नानामेतेषामाविर्भावः प्रस्तावोचित एवेत्यत्र नास्ति सन्देहः। प्रथमत उपकरणमवलम्ब्यैव कथा प्रस्तूयताम्। अवितथः किलायं वादो यच्चिरागतात् प्रवादात् आर्षग्रन्थाच्च प्राचीन-भारतस्येतिहासनिर्माणविधौ नास्ति नः सामग्र्यन्तरमिति। लोक-सिद्धानामैतिह्यानां विद्वद्भिर्विप्रतिपन्नेऽपि प्रामाण्ये वयमस्मिन् प्रस्तावे विश्वासायोग्यतया न तदेकान्तत उपेक्षितुमर्हामः। येषां सभ्यताया आदर्शस्य वाऽविच्छिन्नधारं पुरावृत्तं नास्ति तेषां समीपे प्रचरता-मैतिह्यानामपि भूयिष्ठं मूल्यमस्तीत्यकामेनापि स्वीकरणीयम्। तत-श्चान्वेष्टव्यं क भारतीयचिन्ताया उत्सः। येषां चिन्तामधिकृत्य निबन्धो विरच्यते ते च के इति। ये तावच्छास्त्रे ऋषित्वेन श्रुतर्षित्वेनाऽऽचार्यत्वेन वा कीर्त्तितास्तेषां सत्यानुसन्धानेषु ध्यानेष्वभिनिवेशेषु चैव वयम् अन्तर्जगद्-विषये बहिर्जगद्विषये च भारतस्य विपुलायाश्चिन्ताया आभासमधि-

गच्छामः। मन्त्रद्रष्टृष्वृषिष्वेव तस्याः प्रथममुन्मेषमवलोकयामः। सेयं चिन्ताधारा त्रिपथगामिनी गङ्गेवाऽऽध्यात्मिकाधिदैविकाधिभौतिकाख्याभिस्तिसृभिरेव धाराभिरवहत्। ये खलु दिव्यदृष्टिसम्पन्ना येषां साहजिकी सम्पत् प्रतिभा तेषामेव हृदये ज्ञानस्य प्रथमालोकसम्पातः सम्पद्येतेत्यत्र को वा विस्मयावकाशः। ब्रह्मविदाम् ऋषीणां मुखादेव भारते धर्मस्य ब्रह्मविद्यायाश्च भित्तिरूपा पवित्रा वेदवाणी बहिरभूत्। ऋषयो दिव्येन चक्षुषा सर्वेषां पदार्थानां चरमं तत्त्वमवलोकयितुमलमासन्। तेषामज्ञेयं दुर्ज्ञेयं वा जगति किञ्चन नासीत्। यदा शास्त्रग्रन्थो न प्रणीतः, शिक्षार्थं चतुष्पाठी वा विद्यालयो वा न व्यवस्थापितः, पाण्डित्यप्रकाशानुगुणा सभा न प्रतिष्ठापिता, स्मरणातीते तत्रापि युगे इमे मनीषिणो ज्ञानबलेन ब्रह्माण्डस्य निखिलं रहस्यजालं भेत्तुमलमासन्। एत एव 'वेदानाम् ऋषय' इति प्रसिद्धाः।

ततश्चाजायन्तान्यविधाः केचन प्रतिभानवन्तः पुरुषाः। यद्यपि नेमे पूर्वोक्ता ऋषय इव जन्मना दिव्यज्ञानसम्पन्नास्तथाऽपीमे अभ्यासेन गाढाभिनिवेशेन चर्षिपदवीमलभन्त। गुरुमुखादागतस्य शास्त्रोपदेशस्य श्रवणादेष्वार्षं ज्ञानं प्रत्यभादित्यतस्ते साधारण्येन श्रुतर्षिसंज्ञयाऽभिधीयन्ते। भावियुगजातानामल्पायुषामल्पबुद्धीनाञ्च जीवानां ज्ञानोन्मेषार्थं बोधसौकर्यार्थं चैते श्रुतर्षयो वेदाङ्गादीनि शास्त्राणि प्रणिन्युः। ऐतिहासिकविचारमार्गे पुनरिदमेव भारतीयसाहित्यस्य मूलमिति प्रतिभाति। वेदाध्ययनस्य ब्रह्मविद्यालाभस्य वा साहायकमनुतिष्ठन्ति शिक्षाकल्पादिशास्त्राण्यत्रैव युगे व्यरच्यन्त। ऋषित्वेन प्रसिद्धा मनु-व्यास-यास्क-पाणिनिप्रभृतयः शास्त्रकारा ज्ञानस्य द्वैतीयीकभूमिकायाः स्रष्टारो द्रष्टारो वेति वक्तुं शक्यम्।

अस्तमिते ऋषियुगे आचार्या आविरासन्। वात्स्यायनः शबरस्वामी प्रशस्तपादः पतञ्जलिः शङ्कराचार्यश्चेत्यादयस्तत्तच्छास्त्रभाष्यकृत एवास्माभिराचार्यत्वेन गृह्यन्ते। वेदादिशास्त्रनिष्णातधियामेषामाचार्याणामपि

प्रतिभा नाल्पीयस्यासीत् । ऋषिप्रणीतानां शास्त्राणां व्याख्यातृभिरप्येभिर्निबद्धे ग्रन्थजाते मौलिकचिन्ताया अपि निदर्शनं प्रभूतमेव परिदृश्यते । शास्त्राणां गूढतात्पर्यमाविर्भावयद्भिरेतैर्यथा सूक्ष्मतमायाश्चिन्तायाः साधनायाश्च परिचयो दत्तस्तत्तावदवलोकयन्तः सर्वे एव विस्मयमधिगच्छेयुः । शास्त्रव्याख्यानप्रवृत्ता आचार्यपादाः समये नवीनामपि चिन्ताप्रणालीं प्रादर्शयन् । मूलस्य चाशयप्रकटनव्याजेनानेकानि नूतनतथ्यान्याविरकुर्वन् । प्रायेण सूत्रात्मकानि ऋषिप्रणीतानि शास्त्राणि तथा स्वल्पाक्षराणि यथाचार्याणां व्याख्यानमन्तरेण बहुत्रैव मूलस्य तात्पर्यं हृदयं नाधिरोहति ।

इदानीं द्रष्टव्यं कुत्र चिन्ताया मूलं कथञ्च चिन्तायाः सूत्रपातनमिति । पूर्वोक्तमेवात्र मात्रया स्मारयितव्यम् । यदा मानवाः स्वेन स्वभावसरलेनोन्मुक्तेन च मनसा विपुले विश्वे विस्मितनयना नेत्रमपातयन् तदा तेषां मनोराज्ये शनैश्चिन्तया पदं कृतम् । अदृष्टपूर्वेण प्रकृतेर्दृश्यपर्यायेण तस्या मनोहरया रूपराज्या च मानवानां चेतसि चिन्तातरङ्गः स्फीतिमानमलभ्यत, केनचिदज्ञातमधुरेण भावेन तेषां प्राणाः स्पन्दनमनुबभूवुः । अयं प्राणस्पन्द एव चिन्ताशक्तेर्वाक्शक्तेश्चोद्बोधको वाऽभिव्यञ्जको वा भवति । भीतेर्विस्मयाद्वा मानवानां मुखात् सङ्गीतझङ्कारवत् काकलीवद्वा योऽव्यक्तो ध्वनिर्निरगात् स एव क्रमेण परिमार्जितः परिशोधितश्च मानवानां भावप्रकाशानुगुणेन भाषात्मना पर्यणमत्, भावो भाषा च दृढं संश्लिष्टौ । अनयोरन्योन्यापेक्षित्वं स्पष्टमेवानुभूयते । असति वाग्विभवे मानवाश्चिन्तायामप्यर्हाः स्युर्नवेति विषयोऽयं विद्वद्भिर्विचार्य एव । भाषया मूर्त्तिमती मानवानां चिन्ता अनन्ते पथि प्रावहत् ।

समन्ततो दुर्भेद्यं रहस्यजालं वितत्य प्रकृतिः स्वेन मनसा स्वामलौकिकीं क्रीडामनुतिष्ठन्ती विराजते । सा चिरमेव तन्द्रेति कृत्वा मानुषीं बुद्धिमुपेक्षमाणैवास्ते । मानवास्तु न कदापि निष्क्रियस्य द्रष्टुरासनमध्यासीनाः प्रकृत्या क्रियमाणानि कर्माण्यवलोकयितुमलमासन् ।

सपरिसरं ज्ञानमादाय गृहीतजन्मानोऽपि ते विविधैरुपायैः प्रकृतिमायत्ती-कर्त्तुं प्रयासमातिष्ठन्। प्रकृत्यै प्रभवितुं यत्नवन्तोऽभूवन्—आदौ स्तुत्यादिभिरन्ततश्च स्वेन बुद्धिमहिम्ना स्थावरजङ्गमात्मकं सर्वं जगदनुकूलयितुमैहन्त। वैदिकयुगे ऋषयः स्वस्वकल्याणेप्सया अग्निसूर्यजलवायुमयान् पदार्थान् यज्ञेन होमेन स्तुत्यादिना च तोषयितुमयतन्त। क्वचिदेतेष्वपि ते प्रभुतया वर्त्स्यन्तीति न तदानीमपि ज्ञातुमलमासन् नाम। यदा पुनस्ते यथार्थत एवान्वभूवन् यदेकैव महासत्ता तेषामन्तर्बहिश्च विराजमाना चन्द्रसूर्यावारभ्य विश्वस्याणुपरमाण्वादि यावत् पदार्थानेव परिचालयति च नियन्त्रयति चेति, तदा तेषामात्मनः क्षुद्रबुद्धित्वभावना अशरणत्वचिन्ता च व्यपैताम्। ज्ञानगौरवेण तेषां हृदयं बलवदभूत्, आत्मत्राणार्थं देवेष्वावेदनकृतिश्च ह्रासमलभत। प्रकृतेरनुग्रहप्रत्याशया-किञ्चित्करीं स्तुतिं घृताहुतिश्चापास्य तेऽब्रुवन्—'कस्मै देवाय हविषा विधेम?' इति। यत्तावद् दैवतानां दैवतम् अक्षरं परिपूर्णञ्च तदेवानुसन्धातुं प्रवृत्ता अभवन्—खण्डं विहाय भूम्नोऽन्वेषण एव प्रावर्त्तन्त। अत्रैवोपनिषद् आत्मचिन्ताया वा प्रारम्भः। इति।

---

## समालोचनम्

[ निबन्धकः—श्रीवामाचरणभट्टाचार्यः ]

श्रीमद्भिर्गुरुपदहालदारमहोदयैर्निबद्धो विद्याप्रस्थानं नाम प्रबन्धो विगतपञ्चपञ्चाशदधिकाष्टादशशतशकाब्दीयश्रावणमासस्य संस्कृतसाहित्य-परिषत्पत्रिकायां प्रकाशं गतोऽस्माकं नेत्रपथमधिकृतवान्।

तमिमं मीमांसान्यायप्रकाशपङ्क्तेः पूर्वोत्तरमध्यभागेषु क्वचन पदानां योजनया परिहारेण चान्यथाकृतानुपूर्वीकस्यार्थसंग्रहग्रन्थस्य प्रतिलिपिबहुलं विद्याप्रस्थानमित्येतदाख्यं प्रबन्धरत्नविशेषं पुनः पुनः प्रकाशं नयन्त्यानया

संस्कृत-साहित्य-परिषत्-पत्रिकया मन्ये नूनमितो विद्यायाः प्रस्थान-मेवोद्घोष्यते ।

रत्नानामाकरभूतेऽस्मिन् भारतवर्षे पूर्वपूर्वाचार्यविरचितानि सन्ति तावदनेकानि दुर्ज्ञेयतत्त्वानि प्रच्छन्नानि च ग्रन्थरत्नानि, तेषाञ्च रत्ना-माहरणमस्माकमपि नानिष्टं, तथाप्युपह्रियमाणासु प्राचीनग्रन्थपङ्क्तिषु संयोजनादिवैगुण्यादिना समुत्पादितैस्तीक्ष्णदोषकण्टकैर्भिद्यन्तेतरां विदुषां हृदयानि इति ममायं प्रयत्नः ।

मयात्र स्वीयप्रबन्धे पाठकानां स्पष्टतयावगतये विद्याप्रस्थान-प्रबन्धीयालोच्यस्थानस्य तदादर्शभूतार्थसंग्रहग्रन्थस्य च पाठान् क्रमे-णोल्लिख्य तत्र समालोचनीयप्रबन्धे ये किल पाठवैरूप्याङ्गीकार-निबन्धना दोषविशेषा यश्चापि वा प्राचीनग्रन्थतोऽपकर्षस्ते विदुषां पुरत उपस्थाप्यन्ते । परीक्षणीयं सद्भिर्गुणदोषविवेकिभिस्तेषां तत्त्वमिति प्रार्थ्यते ।

विद्याप्रस्थाने—कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः । कर्मजन्यं फलस्वाम्यं, कर्मजन्यफलभोक्तृत्वम् । स च यजेत स्वर्गकाम इत्यादिरूपः । स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्य-फलभोक्तृत्वं प्रतिपाद्यते । इति पाठः । ( संस्कृत-साः ६ष्ठवर्षे ४र्थखण्डे ) ।

अर्थसंग्रहे—कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः । कर्म-जन्यफलस्वाम्यं, कर्मजन्यफलभोक्तृत्वम् । स च यजेत स्वर्गकाम इत्यादिरूपः । स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्य-फलभोक्तृत्वं प्रतिपाद्यते । इति ।

न्यायप्रकाशे च—फलस्वाम्यबोधको विधिरधिकारविधिः । फल-स्वाम्यं च कर्मजन्यफलभोक्तृत्वम् । स च यजेत स्वर्गकाम इत्यादिरूपः । अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । इति ।

अत्रेदमालोचनीयम्। रेखाङ्कितस्थानव्यतिरिक्त उद्धृतविद्याप्रस्थान-प्रबन्धांशः सर्व एवात्रार्थसङ्ग्रहग्रन्थस्य प्रतिलिपिः, अर्थसङ्ग्रहग्रन्थः पुनर्न्यायप्रकाशस्य च्छायारूपः। तत्र न्यायप्रकाशे प्रागुद्दिष्टाधिकार-विधिरित्यत्राधिकारपदस्य स्वामित्वार्थे शक्ततया स्वामित्वस्य च किञ्चिन्निरूपितत्वावश्यकत्वेनात्र फलस्यैव तन्निरूपकत्वसिद्ध्या अधिकार-पदेन फलस्वाम्यपर्यन्तलाभे, बोधकत्वेन विधिपदार्थे तदन्वये च फल-स्वाम्यबोधको विधिरिति पर्यवसन्नमधिकारविधिलक्षणमुक्तम्।

तत्र हि फलस्वाम्यं न फलनिष्ठस्वत्वनिरूपितत्वरूपं, यागजन्यानां स्वर्गादिफलानामद्रव्यतया यथेष्टविनियोगार्हत्वरूपस्य स्वत्वस्य तत्रा-योगात्। नापि स्वजनकयागकर्तृत्वं तत् "अग्निहोत्रं जुहोति" इत्युत्पत्ति-विधावतिव्याप्तेः, तेनापि अग्निहोत्रहोमेनेष्टं भावयेदित्येवं स्वसाध्याग्नि-होत्रयागजन्यत्वस्य इष्टे बोधनादिष्टजनकाग्निहोत्रयागकर्तृत्वस्यापि बोधात्। अतोऽत्र स्वाभीष्टं स्वामित्वं निर्वक्ति—फलस्वाम्यमिति। स्वाम्यपदार्थतावच्छेदकस्य भोक्तृत्वातिरिक्तातिप्रसक्ततया फलपद-समभिव्याहारेणैव भोक्तृतात्वावच्छिन्नार्थः स्वाम्यपदेनोपस्थापयितुं शक्य इति स्वाम्यमात्रमननूद्य फलस्वाम्यमित्युक्तम्। फलस्वाम्य-मित्यस्य फलभोक्तृत्वार्थकतास्वारस्येऽपि कर्मजन्येतिपदान्तरसम्बन्धेन कर्मजन्यफलभोक्तृत्वमिति निष्कर्षप्रतिपादनं तु पितृभ्यो दद्यादित्यादा-वतिव्याप्तिवारणाय। अनेनापि पितृनिष्ठस्य तृप्तिरूपफलभोक्तृत्वस्य बोधनात्। न चात्रापि फलस्य दानरूपकर्मजन्यत्वेनोपस्थितिरित्यति-व्याप्तेस्तावतापि न परिहार इति वाच्यम्, कर्मजन्येत्यनेन स्वकीय-कर्मजन्यत्वस्याभिप्रेतत्वात्। पितृगततृप्तिफलस्य च पुत्रकर्तृकश्राद्ध-जन्यत्वेनात्र श्रुत्या अवगमात्।

एवमत्र फलभोक्तृत्व-फलजनकयागकर्तृत्वरूपविवक्षणीयार्थः फल-पदसमभिव्याहृतस्वाम्यपदेनैव लभ्यत इति न्यायप्रकाशे कर्मजन्येति-पदसम्बन्धमनादृत्य फलस्वाम्यबोधको विधिरधिकारविधिरित्येवं

लक्षणवाक्यमुक्तम्। भोक्तृत्वस्य त्वतथात्वेन विवरणे कर्मजन्यफल-भोक्तृत्वमित्येवमुक्तम्।

अर्थसङ्ग्रहकारैस्तु बालव्युत्पत्तये कर्मजन्यफलभोक्तृत्वबोधको विधिरिति वाक्ये स्वाम्यपदस्यैव कथञ्चिद्भोक्तृत्वार्थमधिगत्य कर्मजन्य-फलस्वाम्यबोधको विधिरधिकारविधिरित्युक्तम्। वस्तुतस्तु—एतद्-ग्रन्थकर्तृमते पुरुषविशेषणत्वेनाधिगतान्यधिकारपदवाच्यानि। तथाच फलभोक्तृत्वं फलभोगावच्छेदकमर्थात् पुरुषविशेषणमधिकारपदार्थ एव ; तद्बोधको विधिरधिकारविधिरिति तेषां शाब्दतात्पर्यम्।

विद्याप्रस्थाने तु निबन्धकेन तत्र रेखाङ्कितस्थाने अर्थसङ्ग्रहीय-"कर्मजन्यफलस्वाम्यम्" इति पाठं, कर्मजन्यं फलस्वाम्यमिति पदच्छेदं विधायान्यथाकारं गृहीत्वा कर्मजन्यफलभोक्तृत्वमिति व्याख्यातम्।

अत्रायमस्माकमाक्षेपविशेषः। कर्मजन्यत्वविशिष्टस्य फलभोक्तृत्वस्य प्रबन्धकर्तृमते 'यजेत स्वर्गकाम' इत्यादिवाक्यात् कथं लाभः। यजेत स्वर्गकाम इत्यसौ यागेन स्वर्गं भावयेदित्येवं यागजन्यत्वस्य स्वर्गे बोधान्निराकाङ्क्षतया पुनर्भोक्तृत्वे तदन्वयस्यासम्भवात्। अथ स्वर्गकामस्य यागजन्यस्य फलस्यापि भोक्तृत्वं कुतो लभ्यत इत्यपि वादिना प्रष्टव्यम्। तस्मिन् किमुत्तरं वाच्यमिति चेत्, उच्यते—यजेत स्वर्गकाम इत्यनेन स्वघटकपदवृत्त्या उपस्थापितस्य स्वर्गकामनिष्ठस्य स्वर्गोद्देश्यकयाग-कर्तृत्वस्य तदीयं फलभोक्तृत्वं विनानुपपत्त्या फलभोक्तृत्वमपि तेनैव बोध्यते। कर्मजन्यत्वविशिष्टस्य फलभोक्तृत्वस्य तु न तथाक्षेपलभ्यत्वं सम्भवति। स्वर्गोद्देशेन यागकर्तुर्यागजन्यस्वर्गस्यैव भोक्तृत्वज्ञानं यागे प्रवर्त्तकं नतु यागजन्यत्वविशिष्टस्य स्वर्गभोक्तृत्वस्य ज्ञानम्। यत् यज्जन्यं तद्भोक्तृत्वज्ञानं तत्र प्रवर्त्तकमिति व्याप्तेः। धूमार्थिना तत्कारणं वह्निः साध्यते इति लोकेऽपि दृष्टत्वात्। नच मुद्राकरप्रमादोऽयमिति वाच्यमुत्तरत्र प्रबन्धकेन स्वकीयप्रबन्धेऽर्थसंग्रहादिग्रन्थासमानाकारत्व-प्रतिपादनायैतादृशस्यैव लघुतराक्षरकृतस्य गुरुप्रमादकरस्यापि पाठ-

वैरूप्यस्य प्रायेणाङ्गीकृतत्वात्। परमत्राक्षरसमावेशस्यापि निबन्धककृत-प्रमादानुकूलत्वाच्च।

उपरिष्टात् "स्वर्गमुद्दिश्य यागं विदधतानेन स्वर्गकामस्य यागजन्य-फलभोक्तृत्वं प्रतिपाद्यते" इत्यर्थसंग्रहीयः पाठः प्रबन्धकेन गृहीतः। तत्रापीदं सुधीभिर्विभाव्यम्। "अनेन हि स्वर्गमुद्दिश्य यागं विदधता" इत्येवं न्यायप्रकाशीयसमीचीनपाठस्य विद्याप्रस्थानेऽनादरोऽज्ञानविजृम्भित एव प्रतिभाति। अस्मिंश्च पाठे यागं विदधतेति विधेयवाचकपदस्योद्देश्य-पदोत्तरत्वसम्पत्त्या 'उद्देश्यपदमुक्त्वा तु विधेयपदमाहरेत्' इति नियमो-ऽपि संरक्षितो भवति, भवति, च यागजन्यफलभोक्तृत्वप्रतिपादनपदार्थे स्वर्गोद्देश्यकयागविधायकत्वप्रयोज्यत्वस्य साध्यस्य स्वरसतो बोधः। तदत्र कमभिप्रायविशेषमाकलय्य प्रबन्धकेनार्थसंग्रहीयः पाठः समादृत इति नैव बुध्यते मादृशैः।

अतः परमधिकारविधेः केचन भेदाः प्रदर्शिताः। परं तु पूर्वोक्तलक्षण-ज्ञानं तथाविधान् भेदांस्तत्राधिकारविधौ नार्हत्येव। अत एवार्थसंग्रहे न्यायप्रकाशे च तादृशविभागो न कृतः। अस्तु, तत्राप्युदाहरणानि प्रायेणास्पष्टरूपाणि। क्रत्वर्थस्यापि नैमित्तिकानैमित्तिकभेदेन द्वैविध्य-मुक्त्वा तत्र द्वितीयस्यानैमित्तिकस्य विहितातिक्रमनिमित्तको निषिद्धा-चरणनिमित्तकश्चेत्येवं नैमित्तिकत्वोपन्यासेन भेद उक्तः। स कथं सङ्गच्छते? नैमित्तिकत्वानैमित्तिकत्वयोर्विरोधात्। तयोरविरुद्धत्वे पुनः क्रत्वर्थस्य तादृशविभाग एव नोपपद्यते।

"प्रयाजानां समिधो यजति तनूनपातं यजति इत्येवं विधिपाठक्रमाद् यः क्रमः स ब्राह्मणपाठक्रमादेव। यद्यपि ब्राह्मणवाक्यमर्थं विधाय कृतार्थं तथापि प्रयाजादीनां क्रमस्मारकान्तराभावात् तदेव क्रमस्मार-कत्वेन स्वीक्रियते" इति विद्याप्रस्थानप्रबन्धीयांशविशेषः। तत्र रेखाङ्कित-स्थानानि विहाय सर्वमर्थसंग्रहन्यायप्रकाशग्रन्थसमानानुपूर्वीमत्। रेखा-ङ्कितस्थलेषु अर्थसंग्रहीयपाठे बहुवचनस्थाने एकवचनं विधाय तदानुपूर्व्या

अन्यथात्वं सम्पादितं तत्रभवता प्रबन्धकेन। अत्रापीदमूहनीयम्। प्रयाजेषु ब्राह्मणवाक्यानि तावत् पञ्च पठ्यन्ते। "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति" इति। एतान्येव च ब्राह्मणवाक्यानि "यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि" इति ग्रन्थेन न्यायप्रकाशकृद्भिः पूर्वपक्षरूपेणाभिधाय क्रमस्मारकतयात्र तान्यर्थवन्तीति प्रतिपादितम्। प्रयाजानामिति पूर्वतनग्रन्थेन तान्येव ब्राह्मणवाक्यान्युपस्थापितानि। परत्र सुतरां तेषामेव निरर्थकत्वशङ्का साधूपयुज्यते। अतः प्रबन्धकस्य तत्र तत्रैकवचननिर्द्देशे केवलं कथञ्चन पाठभेदसम्पादनमन्तरेण कश्चिदभिप्रायविशेषोऽस्तीति न प्रतीयते।

न्यायप्रकाशार्थसंग्रहादिषु क्वचित् "नियमविध्याश्रयणात्" इति श्रूयते तस्यायमभिप्रायः—मन्त्रैः स्मर्त्तव्यमिति श्रुतिं कल्पयित्वार्थस्मारकतया मन्त्राणां सार्थक्यं यदि सम्पादनीयम् तदा दृष्टस्यार्थस्मरणस्य क्वचन प्रकारान्तरेणापि सम्पत्तिः स्यादिति तत्र पुनर्मन्त्राम्नानमनर्थकमेव इति कुतस्तत्सार्थक्यमिति नाशङ्क्यम्। मन्त्रैरेव स्मर्त्तव्यमित्येवं नियमविधेरेवात्र कल्पनीयत्वात्। कल्पितस्य तादृशनियमविधेर्नियमादृष्टद्वारा सर्वत्र सार्थक्यमस्तीति न कोऽपि दोष इति।

अत्र विद्याप्रस्थानप्रबन्धे नियमविधिसद्भावादित्येवं लेखो दृश्यते तत्र सद्भावादित्यस्यावश्यं विद्यमानत्वादित्यर्थ एव विद्वद्भिर्ग्राह्यः। परं तु मन्त्रैरेव स्मर्त्तव्यमितिश्रुतेरक्लृप्तत्वात् कल्पनाविषयीभूतायां तस्यां श्रुतौ तादृशविद्यमानत्वोक्तिः कथं सङ्गच्छते? आश्रयणादिति सुसङ्गतस्य स्वादर्शग्रन्थपाठस्य वा कुतः परित्यागः कृतस्तत्रभवता परानुलिपिप्रियेण प्रबन्धकेनेति परमविषयः शास्त्रदशामित्यन्यदपि बहूहनीयमत्र प्रबन्धेऽस्ति तदिह विस्तरभयेन नोपस्थापितम्। केवलं सङ्क्षेपतो दिग्दर्शनमेव कृतमित्यलं पल्लवितेन।

# समालोचनविमर्शः

[ निबन्धकः—कालीघाटवास्तव्य-श्रीगुरुपद-हालदारः ]

विद्याप्रस्थाननाम्ना प्रकाशितपूर्वाया मदीयप्रबन्धपरम्परायाः कञ्चिदंशविशेषमवलम्ब्य श्रीवामाचरणभट्टाचार्य्याभिधानेन केनापि समालोचकप्रकाण्डेन 'समालोचन' इत्याख्यया तीव्रकटाक्षबहुलं प्रबन्धमेकमत्र प्रकाश्य स्वस्य वैदुष्यातिशयख्यापनाय यत् प्रयासबाहुल्यमाविष्कृतं तत्र मदीयेष्वपि वक्तव्येषु क्षणं दत्तावधाना भवन्तु श्रीमन्तः पाठकमहाभागाः।

मया तावत् तत्र प्राचीनग्रन्थपङ्क्तयोऽपहृता इति समालोचकस्य प्रथम आक्षेपः। अत्रेदमस्मदीयमुत्तरम्। न खलु विद्याप्रस्थानं नाम मया नवीनं किमपि वस्तु प्रस्तूयते नापि नानाशास्त्रालोचनतत्परतया सुविदितवेदितव्ये विद्वद्वरसमाजे तत्प्रकाशनेन मे पाण्डित्यख्यापने प्रयासः, परन्तु ये नाम प्राचीनशास्त्रप्रस्थानभेदानवगन्तुमभिलषन्तोऽपि समयादिवैगुण्यादध्ययनाध्यापनादिनियमेन स्वाभिलाषपूरणासमर्थाः संग्रहग्रन्थप्रबन्धादिरूपान् सुगमानुपायानवलम्बन्ते तानेव लक्ष्यीकृत्य प्राचीनपद्धतेरेवेत्थं मम समुपस्थापनकौतूहलम्। एवञ्च लक्षणोदाहरणादिप्रस्तावे प्राचीनग्रन्थपङ्क्तिविशेषपरिग्रहः किं सत्यमेव दोषावहः? अर्थसंग्रहकारो लौगाक्षिभास्करो न्यायप्रकाशकारश्चापोदेवो द्वावेव खृष्टियसप्तदशशताब्दीप्रथमभागवर्तिनौ प्रायेण समकालयोरपि तयोरेकस्य बह्वीनां पंक्तीनामपरेण पदानुपदं किञ्चिद्वैरूप्येण वा परिग्रहेऽपि यदि नापराधस्तत्रा विंशशताब्द्यां विद्याप्रस्थाननिबन्धकस्य प्राचीनाभिमतलक्षणादिप्रदर्शनार्थं प्राचीनग्रन्थतो द्वित्रपंक्तीनां परिग्रहो हि कथं समालोचकहृदयभेदिकण्टकायमानदोषसम्पादकः स्यात्? सुप्रसिद्धेषु बहुषु प्राचीनग्रन्थकारेष्वपि तथा पंक्तिग्रहणरीतिश्चिरं प्रचरति, सति प्रयोजने यथाकालं दर्शयिष्यते।

* भट्टाचार्यमहोदयस्य प्राथमिकप्रबन्धगता दोषा हालदारमहोदयेनोपप्रदर्शिता अपि नैव मुद्रिता अस्माभिः, प्रबन्धस्य तस्य लेखकेनैव प्रत्याख्यातत्वात्। स० सा० प० स०।

'कर्मजन्यं फलस्वाम्यमि'ति विद्याप्रस्थानपाठे कर्मजन्येत्यनन्तरमापतितोऽयमनुस्वारः 'संयोजनादिवैगुण्यं' 'पाठवैरूप्याङ्गीकारं' वा घटयन् समालोचकस्य द्वितीयमाक्षेपविशेषं जनयति। अत्र तु सप्रश्रयमिदमङ्गीक्रियते यद्—मुद्रापनार्थप्रबन्धस्यानुलिपिकारस्यानवधानाद् मसीसम्पातवत् समापतितोऽयमनुस्वारो न खलु पदच्छेदार्थं प्रबन्धकेन प्रयुक्तः, नापि भोक्तत्वांशे कर्मजन्यत्वस्यान्वयोऽभिप्रेतः, अपि तु फलांशे। यद् भवतु, एकमेतत् प्रामादिकं स्थलं समालोचयतः पण्डितप्रकाण्डस्य भट्टाचार्यवर्यस्य प्रबन्धे कति प्रमादस्थलानि सन्तीत्यग्रतो दर्शयिष्यमाणानि विद्याप्रस्थानपौनःपुनिकप्रकाशनेन परिषदुद्घोषितप्रस्थानाया विद्यायाः सादरमुच्चैराह्वायकान्युपलभ्य समालोचकेनैवं समाश्वासो विधेयो यत् प्रमादो मनुष्यधर्म इति।

'स्वर्गमुद्दिश्य यागं विदधताऽनेन' इत्यर्थसंग्रहीयपाठो विद्याप्रस्थाने गृहीतः, 'अनेन हि स्वर्गमुद्दिश्य यागं विदधता' इत्येवं न्यायप्रकाशपाठस्तु 'नादृतः' इति मीमांसककेसरिणस्तृतीय आक्षेपः। अत्र उद्देश्यविधेयभावादितात्पर्यंतां यथायोगमन्वयचिन्तापरिश्रान्तिमसहमानेन समालोचकेन मय्यारोपितानां दोषाणामर्थसंग्रहकारेऽपि फलतः समापतितानामुद्धारे विद्वज्जनसम्मतं यादृक् समाधानं विद्याप्रस्थानेऽपि तथेति चिन्त्यम्।

"अतः परमधिकारविधेः केचन भेदाः प्रबन्धे दर्शिताः, किन्तु पूर्वोक्तलक्षणज्ञानं तथाविधान् भेदांस्तत्राधिकारविधौ नार्हति" इत्ययं पण्डितप्रकाण्डस्य समालोचकस्य चतुर्थाक्षेपभाषाविन्यासः। अत्रेदं मन्तव्यम्। "कर्मजन्यफलसाम्यबोधको विधिरधिकारविधिरि"त्येवं मत्प्रदर्शितलक्षणज्ञाने ह्यधिकारविधौ विद्याप्रस्थानवर्णितभेदानर्हत्वेन कथमकस्मात् समाक्रान्तः समालोचकवर्यस्तत्तु स्वयमेव स विज्ञातुमर्हति, अस्माभिस्तु दिङ्मात्रप्रदर्शनार्थं विद्याप्रस्थानधृते "भिन्ने जुहोती"त्युदाहरणे निरुक्तलक्षणसङ्गते न कोऽप्यन्तरायः परिलक्ष्यते। तथाहि "भिन्ने जुहोती"त्यादौ

होमरूपेण कर्मणा जन्यं यत् पात्रभेदचक्रभेदादिनिबन्धनाङ्गहीनतादोष-परिहाररूपं फलं तेनास्य विधेः क्रत्वर्थत्वं, यच्च पात्राद्यङ्गभेदे विध्यतिक्रम-निबन्धनदोषापनयनरूपं फलं तद् भोक्तृत्वमधिकारिणि बोधयतीत्ययं विधिर्निराबाधमेवोक्तलक्षणाक्रान्तः। शब्दतोऽनुपात्तमप्यधिकारिविशेषणं भवतीति शास्त्रदीपिकाप्रकाशादिकृद्भिः पूर्वाचार्यैः स्पष्टमुक्तम्। एवञ्च "तत्राप्युदाहरणानि प्रायेणास्पष्टरूपाणि" इत्याकारस्तस्य पञ्चमाक्षेपोऽपि प्रत्युक्तः। निरुक्तरीत्योदाहरणे लक्षणसङ्गतिसौकर्यात्।

"नैमित्तिकत्वानैमित्तिकत्वयोर्विरोधात्" इत्येवं हेतूपन्यासेन यस्तेन न्यायप्रकाशार्थसंग्रहमात्रावलम्बिना मीमांसकमन्येन षष्ठ आक्षेपः प्रदर्शितस्तत्रेदमस्मदीयमुत्तरम्। नैमित्तिकानैमित्तिकभेदेन क्रत्वर्थस्य प्रथमतो यद्द्वैविध्यमुक्तं तत्र प्राथमिकभेदे निमित्तशब्देन कर्तृनिष्पाद्यरूपं निमित्तं विवक्षितम्, तदधीनश्च यः ( क्रत्वर्थः ) तत्त्वं नैमित्तिकत्वम्, तद्भिन्नकत्वम्, चानैमित्तिकत्वम्। अतो विहितातिक्रमनिमित्तके निषिद्धा-चरणनिमित्तके च सामान्यतो नैमित्तिकसत्त्वेऽपि विवक्षितनिमित्ता-धीनत्वव्यतिरिक्तत्वरूपानैमित्तिकत्वसद्भावे न कोऽपि बाधः, न वा विभागानुपपत्तिः। अत्रैवं निमित्तिकत्वानैमित्तिकत्वनिर्देशस्तावन्नास्मत्-कल्पनाधीनः, अपि तु पदवाक्यप्रमाणपारावारपारीणमीमांसासाम्राज्यधुर-न्धर-भट्टशंकर-नारायण-परितोषमिश्रादिभिः पूर्वाचार्यैरेव व्यवस्थापितः। एतद्विस्तरावबोधार्थमर्थसंग्रहन्यायप्रकाशव्यतिरिक्तानामपि मीमांसासार-संग्रहमानमेयोदयतन्त्रटीकानिबन्धनादिग्रन्थानाम् आलोचनमावश्यकम्।

प्रबन्धावसाने पुनः प्राप्तकालेऽस्मिन्नवश्यविज्ञापनीये विषये क्षणमवधानं धीमतामभ्यर्थयामहे। प्रथमस्तावत् समालोचकेन "क्रत्वर्थस्य तादृश-विभाग एव नोपपद्यते। इति क्रमशः। प्रबन्धकः श्रीवामाचरणभट्टाचार्यः। वङ्गीयब्राह्मणसभा।" इत्येवं कृतावसानः प्रबन्धांशो यैरादर्शपत्रैः सम्पा-दकमहोदयानां करगोचरः कारितस्तान्येव पत्राणि समवलोक्य तत्रत्य-लेखानुसारेणैवाहं तदंशस्य विमर्शं "सर्वथा क्षन्तव्यम्" इत्यन्तं विधाय

प्रेषितवानस्मि सम्पादकमहोदयानां सविधे। ततश्च विज्ञापितोऽस्मि यत् समालोचकेन कथमपि समालोचनविमर्शसंवादमुपलभ्य(?) स्वकीयप्रमाद-संशोधनव्याजविशेषेणेदानीं यथामति कृतं बहूनामेव दोषाणां संशोधनम्, अन्तरान्तरा परिवर्त्तितं किञ्चित् परिवर्द्धितं च तत्प्रबन्धशरीरम्, 'क्रमशः' इति पदेन प्राक्सूचितमंशान्तरं चाग्रे संयोजितमिति। एतदवस्थं पूर्णविग्रहं तत्समालोचनमालोच्य साम्प्रतमपि केचन दोषाः परिलक्ष्यन्ते तत्र ३०३-पत्रोपान्त्यपंक्तौ "सर्वमर्थसंग्रहन्यायप्रकाशग्रन्थसमानानुपूर्वीमत्" इत्यत्र नवयोजितांशे पूर्ववदेव दोषः प्रतिभासते। तत्र "न कर्मधारया-न्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इति प्राचीनानुशासनविरोधः। यश्च "न च मुद्राकरप्रमादोऽयमिति वाच्यमुत्तरत्र प्रबन्धकेन स्वकीय-प्रबन्धेऽर्थसंग्रहादिग्रन्थासमानाकारत्वप्रतिपादनायैतादृशस्यैव लघुतराक्षर-कृतस्य गुरुप्रमादकरस्यापि पाठवैरूप्यस्य प्रायेणाङ्गीकृतत्वात्" इत्यादि नोपस्थापितः कश्चिदवान्तरो नूतनाक्षेपस्तत्रेदं पृच्छ्यते—कीदृशमस्मदङ्गी-कृतं तथाविधं पाठवैरूप्यम्? तत्प्रदर्शनं किं समुचितं नासीत्? किञ्च पाठवैरूप्येण किं गुरुप्रमादः क्रियते, किं वा गुरुप्रमादेन पाठवैरूप्यविशेषः साध्यते? इत्येतद् विविच्य लिखनमपि किन्नोचितं दाक्षम्मन्यस्य समालोचकवर्यस्य?

यच्चोक्तं ब्राह्मणवाक्यानां बहुत्वादेकवचननिर्देशो न सङ्गत इति, तत्रेद-मुच्यते। समालोचकमहोदयेन व्यक्तेर्बहुत्वेऽपि जात्यपेक्षमेकवचनं शास्त्रसिद्धमिति न क्वापि दृष्टम्?

यच्चोक्तं "न्यायप्रकाशार्थसंग्रहादिषु क्वचित् नियमविध्याश्रयणात् इति श्रूयते" इत्यादि………"अत्र विद्याप्रस्थानप्रबन्धे नियमविधिसद्भावा-दित्येवं लेखो दृश्यते तत्र सद्भावादित्यस्यावश्यं विद्यमानत्वादित्यर्थ एव विद्वद्भिर्ग्राह्यः। परं तु मन्त्रैरेव स्मर्त्तव्यमिति श्रुतेरसत्त्वात् कल्पना-विषयीभूतायां तस्यां श्रुतौ तादृशविद्यमानत्वोक्तिः कथं सङ्गच्छते?" इत्यन्तसमालोचने नियमविध्याश्रयणादित्येवं न्यायप्रकाशार्थसंग्रहयोः

पाठाद् नियमविधिसद्भावादिति प्रयोगो न समीचीन इति तत्रेदमस्मदीय-मुत्तरम्। नियमविधिव्याश्रयणादित्यनेन न खलु तत्र तत्र नियमविधेः कल्पनीयत्वं प्रतिपाद्यते ; परं तु नियमविधे विषयताया अवश्यसम्भा-वितत्वमेव समुपस्थाप्यते। मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वेन सर्वै-रेव मीमांसकाचार्यैर्लक्षणमुक्तम्। अत्र तादृशार्थस्मारकत्वेनैव तेषामर्थ-वत्त्वमुतान्यथेत्येवमाक्षेपे मन्त्रैरेव स्मर्त्तव्यमिति नियमविध्याश्रयणा-दित्युक्त्वा तत्र तत्राक्षेपः परिहृतः। एतेन नियमापूर्वार्थमन्त्रोच्चारण-मावश्यकम्। मन्त्राणामर्थस्मरणाद्दृष्टोभयफलत्वात्। यदि मन्त्रोच्चारणं दृष्टादृष्टोभयफलकत्वेनावश्यकं भवेत् तर्हि नियमविधेः कल्पनीयत्वव्याख्याने तदावश्यकत्वं व्याहन्येत नियमविधिश्च नानासाधनसाध्यक्रियाया-मेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको भवेत्। तथा चानेक-साधनेषु मध्ये रागाद् एकतरसाधनस्याश्रयणीयत्वेनोपस्थितौ अप्राप्तस्य रागाभावाद् आश्रयणीयत्वेनानुपस्थितस्य साधनविशेषस्याश्रयणीयत्वमेव प्रतिपाद्यते। एवं च सति नियमविध्याश्रयणादित्यनेन ह्यवश्यम्भावि-नियमविषयतायाः सद्भाव एव सूचित इति विधिरसायने तत्रभवानप्पय-दीक्षितो मन्यते। तथा च तन्त्रवार्त्तिके भट्टपादैरुक्तम्—"ततश्चोपाया-न्तराण्यप्रमाणकत्वान्निवर्त्तन्ते नियमादिष्टसिद्धिश्च। मन्त्रैरेव स्मृत्वा कृतं कर्माभ्युदयकारि भवतीत्यवधार्यते।" इति। अत्र वार्त्तिककारैः कुमारिलभट्टपादैरपि "अवधार्यते" इत्येवमुक्तं नतु कल्प्यते इति। 'नियमार्था वा श्रुतिरुच्यते' इति सूत्रेण भगवता जैमिनिनाऽपि मन्त्रादि-वेदभागविशेषस्य नियमार्थत्वश्रवणमेव प्रतिपाद्यते न तु नियमार्थत्व-कल्पनमिति। वस्तुगतेरेवंविधत्वे नियमविधिसद्भावादित्युक्तौ न कोऽपि दोषः परिलक्ष्यते। नियमविधिविषयताया अवश्यसद्भावात्। अत आश्रयणादित्यस्य कल्पनीयत्वव्याख्यानं समीचीनं न वेति सुधीभि-र्विभाव्यम्। इति।

---

# अभिमन्यौ निहते श्रीकृष्णसकाशे पार्थस्य प्रतिज्ञा

[ निबन्धकः—श्रीहरिपदभारती ]

हा गोविन्द शशाङ्कसुन्दरतनुः क्वाऽऽस्तेऽभिमन्युः सखे
नो द्रष्टुं प्रभवामि किं पुनरहं मूर्त्तं हि वीरं रसम्।
अन्तस्तत् परिदह्यते यदुपते क्षोभेण शोकेन मे
किं कार्यं वद साम्प्रतं त्वमसि मे बुद्धिर्बलं वीरता॥

किं स्वप्नोऽयमनन्तरूप किमियं माया चमत्कारिणी
व्यामोहः किमु सन्तनोति नितरां चित्रां क्रियां भूतले।
हा हा किङ्घटितं विषादकरुणं मर्मन्तुदं दारुणं
किं कार्यं वद साम्प्रतं त्वमसि मे प्रज्ञा विवेको मतिः॥

तातो यस्य जगज्जयी मृधे पशुपतिं जित्वाप शैवास्त्रकं
रक्षोदैत्यशतं निनाय सदनं कालस्य कालान्तकः।
अत्याश्चर्यमतीव विस्मयकरं वृत्तान्तु चित्रं सखे
पञ्चत्वं गतवान् कथं कथय मे सोऽयं मिथः सङ्गरे॥

ज्यायान् मे रणपण्डितो गुरुगदापाणिर्द्वितीयोऽन्तको
बालं तं निहतं निरीक्ष्य पशुभिर्दुर्योधनाद्यैः कथम्।
निश्चेष्टः शिथिलप्रयत्न इव तन्निष्पेषणेऽवस्थितो
भाग्यान्मे किमु मन्दरोऽपि तृणवन्निःसारतामाप्तवान्॥

पूर्वं लब्धवरः स पाण्डववरो धन्वी रथी जित्वर-
स्तस्मिन् जाग्रति सम्मुखे रणमुखे सेनाशतैः संवृते।
पञ्चास्यस्य शिशुं तवैव हि विभो स्वस्रेयमूर्जस्वलं
दण्डव्यूहगतं निहत्य निभृतं पापैः कथं दृप्यते॥

निर्वीर्यं किमु केशव प्रलयकृद् गाण्डीवमेतद्धनुः
संलब्धं यदमोघमस्त्रनिचयं शक्राद् गतं मार्दवम्।

क्षात्रं तेज इह प्रनष्टमनघं किं मे सखे साम्प्रतं
हताः सप्तमहारथा यदधुना सम्मोदमातन्वते ॥
ध्यायन् कृष्णपदारविन्दयुगलं गाण्डीवचापं स्पृश-
न्नेतैरप्यसुभिः करोमि शपथं ब्रह्मान्तरस्थं स्मरन् ।
प्रागस्ताद् द्युमणेर्जयद्रथपशुं छित्वा शिवाभ्यो बलिं
दद्यामद्य महामहाहवमुखे सत्यं प्रतिज्ञायते ॥
आदित्यं दहनं शशाङ्कमनिलं धर्मं धरां भूधरान्
दिक्पालान् वसुरुद्रकिन्नरगणान् नागांस्त्रिलोकीश्वरान् ।
साक्षीकृत्य भणामि तस्य नृपशोः शोणैर्धरित्रीमिमां
शोणामद्य युधि प्रदोषसमये कुर्यां प्रतिज्ञायते ॥
यायाच्चेत् स गभीरभूधरदरी-प्रच्छन्नगर्भेऽथवा
पारावारनिगूढ-गाढ-तिमिरावर्त्तोदराभ्यन्तरे ।
इन्द्रो वा वरुणो यमश्च दहनः पद्मासनो भास्कर-
स्तं पापं न हि रक्षितुं समभवन्मुट्टङ्किते गाण्डिवे* ॥

एकस्त्वमत्र शरणं यदि मे भवेऽस्मिन्
मन्ये जगत्त्रयमिदं निखिलं तृणाय ।
कोऽयं जयद्रथपशुः क च सूतपुत्रो
हे कृष्ण पाण्डवसखे वद मेऽद्य कृत्यम् ॥
त्वमेव विश्वम्भर विश्वमूर्त्ते
धर्मस्त्वमेकोऽखिलकर्ममार्गे ।
त्वं वै महात्मन् जगतां निदानं
किं कार्यमार्य त्वरितं विधेयम् ॥

---

* गाण्डीवगाण्डिवौ पुन्नपुंसकौ इत्यमरः ।

# वानरवैदग्ध्यम्।

प्रियपाठकमहाभागाः, विदितमेव भवतां सुग्रीवहनूमदादीनां निःसीमं बलवैभवमतिमानुषश्च प्रज्ञाप्रकर्षः। यैस्तावन्निखिलगर्वसर्वङ्कषः प्रचलदूर्मिमालाकुलो भुवनभीषणो महोदधिरपि बन्धनमनुभावितः, यैर्नाम करालकालवदनदरीप्रविष्टानामपि लक्ष्मणादीनां समुज्जीविताः प्राणाः, यैर्नाम बहुव्याहरद्भिरपि न किञ्चिदप्यपशब्दितं तेषां शिल्प-चिकित्सा-व्याकरणादि-सर्वतन्त्रस्वतन्त्राणां वानरवर्याणां को वा प्रख्यातवैदुष्योऽपि Engineer वा Surgeon वा Philologist वा तुलामधिरोढुं प्रभवेत्। अत एव नैतदाश्चर्यं यदिण्डियानाविश्वविद्यालयाध्यापकेन केलग्महोदयेन सह-धर्मिणीसहायेन काञ्चन वानरकन्यकां स्वतनयेनैव साकमपत्यनिर्विशेषं परिपाल्य सिद्धान्तितं यत् सार्धसंवत्सरवया वानरस्तथाविधवयसो मनुजाल्लेशतोऽपि न हीयते सामर्थ्यादिना। तस्यैवेतिवृत्तं प्रकटीकृतमिदा-नीमध्यापकप्रवरेण The Ape and the Child समाख्ये ग्रन्थे। अस्माभिस्तु वाचकमहोदयानां परिज्ञानाय तस्य सारसंग्रहः क्रियते।

मनीषिमुख्येनामुना यथा स्वतनयो डोनाल्ड् संवर्धितस्तथैवेयमपि वानरबालिका परिवर्धिता। सा हि मनुजशिशुरिव समाच्छादिता वस्त्रादिभिः, स्नापिता फेनकादिभिः, शायिता शय्यादिषु। सा च धूम-शकटेन स्थानात् स्थानान्तरं गच्छति, सिकताभिश्च क्रीडति। षोडशे च मासे पदमर्पयन्ती अष्टपञ्चाशतः शब्दानामर्थमवबोद्धुं प्रबभूव। धूमशकटस्य श्टङ्गवादनाय समादिष्टाऽसौ सम्यक्तया तथैवाकरोत्, अभ्य-र्थिता च रेखाचित्रेभ्यः कुक्कुरादिकं निरदिशत्। तस्मिन्नेव वयसि डोनाल्ड् ऊनचत्वारिंशत एव शब्दानामर्थपरिग्रहे अलमासीत्, मासद्वितयाच्चोर्ध्वं वानरीसदृशं मतिप्रकर्षं प्रकटीकृतवान्। सा च क्षुधार्ता एव खाद्यं गृह्णाति, अन्यथा निर्बध्यमानाऽपि न गृह्णाति। शौचादिष्वपि सम्यगवहितैव वर्तते। एवञ्च सर्वत्र मानवशिशुमतिशेत एव।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| January, 1934. | १८५५ शकीये प १६श-वर्षस्य ९म-संख्या | Vol. XVI No. 9 |


## श्रीनवदुर्गास्तवः


[ निबन्धकः—म० म० श्रीदुर्गाप्रसादद्विवेदी ]


कार्येण याऽनेकविधां श्रयन्ती,
निवारयन्ती स्मरतां विपत्तीः ।
अपूर्वकारुण्यरसार्द्रचित्ता,
सा शैलपुत्री भवतु प्रसन्ना ॥१॥

स्वर्गोऽपवर्गो नरकोऽपि यत्र,
विभाव्यते दृक्कलया विविक्तम् ।
या चाद्वितीयाऽपि शिवद्वितीया,
सा ब्रह्मचारिण्यवताद् भयेभ्यः ॥२॥

पादौ धरित्री कटिरन्तरिक्षं,
यस्याः शिरो द्यौरुदितागमेषु ।
अन्यद्यथायोगमयोगदूरा,
सा चन्द्रघण्टा घटयत्वभीष्टम् ॥३॥

स्वराड् विराट् संसृतिराडखण्ड-
ब्रह्माण्डभाण्डाकलनैकवीरा ।

सा पापविध्वंसनसद्मकूष्मा-
ण्डाऽव्यादपायादयदानशौण्डा ॥४॥

द्वैमातुरत्वे द्विरदाननस्य,
षाण्मातुरत्वे च कुमारकस्य ।
एकैव माता परमा मता या,
सा स्कन्दमाता मुदमादधातु ॥५॥

कतस्य गोत्रादथवाऽपरस्मात्,
किं वेतरस्मात् कथमेकिकैव ।
जातेति मायाह्वयतामिता या,
कात्यायनी सा ममतां हिनस्तु ॥६॥

कालोऽपि विश्रान्तिमुपैति यस्यां,
काऽन्या कथा भौतिकविग्रहाणाम् ।
प्रपञ्चपञ्चीकरणैकधात्री,
सा कालरात्री निहताद् भयानि ॥७॥

कालीकुलं श्रीकुलमप्यपारं,
कृष्णाद्युपासाप्रवणं यतश्च ।
साऽनन्तविद्याविततावदाना,
गौरी विदध्यादखिलान् पुमर्थान् ॥८॥

गृणन्ति यां वेदपुराणसांख्य-
योगागमादेव महर्षयश्च ।
पुत्रान् प्रपौत्रान् सुधियः श्रियश्च
सा सिद्धिदा सिद्धिकरी ददातु ॥९॥

या चण्डी मधुकैटभप्रमथिनी या माहिषोन्मूलिनी
या धूम्रेक्षणचण्डमुण्डदलिनी या रक्तबीजाशिनी ।
शक्तिः शुम्भनिशुम्भदैत्यदलिनी या सिद्धिलक्ष्मीः परा
सा दुर्गा नवकोटिमूर्तिसहिताऽस्मान् पातु सर्वेश्वरी ॥१०॥

# सुभाषितानि

## ( पाश्चात्यानि )

The boast of heraldry, the pomp of powers,
And all that beauty, all that wealth e'er gave,
Await alike th' inevitable hour :—
The paths of glory lead but to the grave. Gray.

कौलीन्यगर्वो विभवश्च शक्तेः
सर्वाणि च श्रीद्रविणोद्भवानि ।
तुल्यं हि पश्यन्त्यनिवार्यकालं
नयन्ति मार्गा यशसः समाधिम् ।।
उमाचरण-विद्याभूषणस्य ।

Full many a gem of purest ray serene
The dark unfathom'd caves of ocean bear :
Full many a flower is born to blush unseen,
And waste its sweetness on the desert air.

कत्यम्भोधेर्निबिडतिमिरे कन्दरे सन्त्यगाधे
रत्नान्येव द्युतिमतितरां शान्तरूपां दधन्ति ।
जायन्ते वा कति सुमनसो लोकनेत्रैरदृष्टाः
शोषं शेषे मरुमरुति वा सौरभं स्वं नयन्ति ।। तस्यैव ।

True dignity is never gained by place and never lost when honours are withdrawn. Massinger.

उन्नतं पदमवाप्य गौरवं
वस्तुतो न पुरुषेण लभ्यते ।

लब्धमेतदपि नो विनश्यति
संहृतेऽपि किल मानदे पदे ॥

महादेवपाण्डुरङ्ग-ओकस्य ।

Some books are to be tasted, others to be swallowed, and some few to be chewed and digested.

केषाञ्चिदास्वादनमेव कार्यं
केषाञ्चिदिष्टं गिलनं विदंशम् ।
ग्रन्थाः कियन्तस्तु मुखे कृता ये
शनैः शनैश्चर्वितजारिताः स्युः ॥ तस्यैव ।

---

## चन्द्रग्रहणम्

[ निबन्धकः—पं० श्रीमधुकान्तझा० ज्यौ० आ० ती० र० ]

नवत्यधिकैकोनविंशतितमे वैक्रमेऽब्दे १९९० माघशुक्लपूर्णिमायां कुजे ( ३०।१।१९३४ ई० ) भावि यच्चन्द्रग्रहणं तत् कस्मिंश्चित पंचाङ्गे लिखितं कस्मिंश्चिदप्यलिखितं वरवीर्त्ति, तथा कस्मिंश्चित् पंचाङ्गे स्पर्शोऽपि पूर्णिमानन्तरमर्थात् प्रतिपदि दृश्यते, परं च प्रतिपदि स्पर्शः समीचीनो न वेति निर्णयार्थमनेकैः सज्जनैः पृष्टः समाचारपत्रेऽस्योत्तरं दातुमुत्सहे येन प्रश्नकर्तॄणां संशयापनोदस्तथा ज्यौतिषसिद्धान्तमर्मज्ञानां विनोदो नैपुण्यविकाशकामानां छात्राणां बुद्धिवैभवविकाशो भवेदिति । विषयस्मारकश्लोकाः—

ग्रहे विरामो हि तिथेर्विरामस्तदन्तरं चेद् ग्रहणार्धतुल्यम् ।
पदे सपाते शशिनि प्रयाते समेऽसमे पर्वविरामकाले ॥

स्पर्शो हि मोक्षो विबुधैः क्रमेण ज्ञेयोऽधिकं स्पर्शविमुक्तिमध्याः ।
यदा तदा पर्वविरामकालादनन्तरं प्राक् शशिनस्त्रयः स्युः ॥
तदन्तरं चेद् ग्रहणार्धतोऽल्पं सितेऽसिते स्पर्शविमुक्तिकालौ ।
इति स्फुटार्थे हि विराजमाने खे बुद्धिगोले विचरन्तु विज्ञाः ॥
हे बुद्धिमन्तो यदि पूर्णिमान्तो मतान्तरे चेदतिरिक्तकाले ।
तथाऽपि पूर्णान्तत एव पूर्वं स्पर्शः परं मुक्तिरिति ग्रहेऽस्मिन् ॥
अतः स्यात् पूर्णिमायान्तु स्पर्शो मोक्षस्तु पक्षतौ ।
पूर्णान्ते मतभेदेऽपि निर्णयोऽयं प्रकाशितः ॥

ग्रहे विरामः=मध्यग्रहणकालः । पर्वविरामः=पूर्णिमान्तः, सिते=पूर्णिमायाम्, असिते प्रतिपदि, इत्यर्थत एव ।

अथ सपाते शशिनि समपदे सति पूर्णान्तमध्यग्रहणकालयोरन्तरं स्पर्श-मोक्षकालान्तररूपस्य ग्रहणकालस्यार्धसमं चेत्तदा पूर्णान्तकाल एव ग्रहणारम्भः ( स्पर्शः ), अर्थत एव प्रतिपदि मध्यमोक्षौ भविष्यतः । यदा तदन्तरं ग्रहणकालार्धादधिकं तदा प्रतिपद्येव स्पर्शमध्यग्रहणमोक्षा भविष्यन्ति ।

विषमे पदे सति सपातचन्द्रे पूर्णान्तमध्यग्रहणकालयोरन्तरं ग्रहणार्धसमं चेत्तदा पूर्णान्तकाले मोक्षः पूर्णायां स्पर्शो मध्यग्रहणं च भविष्यति। तदन्तरं ग्रहणार्धकालादधिकं चेत् तदा पूर्णिमायां स्पर्शो मध्यो मोक्षश्च भविष्यति । परं चैतल्लक्षणलक्षितं ग्रहणं स्वल्पमलक्ष्यत्वादनादेश्यं भविष्यति, तदन्तरं यदा ग्रहणकालार्धादल्पं तदा सर्वस्मिन् पदे पूर्णिमायामेव स्पर्शः प्रतिपदि मोक्षो जायते, मध्यग्रहणं तु युग्मायुग्मपदभेदेन पूर्णान्ता-दनन्तरं पूर्वं क्रमेण बोध्यम् । प्रस्तुतग्रहणे असकृत् कर्मणा साधिते पूर्णान्त-काले पूर्णिमायामेव स्पर्शो दृश्यते, परं च कस्मिंश्चिदपि पञ्चाङ्गे तु यः पूर्णान्त-कालस्तस्मादनन्तरं स्पर्शकालो दृश्यते तत्र किं कारणं तदुच्यते,—सारणीतो निर्मितपूर्णान्तो ग्रहणज्ञानार्थं नास्ति, ग्रहणार्थं तु असकृत् कर्मणा साधित एव पूर्णान्तकाल उपयुक्तः । यदा तात्कालिकरविचन्द्रयोरन्तरं षड्भं स्यात्तदैव पूर्णान्तकालः, स कालः पंचाङ्गस्थपूर्णान्तकालात् कदाचिदग्रतः कदाचित्

पृष्ठतो वा भवति तेन पंचाङ्गस्य पूर्णान्तकालो ग्रहणार्थं पूर्णान्तकालो नास्ति किन्तु ग्रहणार्थमसकृत् कर्मणा साधित एव पूर्णान्तकालो बोध्यः। यथेह गवालियरे असकृत् कर्मणा साधितः पूर्णान्तकालः=घ० ३७ प० २०। स्पर्श-कालः=घ० ३५ प० ५१। मध्यग्रहणकालः=घ० ३७ प० ३९. तथा मोक्षकालः=घ० ३९ प० २७ एतद्ग्रहलाघवीयगणितेन पूर्णिमायां स्पर्शः प्रतिपदि मोक्ष इति स्फुटम्। मतान्तरेणान्यस्मिन् काले पूर्णान्तश्चेत्तथाऽपि तन्मते तदीयपूर्णान्तात् पूर्वं स्पर्शो यतोऽत्र तन्मतेऽपि पूर्णान्तमध्यग्रहण-कालयोर्वियोगाद् ग्रहणार्धकालोऽधिक एव। एवमेव सर्वदेशेषु पूर्णान्तात् पूर्वं स्पर्शः। यतो देशभेदेनैकस्मादपि ग्रन्थात् पूर्णान्तकालो भिन्नः, परं च कयो-रपि देशयोः पूर्णान्तकालयोर्यदन्तरं तत्तुल्यमेव तदीयस्पर्शकालयोरपि स्यात् अतो यद्येकस्मिन् देशे पूर्णान्तात् पूर्वं स्पर्शः समुचित एतदन्यत्र गोलयुक्त्या ब्रवीमि चन्द्रार्कयोरन्तरे षड्भे विलसति रविगताहोरात्रवृत्ते प्राक्क्षितिजादा-रभ्य रविं यावदहोरात्रवृत्ते यावान् कालस्तत्तुल्ये सावनात्मके काले पूर्णान्त-कालः स्यात्, परंच स्वस्वक्षितिजानां भिन्नत्वात् स्वस्वोदयक्षितिजपूर्णान्त-कालिकार्कान्तरकालो भिन्नस्तेनोदयक्षितिजान्तरे यावानहोरात्रवृत्ते कालस्ताव-देव पूर्णान्तयोरन्तरं स्पर्शान्तरं च तदेव मध्यग्रहान्तरं मोक्षयोश्चान्तरं स्यात् स्पर्शतो मोक्षकालं यावदेकस्मिन्नेवाहोरात्रवृत्ते रविभ्रमणस्य कल्पनात् व्यावहारिकगणिते कल्पनमेतत् समीचीनमेव, एवमेव प्रचुर-व्यवहारात्।

अथ प्रसंगादेकस्मिन् देशे चन्द्रग्रहणज्ञानादन्यस्मिन् देशे ज्ञानस्य युक्तिः—पूर्णान्तकालिकरविक्रान्तिवशाच्चरान्तरं यद् देशान्तरं च यत् तयोः संस्कारे-णोदयक्षितिजान्तरस्य ज्ञानं स्यात्, तेन क्षितिजान्तरेण संस्कृताः स्पर्शमध्य-मोक्षकालास्ते अन्यस्मिन् देशे स्पर्शमध्यमोक्षकालाः स्युः। अथवा दिनार्धाद् वा निशार्धाद् वा स्पर्शादीनां काले ज्ञाते सति तत्र केवलेन देशान्तरसंस्कारे-णैवान्यदेशीयदिनार्धान्निशार्धाद् वा स्पर्शादीनां कालज्ञानं स्यात्। अर्थतः स्वस्थाने वर्तमाने प्रचुरप्रचलितघटीयन्त्रे ये स्पर्शादीनां होरात्मककालास्ते

देशान्तरसंस्कारेणाभीष्टान्यदेशे होरात्मकाः स्पर्शादिकाला ज्ञाता भवन्ति। अत्र देशान्तरपदेन स्वाभीष्टान्यदेशयोर्याम्योत्तरान्तर्गतकालो बोध्यः। परंच स्वदेशे यद्ग्रन्थानुसारेण ज्ञाताः स्पर्शादिकालास्ते देशान्तरसंस्कारेणाभीष्टान्यदेशे तद्ग्रन्थीयदिनमानानुकूलघटीयन्त्रवशगा भवन्तीति विदन्तु। प्रथमं "ग्रहलाघवतः" गवालियरे ग्रहणं विधाय तत एवानेकस्थलेषु स्पर्शादिकालाः साधितास्तेऽत्र प्रकाश्यन्ते।

अथ ग्रहणकालावलिः—

| स्थानानि | स्पर्शः | | मध्यः | | मोक्षः | |
|---|---|---|---|---|---|---|
| | घं | मि, | घं | मि, | घं | मि, |
| गवालियर | ८ | ५७ | ९ | ४० | १० | २३ |
| काशी | ९ | १६ | ९ | ५९ | १० | ४२ |
| दरभंगा | ९ | २८ | १० | ११ | १० | ५४ |
| जगन्नाथपुरी | " | | " | | " | |
| भागलपुर | ९ | ३२ | १० | १५ | १० | ५८ |
| पुर्निया | ९ | ३४ | १० | १७ | ११ | ० |
| कलकत्ता | ९ | ३८ | १० | २१ | ११ | ४ |
| वैद्यनाथधाम | ९ | ३० | १० | १३ | १० | ५६ |
| गया | ९ | २४ | १० | ०७ | १० | ५० |
| गिद्धौर | ९ | २९ | १० | १२ | १० | ५५ |
| आसाम | ९ | ५६ | १० | ३९ | ११ | २२ |
| गोरखपुर | ९ | १७ | १० | ० | १० | ४३ |
| नेपाल | ९ | २५ | १० | ०८ | १० | ५१ |

| स्थानानि | स्पर्श | | मध्यः | | मोक्ष्य | |
|---|---|---|---|---|---|---|
| | घं | मि, | घं | मि, | घं | मि, |
| अयोध्या | ६ | १३ | ६ | ५६ | १० | ३६ |
| कानपुर | ६ | ०५ | ६ | ४८ | १० | ३१ |
| कुरुक्षेत्र | ८ | ४६ | ६ | ३२ | १० | १५ |
| जयपुर | ८ | ४७ | ६ | ३० | १० | १३ |
| देहली | ८ | ५३ | ६ | ३६ | १० | १६ |
| पटिआला | ८ | ५० | ६ | ३३ | १० | १६ |
| वडोदा | ८ | ३८ | ६ | २१ | १० | ०४ |
| बम्बई | ८ | ३६ | ६ | १६ | १० | ०२ |

सर्वत्र सर्वपर्वकालः=घं १ मिनिट २६

सर्वत्र स्टण्डरड्टाइमघटीयन्त्रानुसारेण—

स्पर्शः=६।२६ मोक्षः=१०।५५ इति।

# सर्वप्रत्ययमाला ।

[ शङ्करार्यविरचिता ]

( पूर्वतोऽनुवृत्ता )

राजा भीषयते शत्रून् संत्रासयति संयुगे ।
क्षुभ्यति प्रेङ्खति क्षुभ्नात्येजति प्रतिनायकः ॥१३६ ॥
ह्वलति ह्मलति त्रस्यत्यथ स्फुरति खेलति ।
भनक्ति त्वङ्गति भयात् स्पन्दतेऽन्तर्ज्वलत्यपि ॥ १३७ ॥
कम्पते वेपते स्थानादथ घूर्णति घूर्णते ।
चलति कम्पयति प्रक्षोभयति ह्वलयति प्रवेपयति ॥
स्फारयति स्पन्दयति स्खलयति शत्रुं प्रघूर्णयत्येवम् ॥१३८॥
छिनत्ति खण्डयत्येव विपाटयति वृश्चति ।
लुनीते लुञ्छति लुनात्यवद्यति शरैः पुनः ॥ १३९ ॥
भिनत्ति कृन्तति रिपून् छिनत्ति श्यति लुञ्चति ।
मुण्डयत्येष डिपति मोडयत्यथ संयुगे ॥ १४० ॥
लावयति छेदयति प्रभाजयति णिच्यसौ ।
लुञ्चयति व्रश्चयति स्वसैनिकैः क्षिपति विलोपयति ।
छिद्यते वृश्च्यते राज्ञा खण्ड्यते च विपाट्यते ॥ १४१ ॥
भज्यते लूयते सेना लुञ्च्यते स्वैरवद्यते ।
फलति स्फुटति द्वेधा दलति स्वयमेव वै ॥ १४२ ॥
णिचि स्फोटयति क्रुद्धः शत्रून् दलयति द्रुतम् ।
भिनत्ति समरे भिन्ते विदारयति वैरिणम् ॥ १४३ ॥
विदार्यते भिद्यते च णिचि भेदयति स्फुटम् ।
क्षुणत्ति चूर्णयत्याशु पिनष्टि च महीतले ॥ १४४ ॥

णिचि क्षोदयति श्लक्ष्णं संचूर्णयति भस्मवत् ।
मृद्नाति पिण्डयति च क्षिणोति तुभ्नाति घूर्वति तृणढ्ढि ।
हिनस्ति हन्ति मथ्नाति रोषति दुनोति क्षुणोति ॥
दुष्टान् धूपायति × × × न्यति च संज्ञपयत्यजस्रम् ।
विशसत्यर्द(य)ति क्रूरो निबर्हयति तर्दति ॥ १४६ ॥
नभ्नाति दूयते युद्धे बाधते नभते युधि ।
निगृह्णाति निगृह्णीते चोपद्रवति द्रुह्यति ॥ १४७ ॥
ताडयति प्रोथयति मुष्टिना प्रहरत्यथ ।
हिंसयत्यपरैर्घातयति बाधयति द्विपः ॥ १४८ ॥
निग्राहयति यत्नेन प्रमर्दयति णिच्यसौ ।
हन्यते हिंस्यते शत्रुः सूद्यते च निगृह्यते ॥ १४९ ॥
प्रमथ्यते मर्द्यते च ताड्यते पीड्यते यकि ।
विशस्यते शस्यते च मृद्यते च निबर्ह्यते ॥ १५० ॥
तूयते तुद्यते चोपद्रूयते यकि कर्मणि ।
निजिघृक्षत्ययं मूर्खः समरे निजिघृक्षते ॥ १५१ ॥
विबिबाधिषते शत्रून् जिघांसति तुतुत्सति ।
पतति भ्रश्यति रथात् श्च्योतते निहतो जनः ॥ १५२ ॥
पातयति भ्रंशयति प्रश्च्योतयति णिच्यमून् ।
निपातयति णिच्यन्यान् प्रभ्रंशयति पार्थिवः ॥ १५३ ॥
भूमौ लुठति भूयोऽथ लुठते परिवर्तते ।
णिचि लोठयति द्वेष्यान् परिवर्तयति क्षितौ ॥ १५४ ॥
वमति छर्दयत्येवं रक्तमुद्गिरति क्षितौ ।
उद्गारयति वमयत्यास्यस्थं रुधिरं तथा ॥ १५५ ॥
प्रमेहति प्रस्रवति मूत्रयत्यथ मेहति ।
प्रस्रावयति णिच्येनं प्रमेहयति वै यथा ॥ १५६ ॥

म्लायति म्लायते ताम्यत्यवसीदति सीदति ।
ग्लायति ग्लायते तद्वदथ मूर्छति मुह्यति ॥ १५७ ॥

ग्लपयत्याहवे भग्नानवसादयति यथा ।
विमोहयति भूपालः शरैर्मूर्छयति द्विषः ॥ १५८ ॥

विपद्यते च म्रियते जनो व्यापाद्यते युधि ।
मारयत्यखिलानेष व्यापादयति भूपतिः ॥ १५९ ॥

खिद्यते शोचति जनस्तत्र दुःखायते भृशम् ।
रोदिति क्रन्दति जनो विक्रोशति समन्ततः ॥ १६० ॥

विरौति विलपत्येवं करुणं परिदेवते ।
जयत्येवं विजयते स पराजयते नृपः ॥ १६१ ॥

जिगीषति सनि श्रीमान् जीयते यकि कर्मणि ।
निवर्तते चावर्तते व्यावर्तते च भूमिपः ॥ १६२ ॥

निवर्तयति णिच्यन्यान युद्धाद् व्यावर्तयत्यपि ।
विशति प्रविशत्येवं पुरं निविशते नृपः ॥ १६३ ॥

प्रवेशयति णिच्यन्यान् प्रविविक्षत्यसौ सनि ।
उत्क्षिपत्युद्वहत्युच्छ्रयति चोद्गिरति ध्वजम् ॥

उद्धुनोति ध्वजं सर्वो जनो राजसमागमे ।
तिष्ठति स्थीयते भावे तिष्ठासति सनि स्वयम् ॥ १६४ ॥

पीठे चोपविशत्यास्ते निषीदति ततो नृपः ।
निवसत्यत्र सुचिरं गृहे वसति वर्तते ॥ १६५ ॥

निष्कर्षति बलाच्छल्यं कुष्णात्युत्पाटयत्यथ ।
निष्कृष्यते शनैः शल्यं कर्मण्युत्पाद्यते भृशम् ॥ १६६ ॥

सहते क्षमते दुःखं मृष्यते च तितिक्षते ।
णिचि मर्षयति क्लेशं क्षमते क्षमयत्यथ ॥ १६७ ॥

जीवति प्राणिति प्राणान् धरति ध्रियते ततः ।
जिजीविषति सन्यत्र प्राणिनिषति सर्वदा ॥ १६८ ॥

इति श्रीशङ्कराचार्यविरचितायां सर्वप्रत्ययमालायाम्
लण्माला नाम दशमोऽध्यायः ॥ १० ॥

एकादशोऽध्यायः ।

अभवत् प्रादुरभवत् प्रादुरासीदविद्यत ।
उदपद्यत पुत्रोऽस्याऽवातरत समपद्यत ॥ १ ॥
अजायताकल्पत च निरवर्तत तत्सुतः ।
निरवर्तयदजनयदवातारयदात्मजान् ॥ २ ॥
णिच्यभावयदुदपादयन्निरमिमीत च ।
प्रासूताऽसूयताऽसूताऽसृजत प्रादुरकारयत् ॥ ३ ॥
अरचयदरचयताप्युदपित्सत वै सनि ।
अबुभूषतोदबिभावयिषदुदपिपादयिषत् ॥ ४ ॥
अभूयताजायत च भावे यक्युदपद्यत ।
अभाव्यताजन्यत चासूयतासृज्यताऽऽत्मजः ॥ ५ ॥
निरमीयतोदपनीपद्यताऽजन्यताऽऽत्मजः ।
अबोभूयत यङ्‌ चायतताऽचेष्टत कर्मसु ॥ ६ ॥
प्रावर्ततोदसहतेहत व्याप्रियतेति यत् ।
अचेष्टयत् पिता पुत्रं व्यापारयदथेहयत् ॥ ७ ॥
अकरोदतनोद्राजाऽकुरुताऽतनुताऽऽचरत् ।
व्यदधादन्वतिष्ठच्च व्यधत्ताऽकारयत् पिता ॥ ८ ॥
व्यधापयत् पुत्रमन्वस्थापयत् समतानयत् ।
अतन्यताऽक्रियत चातायतापि व्यधीयत ॥ ९ ॥
आचार्यत चाचर्यत समन्वस्थीयतेति यत् ।
व्यधित्सत व्यधित्सच्चाऽचिकीर्षच्चाचिकीर्षत ॥ १० ॥
अन्वतिष्ठासत् सनि चेदैधताऽवर्धताऽश्वयत् ।
आप्यायताऽस्थापयत चापुष्णादुपानयत तं पिता ॥ ११ ॥

... ... ...

कर्मण्युपानीयताऽन्वशासच्चाऽशिक्षदादरात् ।
अन्वशासयदन्यैर्णिच्यशिक्षयदशिक्षत ॥१२॥

यक्ष्यन्वशास्यतामामनद्वेदमपठत् सदा ।
आम्नापयद् वेदमध्यापयच्चाऽपाठयण्णिचि ॥१३॥
आम्नायतापाठयत समशेत व्यतर्कयत् ।
व्यचिकित्सताऽन्वयुङ्क्ताऽपृच्छद् गुरुरपृच्छयत ॥ १४ ॥
अन्वयुज्यत पर्यन्वयुज्यतासावचिन्तयत् ।
अध्यायदध्यायत चातर्कयच्च न्यरूपयत् ॥ १५ ॥

इति श्रीशङ्करार्यविरचितायां सर्वप्रत्ययमालायाम्
लङ्माला नाम एकादशाध्यायः समुपलभ्यमानः समाप्तः ॥ ११ ॥

[ श्रीशङ्करार्यविरचितः प्रबन्धोऽयं पण्डितप्रवरेण परिषदोऽकृत्रिमहितैषेणा श्रीरामलिङ्गशास्त्रिमहोदयेन कृपया प्रेषितः। प्रायेण चाक्षरत्रुटीर्वर्जयित्वा यथावदेव सम्मुद्रितः। यद्यप्यत्रापातदृष्ट्या केचन प्रमादाः सम्भाव्यन्ते तथापि कदाचित् तेषां मतान्तरेण साधुत्वं सम्भवेदिति नैव तत्र व्यापारिता लेखन्यस्माभिः। सं. सा प. स. ]

---

# वायुपरिवर्तनम्

( पूर्वतोऽनुवृत्तम् )

## द्वितीयः परिच्छेदः

निशायां तावदुपशान्तो हरिधनस्य ज्वरः। परेद्यवि प्रातः समुत्थाय पारेवतपत्त्राणि चर्वयित्वा मुखं प्रक्षाल्यासौ डि-गुप्तं सेवितवान्। घटिकार्धत ऊर्ध्वं यावदसावलिन्दे कटमास्तीर्य तस्योपरि सुखासीनः कतिचिदपूप-संयोगेन प्रातराशं निर्वर्तयति तावत् प्राङ्गणस्य प्रान्तदेशादश्रूयत वाणी—"कुत्र मे ज्येष्ठतातपत्नी?" शब्दाभिमुखं च विनिक्षिप्य नयनयुगलमपश्यत,

समुपस्थितः स्वयं भूपालचट्टोपाध्याय इति। विदेशीयापूपान् ससम्भ्रमं कञ्चुककोषे क्षिप्त्वा वसनप्रान्तेन प्रोञ्छ्य च वदनं साधुगम्भीरभावमास्थाय समुपविष्टस्तत्र हरिधनः।

पुत्रस्यान्नप्राशनोत्सवार्थं ग्राममागतस्य भूपालमहोदयस्य सप्ताहत्रितयं व्यतीतम्। परमितः पूर्वं कदापि तेन नार्पितं चरणयुगलं भवनेऽस्मिन्। तत्र च पर्याप्तं कारणमासीत्। वत्सरत्रयात् पूर्वं पितुः सांवत्सरिकश्राद्ध-कृत्यानुष्ठानार्थं समागते तस्मिन् ग्रामस्थाः सर्व एवामन्त्रिताः प्रययुस्तन्मन्दिरम्, केवलं हरिधन एव नोपागतः। न चासौ स्वयं गतः नापि मातरं पितृष्वसारं वा गन्तुं ददौ। तथाऽपि भूपालमहोदयस्य माता पुनरपि स्वयमागत्य सर्वांस्तानुपनिमन्त्रितवती। हरिधनस्य माताऽनिवेद्य तस्मै न केवलं निमन्त्रणरक्षार्थं गता परं 'ज्वरग्रस्त इति न प्रबभूव हरिधनोऽभ्यागन्तुम्, कियद्वा न प्रकटितं तदर्थं तेन दुःखम्, इत्युक्तवती, सर्वमेतत् तस्याः स्वकपोल-कल्पितमिति नैतत् पृथग्वक्तुमावश्यकम्। फलं त्वेतस्य शोभनं सञ्जातम्। कुत्र मे ज्येष्ठतातपत्नी ? कथं वर्तते हरिधनः" इति वदन्नलिन्दाभि-मुखमाजगाम भूपालमहोदयः। हरिधनं च दृष्ट्वाऽपृच्छत्, "अस्ति कश्चिद्विशेषः" इति।

हरिधनः क्षामकण्ठः प्रत्युवाच, प्रशान्त इदानीं मे ज्वर इति।

ह्यस्तावच्छ्रुतं ज्येष्ठतातपत्न्याः सकाशात् त्व जरेणाक्रान्त इति। ह्यस्तु कार्यबाहुल्यान्नापारयमागन्तुम् त्वां द्रष्टुम्। भोजनादिकं निशीथात् पूर्वं न समवसितम्। अहो ! अतिमात्रं दुर्बलोऽसि संवृत्तः।

आर्य, अथ किम्। रोगं भुञ्जानस्य मे त्रीणि वर्षाणि। सप्ताष्टानि दिवसानि स्वस्थस्तिष्ठामि तत ऊर्ध्वं पुना रोगसंक्रमः।

भूपालमहोदय उवाच, "नैतत् सम्यक्। स्थानपरिवर्तनं विधेयं त्वया।"

अत्रान्तरे समागता हरिधनस्य जननी। तां दृष्ट्वा भूपालमहोदयोऽ-वोचत् आर्ये, अतिमात्रं क्षीणं संवृत्तं हरिधनस्य शरीरम्।

वत्स, अथ किम्। दृश्यतां तावत् केवलं कतिचित् कङ्कालानि अवशिष्यन्ते।

तदर्थमेवोक्तं मया, न खलु इतः परमपि युज्यते समुपेक्षितुम्। पश्चिम-प्रदेशे शोभनस्थानमुपगम्य वायुपरिवर्तनं चेद्विधीयते सम्यक् स्यात्।

सम्यक् तावत् स्यात्, परं कोऽत्राभ्युपायः? कुत्र वा प्रेषयेयम्, को वा नयेत्?"

भूपालमहोदयस्तत्र चिन्तयन्नासीत्।

हरिधनः क्षीणस्वरेणोवाच, भवतु एवमेव यति दिनानि गच्छन्ति गच्छन्तु। सहायसम्पदवर्तिष्यत चेद् बहोः कालात् पूर्वमेव पश्चिमप्रदेश-मगमिष्यम्। भवतु इत्थमेव यति दिनानि गच्छन्ति गच्छन्तु। इत्युक्त्वाऽसौ गभीरं दीर्घं च निशश्वास।

तच्छ्रुत्वा हरिधनस्य माता नेत्रयोः समर्पितवस्त्राञ्चलप्रान्तम्। भूपालमहोदयस्यापि नेत्रद्वितयमार्द्रभावमभजत। उवाच चासौ—अपि गमिष्यसि त्वं हरिधन मया सह? इदानीं तावद् मुङ्गेरप्रदेशस्य जलवायू अतीव शोभनौ। शीततौः कतिचन मासांस्तत्रावस्थानेनोपकारः स्यात्।

हरिधनोऽवनमितमस्तकस्तत्रोपविष्टोऽतिष्ठत। तदीया जननी प्रोवाच, नय त्वं तात। तव हस्ते समर्प्याहं निश्चिन्ता तिष्ठेयम्।

अहं तावदेनं तत्र नेतुं प्रभवामि, आर्ये। अमूस्तावदिदानीमत्रै-वावस्थाप्य गच्छामि, तथाऽपि तत्र मे पाचकभृत्यादयः सर्व एव वर्तन्ते, न खलु कोऽपि क्लेशो भविष्यति। तत्र द्वित्रमासावस्थानेन ज्वरस्य निवृत्तिः प्लीहाया अपि स्वरूपप्रत्यापत्तिः स्यादिति मे प्रतीतिः। दुर्गस्याभ्यन्तर एव भागीरथीतीरे मदीयं निवासस्थानम्। सर्वथा उन्मुक्तमेव, पवनप्रवाहादिकं सम्यगेव।

माताऽवदत्, तथैव कुरु। गच्छ तावद्धरिधन आर्यस्य ते निवास-स्थाने कालं कञ्चनावस्थाय सम्पादय स्वास्थ्यम्। कथं वा त्वं मन्यसे?

हरिधनस्तु किमप्युत्तरं न प्रतिपेदे। आर्योऽवदत्, दुर्गाभ्यन्तरं सर्वथा

सिक्तसंमृष्टं सुनिर्मलञ्च। भ्रमणार्थमपि वर्त्तते पर्याप्तं स्थानम्—सुरम्याणि क्षेत्राणि सदैव चक्रमकायन्ते। अपराह्णे युरोपीयाः पुरुषा नार्यश्च तत्र संक्रीडन्ते। शोभना रथ्या अन्तरान्तरा च रमणीयान्युद्यानानि, यथेच्छं भ्रमणायालंभविष्यसि। किञ्च शीततांवस्मिन्नभिनवानि आलुक-कलायादीन्याविर्भूतानि। मत्स्या अप्यतीव सुलभाः—गङ्गाजाताः सुमहान्तो रोहितादयः। मदीयमन्दिरे एव वर्तन्ते गावस्ताश्च प्रत्यहं पलपरिमितं दुग्धं ददति। सुविशुद्धं घृतं—न खल्वत्रत्यमिव द्रव्यान्तर-विमिश्रम्। छागमांसमप्यतीव सुलभम्—प्रतिरूप्यकं पलचतुष्टयपरिमितम्। किञ्च, ऋतावस्मिन् पक्षिणोऽपि नैकविधा लभ्यन्ते। तित्तिरवर्तकारण्य-हंसप्रभृतीन् विक्रेतुमायान्ति व्याधाः। मदीयौड्रदेशीयः पाचकोऽपि सम्यगेव पचति।

हरिधनस्य मनसि मुङ्गेरगमनाभिलाषो दृढतरं पदमुपलेभे। विशेषत-स्तत्रत्यसुलभ्यभोज्यपरम्पराश्रवणेन रसना तस्य रससिक्ता सञ्जाता। परं तस्य सकाशात् उपकारस्वीकारे तस्य मनो दोलायमानमासीत्। अत एवासौ सन्नियम्याऽऽत्मानं तूष्णीं स्थितः।

भूपालमहोदयोऽपृच्छत, अयि भोः, अपि गमिष्यसि? हरिधनोऽवदत, भवत्वार्य, किञ्चिद् विचिन्त्य भवते निवेदयिष्यामि। वध्वा साकमसम्मन्त्र्य हरिधनः किमपि न वक्ष्यतीति मत्वा भूपालमहोदयः स्वगतं विजहास।

(क्रमशः)

---

# मेघनादवधम्

[ निबन्धकः—श्रीनित्यगोपाल-विद्याविनोद-शर्मा ]

## तृतीयः सर्गः

इत्थं विलप्य क्षणदाचरेन्द्रो निवर्त्य दृष्टीः समपश्यदारात् ।
अपारसिन्धुं दृढसेतुबद्धं प्लवच्छिलौघं स्थिरमेघदेश्यम् ॥ १ ॥
सेतोर्महाग्रावविनिर्मितस्य फेनोर्मयः पार्श्वत उग्रनृत्याः ।
फणीव भूपः फणिनामजस्रमुदश्वसन् घोरगभीरघोषम् ॥ २ ॥
विचित्रबन्धः स हि सेतुराजो विशालराजायनसन्निवेशः ।
जल्पन्ति गच्छन्ति जनाश्च येन वर्षास्विवापः परिपूर्णनद्याम् ॥ ३ ॥
मानेन मानी स हि वीरवर्यो रक्षोनृपः प्राह निरीक्ष्य सिन्धुम् ।
किं सुन्दरं माल्यमहो महाब्धे कण्ठे धृतं साम्प्रतमालिरूपम् ॥ ४ ॥
धिक् त्वामपां नाथ सहस्रकृत्वो बन्धं भवानर्हति किं कदर्थम् ।
अजेय-दुर्लङ्घ्य-मणिप्रसूतेर्भूषा तवैषा न कदापि योग्या ॥ ५ ॥
भाषस्व सिन्धो शृणवान्यहं तान् गुणांस्त्वमैः किङ्करतां रघूणाम् ।
यैर्वा स रामः पवनोपमं त्वां चकार दासं निजकार्यभाजम् ॥ ६ ॥
बद्धं यथर्क्षं नयति प्रकामं गृहं गृहं नर्त्तक ईप्सुरर्थम् ।
तथाऽभवस्त्वं रघुनाथदासो बध्येत सिंहो भुवि केन रज्ज्वा ॥ ७ ॥
त्वद्वक्षसीयं नगरी मदीया हैमी सुनीलाम्बुनिधिप्रभो भोः ।
विद्योतते माधववक्षसीव नाम्ना मणिः कौस्तुभ इन्दुकान्तः ॥ ८ ॥
उत्तिष्ठ भङ्ग्धीममकीर्त्तिहेतुं सेतुं द्रुतं मार्जय ते कलङ्कम् ।
निमज्ज्य शत्रुं प्रबलं पयःसु संरक्ष्यतां मे विनयो जलेश ॥ ९ ॥

---

(१) आरात् समीपे। (४) मानेन, धान्येन धनवानितिवदभेदे तृतीया। (५) मणि-प्रसूतेः रत्नाकरस्य। (६) ऐः प्राप्तवान्। (७) यथर्क्षं भल्लूकमिव।

एतावदुक्त्वा स हि राक्षसेन्द्रः सपात्रमित्रस्वजनोऽतिखिन्नः ।
शिश्राय जाम्बूनद-पीठमग्र्यं महाविषादार्गलरुद्धकण्ठम् ॥ १० ॥
तदा समन्तान्मृदुरोदनोत्थः श्रुतो ध्वनिर्घोरतरा च शिञ्जा ।
सनूपुराद्यपदकिङ्किणीनामश्रावि रक्षःसमितावकस्मात् ॥ ११ ॥
चित्राङ्गदाख्या प्रविवेश देवी विक्षिप्तकेशी ह्यनलङ्कृताङ्गी ।
समं सुवर्णच्छविभिः सखीभिः सभां विपुष्पा व्रततीव शीते ॥ १२ ॥
सुपुत्रशोकाश्रुपरीतनेत्रा तुषारसिक्ताम्बुजपद्मिनीव ।
जग्धेषु पोतेषु च पक्षिणी वा सर्पेण नीडे विवशीकृताऽसौ ॥ १३ ॥
कल्पान्तवातप्रतिमः स शोको गौरी-वयस्या-चपला-विलासः ।
निर्मुक्तकेशाम्बुदबाष्पवर्षैस्तिरोऽदधात्तां खमिवाग्ररेणवा ॥ १४ ॥
दयस्मेद्ध स्वर्णासनसंस्थितोऽपि रक्षोगणेशो व्यजनं तथास ।
दूरं सबाष्पं व्यजनी च छत्रं छत्री क्रुधाऽसिं विमुमोच खड्गी ॥ १५ ॥
चित्राङ्गदाऽथ प्रतिवीक्ष्य नाथं राज्ञी बभाषे पतिदेवभक्ता ।
तनूजरत्नं तव हस्तदत्तं हृतं मया कोटरपोतवद्व वेः ॥ १६ ॥
वद प्रभो कुत्र भवानरक्षीत्तं मे निधिं दुर्लभमाशरेन्द्र ।
दीनार्थगुप्तिः खलु राजधर्मस्तवेयमादेशकरी सुदीना ॥ १७ ॥
जगाद राजा दशकन्धरस्तां केन प्रिये गर्हसि मामदोषम् ।
वाम्याद् विधेर्दुःखमिदं सहेय निन्देज्जनं को भुवि भाग्यहीनम् ॥ १८ ॥
वीरात्मजैर्यं मम हेमलङ्का पश्याद्य शून्या प्रियवीरपुत्रैः ।
प्रतीयते निष्कुसुमा वनाली नदीव वा क्षीणजला निदाघे ॥ १९ ॥
रामस्तथा मे विदधाति लङ्कां ताम्बूलभूमीमिव दुष्टशल्यः ।
ताम्बूलिनं विक्षतसर्वदेहं तदाज्ञयाऽङ्घ्रिर्निगडेन बद्धः ॥ २० ॥

---

(१०) जाम्बूनदपीठं सुवर्णासनम् । (१४) अवरेणवा दुःखधूलिभिः । (१५) व्यजनी व्यजनकर्त्ता । (१६) वेः पक्षिणः । (१७) आशराणां रक्षसाम् इन्द्रः राजा, तत्सम्बुद्धौ । (२०) शल्यः स्राविध् सजारु इति भाषा ।

एकस्य सूनोर्विरहेण तथा त्वं मे शतात्मोद्भवशोकदीर्णम् ।
अहर्निशं चित्तमिव स्थिरायोरुड्डयाति तूलः स्फुटितात्मशिम्ब्याः ॥२१॥
नूनं तथा राक्षसशेखरा भोरेकैकशो यान्ति कृतान्तगेहम् ।
दुष्टः सदैवं भुजदण्डयुग्मं प्रसार्य हन्तीति पुरीमवेहि ॥ २२ ॥
बभूव तूष्णीं रजनीचरेशो नताननः शोकविदीर्णवक्षाः ।
चित्राङ्गदाऽथाब्जमुखी सनेत्रा रुरोद दुःखात्तनयं स्मरन्ती ॥ २३ ॥
जगाद भूयः स हि राघवारिर्विलाप एष त्वयि शोभते किम् ।
वीरप्रसोस्ते खलु वीरपुत्रः स्वर्गं गतो नाशितदेशवैरी ॥ २४ ॥
त्वं वीरमाता तव शूरपुत्रो वीरत्वधर्माय हतः किमर्थम् ।
रोरुद्यसे त्वं मम वंश उच्चैर्जातस्तवामुष्य सुतस्य वीर्यात् ॥ २५ ॥
सुचारुनेत्राऽथ जगाद देवी चित्राङ्गदा सुष्ठुतरां स्वकान्तम् ।
मन्येऽहमात्मानमशेषधन्यं प्रसूः स्वदेशाहितघातिसूनोः ॥ २६ ॥
लङ्का तव क्व क्व च पूरयोध्या केनेत एतः स हि राघवेन्द्रः ।
विचिन्त्यतां तस्य निदानमीश क्लेशस्य यस्तं समुवाह लङ्काम् ॥ २७ ॥
तीरे सरय्वा वसतिस्तदीया क्षुद्रो नरः स श्रुतिगोचरो मे ।
समेत्य लङ्काममरेशलोभ्यां सिंहासनार्थं तव युध्यते किम् ॥ २८ ॥
ब्रूषे कथं ते स तु देशवैरी को वामनो वाञ्छति धर्तुमिन्दुम् ।
निसर्गनम्राननदन्दशूकः प्रहारकं किं न दशत्यजस्रम् ॥ २९ ॥
अज्वालयत् कोऽग्निमिमं नगर्यां सुवर्णमय्यां वद जीवितेश ।
स्वकर्मदोषेण निमज्जितस्त्वं निमज्जयस्यात्मकुलं तथैव ॥ ३० ॥
चित्राङ्गदेयद्द वचनं विधाय रोरुद्यमाना सह सङ्गिनीभिः ।
समानशोकाभिरसह्यदुःखाद्द विवेश शुद्धान्तमवद्यदृश्यम् ॥ ३१ ॥
विहाय हैमासनमाशु राजा हुङ्कृत्य घोरं मदशोकतीव्रम् ।
प्रोवाच हा हन्त दिनैरियद्भिर्लङ्काऽभवन्मे खलु वीरहीना ॥ ३२ ॥

(२१) स्थिरायोः शाल्मलीतरोः । (२७) वहतेर्द्विकर्मकत्वम् । (२९) दन्दशूकः सर्पः ।
(३१) अवद्यमशोभनम् ।

कं प्रेरयिष्यामि मृधेऽत्र भीमे मानः सुरक्ष्येत कुलस्य केन ।
स्वयं गमिष्यामि भटेन्द्रसंघः संनह्यतां तूर्णमरातिहत्यै ॥ ३३ ॥
लङ्काविभूषा मम वीरनागाः पश्यामि रामं गुणिनं गुणैः कैः ।
अरावणा भूमिररामनामा भवेदियं वा समरेऽद्य नूनम् ॥ ३४ ॥
आदेशमाकर्ण्य नृपस्य सर्वे वीरा अनह्यन् सुर-दैत्य-मर्त्या- ।
त्रासाः समेता निरगुर्नगर्या जीमूतमन्द्रं पटहाश्च नेदुः ॥ ३५ ॥
क्षिप्रं निरीयुः करिणश्च वार्या दुर्वारवार्योघनिभाः समन्तात् ।
त्यक्त्वाऽश्वशालां प्रययुश्च तूर्णं विदष्टवल्गानतकन्धराश्वाः ॥ ३६ ॥
चचाल शीघ्रं बहुलैः शताङ्गैः सुवर्णशीर्षण्यपदातिसङ्घः ।
सुदीप्तकोषोज्ज्वलखड्गचर्म-वर्मादिसन्नद्ध उदग्ररोषात् ॥ ३७ ॥
शितास्त्रशस्त्रद्युतिदीप्तकाष्ठा निषादिनो वज्रधरेण तुल्याः ।
नासत्यकल्पाश्च सुसादिवारा बभुर्यथा द्राव उदंशुमालः ॥ ३८ ॥
प्रसार्य केतुं ध्वजधृग् दधार सुवर्णपक्षाविव वैनतेयः ।
संग्रामतूर्यं विननाद घोरं कौदण्डघोषश्च रुरोध कर्णौ ॥ ३९ ॥
लङ्का चचाल भटपादभरेण तीव्रं वारीशरोषनदितं ह्यदियाय तत्र ।
यत्र स्थिता कनकपद्मवने जलेशी केशप्रसाधनपरा चकितं ददर्श ॥४०॥

इति श्रीमेघनादवधे महाकाव्ये रावणस्य रणप्रयाणं
नाम तृतीयः सर्गः ॥ ७ ॥

---

## चतुर्थः सर्गः

सम्भाष्य सा सखीं हर्षविकस्वरस्वरं तदा ।
पप्रच्छ वद को हेतुर्धैर्यहानेर्जलेशितुः ॥ १ ॥

---

(३७) शीर्षण्यं शिरस्त्राणम् । (३८) (क) काष्ठाः दिशः । (ख) नासत्यौ अश्विनौ । (ग) वारः समूहः ।

पश्य मुक्तामयी गेहचूडा चङ्क्रम्यते कथम् ।
दुष्टवायुकुलं मन्ये तरङ्गैर्योद्धुमिच्छति ॥ २ ॥
प्रतिश्रुतिं कथं वायुर्विसस्माराल्पवासरैः ।
धिक् तं यो हि मया पृष्टो मरुतामवरोधनम् ॥३॥
हसित्वा प्राह वारीश आज्ञां देहि जलेश्वरि ।
किङ्करीभिर्विहारार्थं नदीभिः सह ते चिरम् ॥४॥
तवाऽऽदेशमहं वक्ष्ये शिरसा नतमौलिना ।
अन्वमोदे तदैवाहं तत् कथं सोऽद्य गल्भते ॥५॥
सखी कलकलं प्राह वृथा निन्दसि मारुतम् ।
नैषा वारीन्द्रमहिषि वात्या निर्याति रावणः ॥६॥
लघूकर्त्तुं परं गर्वं राघवस्य रणाजिरे ।
संनह्यते नृपाटानामीश्वरो वीरकेशरी ॥७॥
वरुणानी पुनः प्राह सत्यमुक्तं सखि त्वया ।
सीतार्थं वर्त्तते युद्धं भैरवं रामरावणम् ॥८॥
कर्बूरकुलराजश्रीर्मम प्रियतमा सखी ।
क्षिप्रं तां याहि शुश्रूषे युद्धवृत्तान्तमद्भुतम् ॥९॥
दत्त्वा पद्ममिदं तस्यै वक्ष्यस्येतच्च तत्र सा ।
यत्राऽऽसीनाऽभवत् पूर्वं पुष्पितं सुमनोहरम् ॥१०॥
तद् गृहं तमसाक्रान्तं तत आरभ्य सा यतः ।
अह्नोऽगच्छद् व्योमकल्पं चन्द्रिकादीप्तिवर्जितम् ॥११॥
हित्वा जलं तदादेशादुत्तस्थौ मुरला सखी ।
पूष्णे दर्शयितुं कान्तिं राजतीं शफरी यथा ॥१२॥
दूती तत्राऽऽययौ लङ्कापूर्यां यत्राब्जमन्दिरे ।
आसाञ्चक्रे महादेवी कमला केशवप्रिया ॥१३॥

---

(२) चङ्क्रम्यते भृशं कम्पते । (५) गल्भते धार्ष्ट्यं करोति ।

द्वारे स्थित्वा क्षणं दूती निरीक्ष्य रूपमाधुरीम् ।
श्रिया सन्तर्पयामास नेत्रे कृष्णमनोहृतः ॥१४॥
दक्षिणः पवनस्तत्र ववौ मन्दं स्वकिङ्करः ।
आघ्रातुं चरणाम्भोज-सौरभं देववाञ्छितम् ॥१५॥
भान्ति पुष्पाणि सर्वत्र कुबेरभवने यथा ।
रत्नानि चागुरुर्धूपो हसन्त्यां दह्यते द्वयम् ॥१६॥
श्रेणीकृतानि शोभन्ते द्रव्याणि हैमभाजने ।
स्वर्णदीपा विभासन्ते सुगन्धितैलपूरिताः ॥१७॥
ते हीनज्योतिषो धाम्ना श्रिया दिक्षु प्रसर्पता ।
खद्योता इव भान्ति स्म विधौ पूर्णे समुद्गते ॥१८॥
श्रीरिन्दुवदना तत्र विषण्णा प्रत्यवाङ्मुखी ।
आसिष्टेमेव वङ्गेषु प्रभाते विजयातिथेः ॥१९॥
न्यस्य पाणितले गण्डमासीना कमलासने ।
ज्योतिर्मयी रमा शोकः कथं पुष्पहृदं विशेत् ॥२०॥
प्रविश्य मन्दिरं सुश्रीर्मुरलाऽऽख्यी प्रणम्य च ।
रमायाः पद्मसङ्काशावादे प्रश्रितं वचः ॥२१॥
रत्नाऽन्ववायराजश्रीस्तामाशस्याभ्यभाषत ।
हेतोः कस्याऽऽगतिस्तेऽद्य मुरले मन्निकेतने ॥२२॥
जलेश्वरी सखी कुत्र मम सा प्राणवल्लभा ।
अहर्निशं चिन्तयामि यस्याः कल्याणसाधनम् ॥२३॥
तद्वेश्मनि यदासं सा यामकार्षीत् कृपां मयि ।
वरुणानी न विस्मर्तुं जातु तां पारयाम्यहम् ॥ २४ ॥
हरेरुरसि वासेच्छू रमा तेन विवर्जिता ।
यत् स्नेहभेषजगुणैर्जीविता तच्छिवं वद ॥ २५ ॥

(१६) हसन्त्यां धुनची इति ख्यातायाम् । (२२) अन्ववायः वंशः ।

मुरला प्राह सा देवी सुखमास्ते पयस्तले ।
शुश्रूषते रणोदन्तं सीतार्थं रामरक्षसोः ॥ २६ ॥
प्रेरितं पद्ममेतत्ते पादपद्मस्थलोत्थितम् ।
प्रणयिन्या जलेशस्य प्रणयेन गरीयसा ॥२७॥
विनिश्वस्य विषादेन वैकुण्ठधामकौमुदी ।
इन्दिरोवाच हा हन्त कथं वक्ष्यामि तत्कथाम् ॥२८॥
प्रत्यहं हीनवीर्यत्वं याति दुर्मति-रावणः ।
उदन्वतस्तटमिव चलोर्मिघातदुर्बलम् ॥२९॥
भवेस्त्वं चकिता श्रुत्वा प्रवृत्तिं रणदारुणाम् ।
यत्र युद्धे कुम्भकर्णो वीरो वीरशिरोमणिः ॥३०॥
वीरबाहुस्तथा चान्ये वीरनागा दिवं गताः ।
श्रूयते रोदनारावो देव्याः शोकक्षतात्मनः ॥३१॥ (युग्मम्) ।
रुदन्ति मातरो नित्यं हतपुत्रा गृहे गृहे ।
सत्यः पतिविहीनाश्च जिहासामि पुरीमिमाम् ॥३२॥
पप्रच्छ मुरला देवि शुश्रूषे ब्रूहि के भटाः ।
संनह्यन्ते रणायाद्य वीरदर्पापहस्तिताः ॥३३॥
हरिप्रिया प्रत्युवाच नाहं जानेऽद्य को व्रजेत् ।
युद्धाय गच्छ पश्याव समराय क उद्यतः ॥३४॥
रमा समुरला क्षौमवासा रक्षःसुतोपमा ।
एवं व्याहृत्य बहुधा निर्जगाम पुरास्ततः ॥३५॥
रुराव किङ्किणी कलं शुशुभे कङ्कणं करे ।
तनौ कट्यां तथा काञ्ची रराज नेत्ररञ्जनी ॥३६॥
स्थित्वा द्वे मन्दिरद्वारि प्रैक्षेतां सैन्यनिर्गमम् ।
श्रेणीबद्धं राजमार्गे वाताहतार्णवोर्मिवत् ॥३७॥

---

(२६) उदन्तं वृत्तान्तम् । (३३) अपहस्तिताः गलहस्तिताः । (३५) व्याहृत्य उक्त्वा ।

हस्त्यश्वरथपादातं सैन्यं कम्पितभूतलम् ।
चचाल प्रलयोद्भूतनिर्घात इव भीषणः ॥३८॥
मन्द्रमाजघ्निरे तूर्याण्युड्डीनाश्छतशो ध्वजाः ।
सौवर्णान् दृष्टवत्यौ ते वातायनमभि स्थिते ॥३९॥
विश्वैकसुन्दरी लङ्कावधूः किरति हर्षिता ।
दिक्षु सुमनसो लाजान् मङ्गलध्वनिपूर्वकम् ॥४०॥
प्रोवाच मुरला वीक्ष्य रमामिन्दुनिभाननाम् ।
त्रिदिवैश्वर्यमीक्षेऽद्य भूरि देवि भुवस्तले ॥४१॥
मन्ये स्वयं सुरेन्द्रोऽद्य सुरसैन्यैः समन्वितः ।
प्रविवेश पुरीं लङ्कां राक्षसेन्द्रसुरक्षिताम् ॥४२॥
कृपालो वद मे देवि रथिकाः के युयुत्सवः ।
सज्जन्ते साम्प्रतं मत्ता वीरगर्वविचालिनाः ॥४३॥
प्रत्युवाचेन्दिरा साध्वी सरोजरुचिरेक्षणा ।
हन्तालि स्वर्णलङ्केषा वीरवृन्दविवर्जिता ॥४४॥
महारथिकुलेन्द्रा येऽभवन् पूर्वं भयावहाः ।
देवदानवमर्त्यानां भीमे युद्धे क्षयं गताः ॥४५॥
रघुशूरो धनुर्द्वन्द्वे शुभेऽह्नि तेन नाशितम् ।
पश्य भीमं विरूपाक्षं दुर्वारं समरे परैः ॥४६॥
हस्तिपृष्ठे कालनेमिं रिपूणां कालमोजसा ।
भिन्दिपालकरं साद्रिवरं तालद्रुमाकृतिम् ॥४७॥
तालजङ्घाख्ययोद्धारं गदिनं वा गदाधरम् ।
तथाऽमुं रणासम्मत्तं प्रमत्तं पश्य भैरवम् (युग्मम्) ॥४८॥
कति वाऽन्यान् वदिष्यामि वीराञ्छतसहस्रशः ।
ये दग्धाः समरे वह्नौ दावेनोच्चद्रुमा यथा ॥४९॥

---

। । ... । .कीनषा यतारा ।

भूयोऽजिज्ञासत दूती ब्रूहि देवीश्वरि प्रभु ।
मेघनादं कथं नेच्चे जितेन्द्रं युद्धदुर्मदम् ॥५०॥
बलिष्ठः स हतः किम्भीरुस्तुमुले तद्रणाङ्गने ।
क्रव्यादकुलहर्यक्षो बभूव भीमविग्रहे ॥५१॥
सुस्मेरवदना चाह सखीं मन्येऽहमिन्द्रजित् ।
अजानन् निधनं वीरबाहोर्भ्रमति कानने ॥५२॥
वरुणानीं व्रज क्षिप्रं वग्धि तां कानकीं पुरीम् ।
त्यक्त्वा यास्यामि वैकुण्ठं कष्टं नश्यति रावणः ॥५३॥
पापपङ्कप्रपूर्णेयं लङ्का स्वच्छं सरो यथा ।
वर्षासु समलं दुःखं साम्प्रतं त्यज्यते मया ॥५४॥
जलेशगृहिणी तत्र मुक्तामयनिकेतने ।
प्रवालपीठमध्यास्ते यत्र त्वं याहि सत्वरम् ॥५५॥
तत्राहं यामि यत्रास्त इन्द्रजिन्नेतुमानसा ।
स्वर्णलङ्कापुरं तत्र फलिता प्राक्तनं ध्रुवम् ॥५६॥
नत्वा देवीपदाम्भोजं सुन्दरी मुरला ययौ ।
व्योम्ना शिखण्डियोषेव चित्रं वीक्ष्येन्द्रकार्मुकम् ॥५७॥
मञ्जु-कुञ्ज-वनेनासौ मुरला प्रविवेश ह ।
नीलवारिनिधानस्य सागरस्य तटं द्रुतम् ॥५८॥
इतः पद्मपलाशाक्षी नारायणप्रिया रमा ।
दूरं ययौ ततो यत्र मेघनादोऽवसच्चिरम् ॥५९॥
चलन्ती व्योममार्गेण रमा प्राप कियत्क्षणैः ।
वासमिन्द्र-जितो जिष्णोश्चिराय रणमूर्द्धनि ॥६०॥
देवेन्द्रपुरकल्पायां पुर्यां तत्र मनोहराः ।
वज्रचूडामणिस्तम्भाः प्रघणाः सवना बभुः ॥६१॥

---

५३ । वग्धि ब्रूहि, वच्धातोर्लोट् हि । ६१ । प्रघणाः अलिन्दाः ।

कूजन्ति कोकिलाः शाखारूढा भृङ्गा रुवन्ति च।
पुष्यन्ति चित्रपुष्पाणि वहन्ति दक्षिणानिलाः ॥६२॥
प्रविश्य हेमहर्म्यं सा ददर्श रमणीकुलम्।
स्वर्णद्वारि भ्रमच्छङ्काहीनं भीमकळेवरम् ॥६३॥
धनुष्पाणि सनिषङ्गं वेणीचुम्बितपृष्ठकम्।
दधद् विद्युच्छविमिव रत्नालीं वेणिमध्यतः ॥६४॥
तूणे शरा मणीसर्पाः सूर्यांशुवेष्टिते यथा।
प्रफुल्लकमले पीनस्तनौ हाटकवर्मितौ ॥६५॥
नवयौवनसन्नद्धा मातङ्ग्यो वा मधोर्दिने।
खरापाङ्गायताक्ष्यश्च नार्यो यान्ति समन्ततः ॥६६॥
काञ्ची नितम्बबिम्बेषु तासां मधुरशिञ्जिता।
सौवर्णा नूपुराः पादपद्मेषु मधुनिक्कणाः ॥६७॥
सप्तस्वरा विपञ्ची च मृदङ्गमुरजादिकम्।
तूर्यं सङ्गीतघोषश्च श्रूयन्ते चित्तमोहनम् ॥६८॥
वीहारं कुरुते तत्र प्रमदावृन्दसंहितः।
वीरर्षभो यथा रात्रौ चन्द्रो दक्षसुतान्वितः ॥६९॥
कालिन्दीपुलिने यद्वा वेणुवाद्यविनोदनः।
गोपीभी रमते धेनुपालो हृष्टमना यथा ॥७०॥
यष्टिमुष्टी रमा शुभ्रवासा धात्रीच्छलात्ततः।
मेघनादस्य नाम्नागात् प्रभाषा यामिनीचरी ॥७१॥
हित्वा स्वर्णासनं वीरसिंहो नत्वा पदाम्बुजे।
धात्र्याः पप्रच्छ कुशलं लङ्काया हेतुमागतेः ॥७२॥
शिरस्याघ्राय जलधिपुत्री मायामयी ततः।
धात्री प्राह किं नु वक्ष्ये लङ्काया घोरदुर्दशाम् ॥७३॥

---

६५। (क) मणिदर्वीकः। (ख) हाटकं सुवर्णम्।

भीमे रणे हतो ज्येष्ठो भ्राता तव महाबलः ।
वीरबाहुः शुचा तस्य शोकार्त्तो राक्षसाधिपः ॥७४॥
सैन्यशङ्कसुसन्नद्धः साम्प्रतं स महानृपः ।
युयुत्सुरुद्यतो याति स्वयं शोकप्ररोचितः ॥७५॥
विस्मितः स महाबाहुः पप्रच्छ देवि मे वद ।
ममानुजं न्यहन् युद्धे रामो निशि रणे हतः ॥७६॥
खण्डखडं मया कृत्तो राघवो बाणवर्षणैः ।
कुतस्त्वयाद्भुता वार्त्ता प्राप्ताम्ब कृपया वद ॥७७॥
प्रावाचीन्दिरया समुद्रसुतया सौन्दर्यसीमान्तया
हा हा पुत्र विदेहराजतनयानाथो नरः कैतवी ।
नष्टस्त्वद्विशिखेन जीवित इतो भूयो व्रज त्वं द्रुतं
रक्षोवंशयशः प्ररक्ष समरे रक्षःकुलर्क्षेश भोः ॥७८॥

इति श्रीमेघनादवधे-महाकाव्ये इन्दिरा-मेघनादसंलापो
नाम चतुर्थः सर्गः ।

---

# संस्कृतसाहित्ये नवीनच्छन्दःप्रवृत्तिः

[ निबन्धकः—भिषग्रत्नश्रीलक्ष्मीनारायणभागवती ]

दृश्यते हि यद्समीयवङ्गीयादिप्रादेशिकसाहित्यसमूहेषु प्राचीनकाल-प्रवर्त्तितच्छन्दोनिकरेभ्योऽप्यन्यानि बहुशश्छन्दांसि प्रवर्त्तितान्याधुनिक-कवितारसरसिकैः। परन्तु समग्रसभ्यजगति समुच्चैर्विघोषितप्रशंसे साहित्याकरस्वरूपे संस्कृतसाहित्ये किमप्यपरन्नवीनच्छन्दःप्रवर्त्तनं न दृश्यते न वा श्रूयत इत्यहो कारणमस्यैवमेव भवितुमर्हति यदाधुनिकैः

(७६) हतः मयेति शेषः । (७८) (क) विशिखेन बाणेन । (ख) ऋक्षेश चन्द्र ।

संस्कृतसाहित्यसेवकैः किमपि नवीनं वस्तु तत्र प्रवर्त्तनीयमित्यत्र नैव प्रवर्त्तयते बुद्धिः। अधिकन्त्वाङ्गलभाषामयार्थकरविद्यासु यान्त्रिकादिविषयान्तरेषु च जनानां समीहा यथा परिलक्ष्यते न तथा मनआधानं संस्कृतभाषामयविषयेष्वेषामर्थकरशक्तिराहित्यान्नरपत्याद्यधिकृतैर्विशेषेणानादरप्रदर्शनाच्च । वैदेशिकाङ्गलादिभाषामयविषयविशेषेषु यथाऽनुशीलनगवेषणार्थमुत्साहः प्रदीयते न दीयते तथा किमप्यस्मद्देशीयसंस्कृतसाहित्याद्यनुशीलनगवेषणादिष्विति परं दुःखजनकम्। सतस्तु सुमधुरामरभाषामयसाहित्यादिविषयेषु प्रेरणप्रदानेन नवं नवं वस्तु नाऽऽविष्कृतं भवेदिति को वा वक्तुं समर्थः? भवतु, अधुनाऽपि दैन्यदारिद्र्यप्रपीडितैः संस्कृतसाहित्यसेवकैर्नवीनं वस्त्वाविष्कर्त्तुं शक्यते किमपीत्येतदेव दृष्टान्तेन प्रदर्शयितुं प्रवृत्ता वयम् ।

संस्कृतसाहित्यजगति पिङ्गलादिविरचितं वैदिकं लौकिकं वाऽऽछन्दोऽधिकृत्यप्रवृत्तं प्राचीनग्रन्थनिकरं विना ततोऽप्यर्वाचीनकालकृतश्रुतबोधच्छन्दोमञ्जरी-वृत्तरत्नाकर-वृत्तमालादीन्यन्तरेण ततः प्रभृत्याधुनिककाले कैश्चन सुधीभिश्छन्दोविषये विशेषयत्नो विहित इत्यत्र सन्दिग्धा वयम्। धन्यतमाः खलु कामरूपनिवासिनो यदद्य प्रभृत्यर्द्धशताब्दीतः प्रागेव कामरूपजनपदललामभूतैराढधरियावास्तव्यैर्महामहोपाध्यायेत्युपनामालङ्कृतैः स्वरारूढैः श्रीमद्भिर्धीरेश्वराचार्यकविरत्नमहोदयैर्वृत्तमञ्जरीति सुविशालं छन्दःशास्त्रं विनिर्मितम्। परमतीव दुःखदायिनीयं वार्त्ता यदधुनाऽपि शास्त्रमिदन्न प्रकाशितं केनापि। अचिरमेव ह्यासामसाहित्यसम्मेलनं तावदस्य ग्रन्थस्य प्रकाशं स्वीकृतवत्, तत्र कृतयत्नञ्चेत्याशान्विता वयम्। ततः प्रभृत्यासामप्रदेशे कोऽपि साहित्यरसिकश्छन्दोविषये कृतयत्न इत्यस्माकं स्मृतिपथं नाऽऽरोहति। परमितो दिनकतिपयात् प्रागेवाधोवर्णितरूपं कर्मावलोक्यातीव विषण्णाः प्रसन्नाश्च स्मः।

अचिरसमागतसारस्वतपूजामहोत्सवार्थं छात्रसमूहेन कवितामय-

निमन्त्रणपत्रिकाविरचनानुरुद्धेन बालबन्धुरित्याख्यामापन्नेनास्माकं बन्धुवरेण 'मङ्गलदै ( आसाम ) राजकीयोच्चाङ्गलविद्यालयसंस्कृतशिक्षकेण श्रीमद्धर्मनाथशास्त्रिव्याकरणतीर्थेन तदर्थमपूर्वेण द्वादशाक्षरच्छन्दसैकं श्लोकं विरचय्य छन्दोमञ्जर्यादिग्रन्थोल्लिखितवृत्तलक्षणासंलग्नं तद् वृत्तं समीक्ष्य विरक्तेन चेतसा तल्लिखितपत्रं जीर्णच्छिन्नपत्रिकापात्रे यावत् प्रक्षिपति तावदेमैवास्माभिस्तद्गृहे गोष्ठीप्रसङ्गेन समुपस्थितम्। अस्मानवलोक्य किमप्यस्मत्तो गोप्यं पत्रन्तत्र निक्षिप्तमिति मन्यमाना वयं कौतुकात्तदानीय यदा पठितवन्तस्तदा पूर्वेण च्छन्दसा विरचितं श्लोकमेकमवलोक्य तल्लक्षणं तं पृष्टवन्तः। परन्त्वतीव दुःखाकुलेन मनसा स एवमभिहितवान् यदस्य श्लोकस्य छन्दोमञ्जर्यादिशास्त्रोक्तलक्षणैः सङ्गतिर्न भवतीति लज्जया भवद्भिरनवलोकितमिदं पत्रन्तत्र प्रक्षिप्तवानहम्। परन्तु भवद्भिरिदं दृष्टमेवेत्युक्त्वा सविषादस्तूष्णीं स्थितः। तदवस्थन्तमवलोक्यास्माभिरेवमुक्तं कथं न लक्षणादिकं कृत्वा नवीननामधेयं कृतं वृत्तस्यास्येति। तच्छ्रुत्वा स सहसैव छन्दोमञ्जरीकृतकृतगणानुसारेण गणनिर्देशपूर्वकं वृत्तस्य तस्य "तारिणी" "सारदा" "भारती" "राधिका" चेति नामचतुष्टयं कृतवान्, तद्वृत्तलक्षणं तल्लक्षणलक्षितसमुदायश्लोकश्च भवतां सुधीजनानामवगत्यर्थमन्ते प्रदत्तम्।

वृत्तस्यास्य नामकरणे च महद् रहस्यं वर्त्तते। सुखदुःखादिसमयेऽनवरतं 'तारिणी'ति जगत्तारणकारिण्या नामोच्चारणकारिणा 'तारिणी'ति, सारदासेवकत्वेन तस्याराधनीयदेवतानामधेयत्वात् 'सारदा' इति तत्पर्यायभूतत्वादतीव स्नेहभाजनभूतायास्तदग्रजकन्यकानामानुसारेण च 'भारती'ति, अन्ते च परमप्रेयस्यास्तदर्द्धाङ्गिन्यास्तत्कृतप्रमोदकरकृतकाख्यामनुसृत्य 'राधिका' इति च नाम कृतवानसौ वृत्तकृन्नूतनवृत्तस्यास्य। न वयं जानीमहे एवंविधस्य वृत्तस्यावस्थानं वृत्तमञ्जर्यामस्ति नो वा।

न चेत् काऽपि हानिर्विशेषतस्तु नूतनवस्तुप्रवर्त्तनाद् गौरवविषय एव

परिलक्ष्यत इति संस्कृतसाहित्यच्छन्दसां मध्येऽस्यापि वृत्तस्य स्वीकरणेन सविशेषसमालोचनया नवीनः संस्कृतसाहित्यसेवकोऽसावुत्साहादिदानेनानुग्राह्यः, अन्येऽपि जना एवङ्करणाय समभ्यर्थनीया इत्यलम्बहुलजल्पितेन।

नवीनप्रवर्त्तितवृत्तलक्षणन्तल्लक्षणलक्षितश्लोकश्चैवम् :—

"प्रोक्ता सारदेति गणैर्मज्जयैः।"

"शाके पञ्चबाणभुजङ्गैकमाने
सौरे माघमासि दिने वै तृतीये।
मङ्गलदे पुर्याङ्गलविद्यालयाच्च
पत्री प्रेषिता मिलितैश्छात्रवृन्दैः॥"

'सारदा' इत्यत्र तारिणी, भारती, राधिका इत्यपि पाठ्यम् इति शम्।

---

## विद्वद्वर्यस्य स्वःप्रयाणम्

विषीदामस्तमां तावन्निवेदयितुं यत् कलिकातासंस्कृतविद्यामन्दिरस्याध्यक्षवराः श्रीमन्तो मुरलीधरवन्द्योपाध्यायमहोदयाः परित्यज्य शोकसागरमिमं संसारं परलोकं प्रस्थिता इति। एतेषामनितरसाधारणं पाण्डित्यम्, सर्वतन्त्रस्वतन्त्रा मनीषा, लोकोत्तरञ्च सौजन्यं विरलमिदानीं पण्डितेषु। राजभाषायां मातृभाषायां देवभाषायां च सममेव व्युत्पन्ना इमे महाभागा विरचयामासुर्विविधान् प्रबन्धांस्तासु तासु भाषासु। संस्कृतसाहित्यपरिषत्पत्रिकासम्पादकस्तु संस्कृतविद्यामन्दिरे कलिकाताविश्वविद्यालये च छात्र एवासीन्महाभागानाममीषाम्। अद्यापि प्रत्यक्षत इव परिदृश्यते एषां सौम्या मूर्त्तिः, अद्यापि ध्वनतीव कर्णकुहरेऽमीषां मृदुला वाणी, अद्यापि जनयतीवामन्दमानन्दमेतेषामुपदेशपरम्परा। सर्वथा स्वस्ति विदधातु भगवान् भवानीपतिर्महाभागानाममीषामिति।

---

# पत्रिकापरिचयः

The Calcutta Oriental Journal Vol. I. No 3. December 1933.

संस्कृतभाषाविषयकाङ्ग्लभाषामयस्यास्य पत्रस्य तृतीयायां सङ्ख्यायां प्रथमत उपोद्घातरूपेण पत्रस्यास्य प्रतिपाद्यादिकं विस्पष्टं प्रतिपादितम्। तत्र च निष्कर्षोऽयमेव यद्यपि प्राच्यभाषाविषयाणि बहून्येवाङ्ग्लभाषामयाणि पत्राणि भारतवर्षतो देशान्तरतश्च प्रकाशमासादयन्ति तथाऽपि न तानि प्राधान्येन संस्कृतभाषाविषयाणि न वा साहित्यादिसमालोचनपराणि। प्रायेण सर्वत्रैवैतिहासिकतथ्यसमुद्घाटने प्रयासः सन्दृश्यते, काव्यानां शास्त्राणाञ्च पारमार्थिकतत्त्वप्रकटने प्रयत्नस्तु विरल एव। पत्रेऽस्मिंस्तादृशा एव प्रबन्धा बाहुल्येन प्रकाशयिष्यन्त इति।

ततश्च श्रीमतश्चैतन्यदेवस्य चरितवर्णनपरे चैतन्यचरितामृताख्ये ग्रन्थे समुपलभ्यमानस्य कस्यचिद् वृत्तान्तस्य याथार्थ्यादिपरीक्षणं कृतम्। प्रसङ्गक्रमेण चअविमृष्टविधेयांशसमाप्तपुनरात्ततादिदोषाः प्रमाणोपन्यासपुरःसरं प्राच्यपाश्चात्यसाहित्यशास्त्रग्रन्थोद्धरणपूर्वकं विस्पष्टतया प्रतिपादिताः। भवानीपतिशब्दे आलङ्कारिकैः प्रदर्शितो विरुद्धमतिकारिताख्यो दोषः पारमार्थिको वा प्रातिभासिको वेत्यत्रापि प्रवर्त्तितो विचारः। ततश्च The Anubandhas of Pāṇini ( पाणिनीयानुबन्धाः ) इति शीर्षके निबन्धे पाणिनिव्याकरणे सन्दृश्यमानानामनुबन्धानामकारादिक्रमेण कार्यजातानि प्रदर्शितानि प्रसङ्गतश्च रप्रत्याहारादिविषये वैयाकरणानां मतानि समुद्धृतानि, अनुबन्धानामुदाहरणरूपेण सुप्तिङ्स्त्रीप्रत्ययानामनुबन्धास्तत्कार्याणि च सविस्तरं प्रदर्शितानि। ततश्च Brahman in the Śaṃkara Vedānta समाख्ये प्रबन्धे गतानुगतिकतां विहाय स्वमनीषिकयैव शङ्कराचार्यमतेन ब्रह्मणः स्वरूपं प्रतिपादितम्। ततश्च The Muse

of Mallinātha ( मल्लिनाथस्य कविता ) इति प्रबन्धे निखिलटीकाकार-कुलललामायमानस्य मल्लिनाथसूरेर्यानि पद्यानदीदानीमुपलभ्यन्ते तेषां बहूनि गुणदोषप्रदर्शनपुरःसरं विचारितानि। यच्च मल्लिनाथेनैकावली-व्याख्यायां स्वरमञ्जरीपरिमलटीका स्वीयत्वेनोपवर्णिता, टीकायाः प्रारम्भे पुष्पिकासु च मल्लिनाथतनूजस्य गिरिजानाथस्यैव नाम प्रणेतृत्वेनोप-लभ्यते, तत्रापि विचार्य्य किमपि सिद्धान्तितम्। घण्टापथस्थानां विषम-तमानां मङ्गलश्लोकानामाशाधरभट्टप्रणीतासुविरलप्रचारेतः पूर्वं मुद्रण-पथमनवतीर्णा टीकाऽपि संयोजिता। प्रसङ्गतश्च काकस्य कार्ष्ण्याद्धवलः प्रासाद इति न्यायस्य तात्पर्यं विवृतम् उदाहरणानि च प्रदर्शितानि। अन्ते च कविप्रवरं पाणिनिमधिकृत्य पुनरपि प्रवर्त्तितो विचारः, भागवृत्ति-कृन्मतेन पाणिनीयत्वेन प्रसिद्धस्य श्लोकविशेषस्य पाणिनिप्रणीतत्वं सिध्यति वा न वेति विचारितम्, ततश्च मुग्धबोधप्रणेतुर्वोपदेवस्याभिनव-व्याकरणग्रन्थद्वितयस्य नामनी प्रदर्शिते। ततश्च काव्यप्रकाशगतानां केषाञ्चन प्रचलितपाठानामशुद्धत्वं प्रतिपादितमिति शम्।

---

"भारते भातु भारती"

# संस्कृत-साहित्य-परिषत्

१८५५ शकीय-सौरचैत्रस्य दशमदिवसः।

सबहुमानमावेदनम्—

महोदयाः, आगामिनि सौरचैत्रस्य त्रयोविंशदिवसे शुक्रवासरे सायं सप्तवादनतः परिषदो वर्त्तमानवर्षीयाण्यधिवेशनानि भवितारः, तत्र भवतां सानुग्रहमुपस्थितिः साग्रहं प्राथ्यते इति—

विनीतयोः—
श्रीअमरेश्वरठाकुर-वेदान्तशास्त्रिणः
श्रीयतीन्द्रनाथ-वसुजस्य च
सम्पादकयोः।

आलोच्यविषयाः—

१। गताधिवेशनकर्मविवरणपाठः।

२। नूतनसभ्यनामकीर्त्तनम्।

३। निबन्धानां पाठः—

(क) जानकीहरणम् इतिशीर्षकस्य

(ख) देवभाषामयं मासिकं पत्रम् इतिशीर्षकस्य च

निबन्धकः—श्रीक्षितीशचन्द्र चट्टोपाध्यायः,

(ग) अपूर्वम् इतिशीर्षकस्य

निबन्धकः—श्रीयादवेश्वरकाव्यव्याकरणतीर्थः

(घ) संस्कृत-शिक्षापद्धतिः इति शीर्षकस्य च

निबन्धकः—श्रीरामकृष्ण चक्रवर्त्ती, एम. ए.

४। विविधाश्च।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

February, 1934. | १८५५ शकीये माघे १६श-वर्षस्य १०म-संख्या | Vol. XVI No. 10


## कुलाकुलचर्चा


[ निबन्धकः—शिवनाथशास्त्री, साहित्यभूषणः, साहित्यमणिः ]


जगद्रत्नैः पूर्णैः परशिवसुधाब्धौ सुगहने
    परानन्दोद्रेकोच्छलितवपुरत्यर्थममितेः।
परामर्शौन्मुख्याद् बहिरिव विहर्तुं समुदिता
    परा काचिद्रस्या स्फुरतु मम सौभाग्यलहरी ॥१॥

शिवः पूर्णः स्वात्मारमणरसशीलोऽपि न विना
    क्षणं यामप्यास्ते निरवधिनिजानन्दवपुषम्।
परा सौभाग्यश्रीः परशिवरहोनर्मसुखभूः
    शिवं सा नः पूर्णप्रथनमयमन्तर्वितनुताम् ॥२॥

इह खलु पारमेशषडर्धशासनेषु प्रष्टृप्रतिवक्तृत्वसम्बन्धोद्भावनक्रमेण परम्परयानुग्राह्यानुजिघृक्षारससरसहृदयेन श्रीसदाशिवभट्टारकेण स्वयं गुरुशिष्यभूमिकाग्रहणपूर्वं

"गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः।
पूर्वोत्तरपदैर्वाक्यैस्तन्त्रमाधारभेदतः ॥"

इत्युक्तनीत्या परादिसम्बन्धषट्ककक्रमतोऽवतारितेषु प्रकाशानन्दैकघनमेकमेव परसंवित्तत्त्वमशेषसंविद्विश्रान्तिसतत्त्वं प्रकाशमानतान्यथानुपपत्त्या विश्वानुगतत्वेन परिस्फुरत्तया प्रकाशमानमाम्नायते। तदेवानुत्तरप्रक्रियासु कुलादिशब्दव्यपदेश्यत्वेन गीयते। यदुद्भविष्यशिवादिक्षित्यन्तषडध्वस्फारात्मविसृष्टौ प्रसरच्छिवशक्त्यादिनियतव्यपदेशासहिष्णुतयानाख्याद्यभिधैरुपचर्यते। यदुक्तम्—

"यत्रोदितमिदं चित्रं विश्वं यत्रास्तमेति च।
तत्कुलं विद्धि सर्वज्ञ शिवशक्तिविवर्जितम्॥"

इति। तदेव स्वस्वातन्त्र्यात् सदा पञ्चविधकृत्यकारिस्वभावतया मयूराण्डवत् स्वान्तस्तादात्म्येन संस्थितस्य विश्वस्यावबिभासयिषया मुकुरप्रतिबिम्बवद् भेदाभेदाद्यात्मतया प्रस्फुरत्तथा तथा प्रकाशते। प्रकाशमानमपि विश्वं स्वस्मिन्नुपसंहरते चेति विश्वोदयविलयास्पदत्वात्। "सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयं ब्रह्म, यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः। एवंभूतं च तत्पूर्णाहंभावपरामर्शसारमहामन्त्रात्मकतया स्वात्मसत्कृताशेषवाच्यवाचकावमर्शसतत्त्वं स्वतन्त्रप्रकाशैकघनं परं ब्रह्मेति पराशक्तिरिति प्रकाशविमर्शांशविभागकलनया दिव्यदंपतियुगलत्वेन प्रस्फुरति। तथा च श्रुतिः—"आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहं नामाभवत् तस्मादप्येतर्हि आमन्त्रितोऽहमयमित्येवाग्रे उक्त्वाथान्यन्नाम ब्रूते" इत्यादि। तथा—"स वै न रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्सहैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत् ततः पतिश्च पत्नी चाभवताम्" इति। वस्तुतस्त्वेकमेव यामलस्वरूपम्। यदुक्तम्—

"न शिवेन विना देवी न च देव्या विना शिवः।
नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव॥"

इति। तथा—

"न शिवः शक्तिरहितो न शक्तिः शिववर्जिता।
यामलं प्रसरं सर्वम्" इत्यादि

एतदभिप्रायेण सकलस्वरूपभावनायामपि—

"पुंरूपं वा स्मरेद् देवि स्त्रीरूपं वा विचिन्तयेत् ।"

इत्युक्त्या यथेच्छयाविकल्पेन स्वाभिन्नपरदेवताभावना विधेयेत्युक्तम् ।

श्रुतिश्च—

"नैव स्त्री पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमाधत्ते तेन तेन स रक्ष्यते ॥"

इति । श्रीभागवतेऽपि—"स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान्न जन्तुः" इति । एतेन निष्कलं परं तत्त्वमिति द्योतितम् । एवं "ब्रह्म वा इदमग्र आसीत्, तदात्मानमेव वेद अहं ब्रह्मास्मीति, अ इति ब्रह्म तत्रागतमहम्" इति श्रुतेरन्तः स्वीकृतानुत्तरानन्दादिस्पन्दमयाकृत्रिमविमर्शमयी सैव परा भट्टारिका आदि-क्षान्तमयाशेषमन्त्रादिरूपतामवभासयन्ती, तथैव मननत्राणात्मिकया मन्त्र-शक्त्यानुग्राह्याननुगृह्य भोगमोक्षैकभाजनतया तत्तद्भुवनैश्वर्यादिभोगवितरण पूर्वं भक्त्या परसंवित्तत्त्वलक्षण-परब्रह्मैकात्म्यात्मना संयोजयतीति । मन्त्रस्फुरत्ताक्रमश्च यथा—परा भगवती शक्तिर्हि स्वस्वातन्त्र्याद् विश्वमव-बिभासयिषुः प्रथमं "प्राक् संवित्प्राणे परिणता" इत्युक्त्या अप्राणाद्यस्फुरत्ता-मयीं प्राणनभूमिकामवलम्ब्य वाच्यवाचकात्म-षडध्वात्मक-शब्दार्थप्रपञ्च-गर्भमहानादभट्टारकस्फारणक्रमेण पश्यन्तीमध्यमावैखरीवाग्रूपतया स्वात्म-चमत्कारमयी विजृम्भते । तत्र पश्यन्त्यामस्फुटविभागत्वाद्वाच्यवाचकयोः क्रमानुल्लास एव, तस्या द्रष्टृैकस्वभावत्वात् । मध्यमायां पुनस्तयोः स्फुटा-स्फुटत्वेन क्रमोदयः । वैखर्यां तु स्थानकरणप्रयत्नाश्रयव्यक्ततत्तद्वर्णक्रमोप-ग्रहः स्फुट इति सर्वत्रैव महामन्त्रपरामर्शचमत्कारकारित्वेन विश्वकुल-सुन्दरी प्रधानमन्त्रात्मना स्वाभिन्नकरणेन स्वेच्छासंकोचावभासित-मितप्रमातृभावमपसार्याशेषविश्वभावखचितपूर्णविश्वाहंभावधाराधिरूढिं स्वोपा-सकजनान् नयतीत्याशयतः श्रीधर्माचार्यः स्वयं कृतकृत्यतया लब्ध-परदेवतात्मभाव-तद्विभूतिमहाहर्ष-महोल्लासरसनिर्भरतया स्वयं कृतार्थता-

माश्रयमाणः परोपकारप्रावीण्येनैव श्रीपरदेवतास्तुतिमाशीर्वादात्मानुग्रहस्फारपुरःसरां मन्त्रतद्देवतास्वरूपोपक्षेपिणीमुपक्रमते। तत्र श्रीमहात्रिपुरसुन्दर्या विद्याधिष्ठातृदेवतास्तदुपासनस्थानफलानि च सामान्यतः स्तुत्यपदेशेनोपदिशति।

ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभां
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः।
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहस्थिता
छिन्द्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी॥

इत्यलं पल्लवितेनेति।

---

## मेघनादवधम्

पञ्चमः सर्गः।

[ निबन्धकः--श्रीनित्यगोपालविद्याविनोदः ]

( द्रुतविलम्बितं वृत्तम् )

कुसुमदाम चकर्त्त रुषा बली कनककङ्कणमास सुदूरकम्।
पादतलाहितकुन्तलमाबभौ तरुतले पतितं कुसुमं यथा॥१॥
रिपुसमूह उवाच बली पुरीं निरुरुधे मम धिग्घतजीवितम्।
विलसतः प्रमदागणसङ्गिनस्त्रिदशभूपजितः समरे गुरौ॥२॥
इदमशोभनमिन्द्रजितं प्रति रथमिहानयताशु रथीश्वराः।
रिपुकुलं नयताशु यमक्षयमपयशः सुचिरेण विलुप्यते॥३॥

---

(१) आस निचिक्षेप। (२) गुरौ दुरन्ते।
(३) यमक्षयं यमगृहम्।

रथिवरः समलंकृत उज्ज्वलं दनुसूतानभियात इवाग्निभूः ।
पशुकुलं प्रतिनेतुमथार्जुनः सह विराटसुतेन च वा पुरा ॥४॥
सुरगणाधिपचापसुकेतने पवनवेगतुरङ्गमवाहिते ।
जलदवर्णरथे निजवल्लभं प्रियतमा परिदृश्य करौ दधौ ॥५॥
तरुवरं व्रततीततिसन्निभा कनककान्तिरथेन परिरभ्य तम् ।
सरुदितं निजगाद पतिव्रता चलसि कुत्र सखे परिहाय माम् ॥६॥
धृतपदे लतया द्विरदे वने व्रजति तां परिहाय मदाद् यदि ।
तदपि सा नहि तेन वियुज्यते पदयुगाच्चिरमोदसुधाश्रयात् ॥७॥
गुणनिधे त्यजसीति कथं नु मां चरणपद्मनिषेवणमानसाम् ।
कमलिनी मिहिरेऽस्तमिते कुतः कलुषजीवितधारणमिच्छति ॥८॥
दयित आह सहासमथेन्द्रजित् प्रियतमे तव बद्धमिमं जनम् ।
प्रियतया पतिभक्त इहोच्यतां शिथिलयेयमहं सहसा कुतः ॥९॥
तव शुभेन हतद्विषता मया त्वरितकालमुपेत्य सह त्वया ।
अहरहः सुसुखं विहरिष्यते शशिमुखी भवती ननु मोदताम् ॥१०॥
उदगमद्रथ आशुगवर्त्मनि खररवं गिरिजाप्रियसोदरः ।
गिरिरिवाततरुक्मगरुच्चयो विशदितोज्ज्वलपुष्करपद्धतिः ॥११॥
सगुणचापमकृष्ट रुषा हि स ध्वनितदिङ्मुखमारवभीषणम् ।
जलदजालगतद्विजराजवद् विचलितौ च सपत्तनसागरौ ॥१२॥
नृपतिरावण एति भृशोत्सुको नदति तूर्य्यमिभा गुरुबृंहिताः ।
रथिवरास्तुरगाश्च विभीषणां विदधति श्रवणार्त्तिदहुङ्कृतिम् ॥१३॥
पतति मे शुभकौषिककेतनं किरणवीथिरपि द्रुतकाञ्चनी ।
द्रुतगतिः समियाय ततो बली समररासरसोर्जित इन्द्रजित् ॥१४॥
मदभराद्रसितं पिशिताशनैः समरमूर्द्धि निरीक्षितनायकैः ।
प्रणततातपदाम्बुज इन्द्रजिद् विनतियुक्तकरः समवोचत ॥१५॥

---

(४) अग्निभूः कार्त्तिकेयः । (६) परिरभ्य आलिङ्ग्य । (७) द्विरदे हस्तिनि ।
(८) मिहिरे सूर्य्ये । (११) पुष्करस्य व्योम्नः पद्धतिः पन्थाः ।
(१२) द्विजराजः गरुडः ।

रुधिरपेन्द्र मया श्रुतमीदृशं विगतजीवित आगतजीवितः।
इह पुनः समरे रघुनायको जनक किं वच एतदृतार्थकम् ॥१६॥
कपट एष न मे प्रतिभाति भो अनुमतिं कुरु यामि रणोत्सवम्।
विनिहतं करवै तमहं ध्रुवं तव पदं नियतं गमयामि वा ॥१७॥
ज्वलितबाणधनञ्जयमम्भसा तमिह पामरमूर्द्धमहं क्षिपे।
पवनशास्त्रबलेन समादिश तव बलाद् बलवानयमात्मजः ॥१८॥
शिरसि चुम्बनमाशरभूपतिर्विहितवान परिरम्भमनन्तरम्।
प्रियसुतस्य मृदुस्वरमुक्तवांस्त्वमसि वत्स ममान्वयभूषणम् ॥१९॥
न हृदयं मम कम्पत आजये गमयितुं सुतमीदृशमीप्सितम्।
विधिरतीव नृशंस इमं जनं प्रतिविधानमहं विदधे कथम् ॥२०॥
विगतजीवित आत्थ कदा कुतः पुनरितासुरिह श्रवणं गतः।
श्रवणगोचरतां क नु वा गतं विवरणं प्लवनस्य जलेऽश्मनः ॥२१॥
स्मयभरेण जगाद सुरद्विषन् भयमितोऽसि कथं नृप किन्नरात्।
सति सुते यदि याति भवान्रणं जगति घुष्यत एव ममायशः ॥२२॥
हसितमेष्यति वारिदवाहनः कुपितभावमपि ज्वलनस्तथा।
समिधि राघव आहृत उत्कटमसकृदादिश मां पुनराजये ॥२३॥
अकथयद्रजनीचरभूपतिर्बलिवरानुज आगतजागृतिः।
असमये विहितो मयका पुनर्भुवि हतः पतितोऽचलश‍ृङ्गवत् ॥२५॥
यदि रणः प्रिय पुत्रक रोचते यजनमादित आचर नाकिनः।
प्रियतमस्य ततो व्रज वीरराट् त्वमधुना भव मे ध्वजिनी-पतिः ॥२६॥
चरमपर्वतमेति दिवाकरस्तनय यास्यसि चाहवमूषसि।
इति निगद्य नृपः सुरनिम्नगासलिलसिक्तमिमं विदधे सुतम् ॥२६॥

(१६) कृतार्थकं सत्यम्। (१७) कपटः माया।
(१८) धनञ्जयः अग्निः। (१९) अन्वयस्य वंशस्य भूषणम्।
(२०) आजये युद्धाय। (२१) अश्मनः पाषाणस्य।
(२२) कुत्सितो नरः किंनरः, "किंप्रभु"रित्यादिवत् नित्यसमासः।
(२३) समिधि युधि। (२४) मयका मया। सर्व्वनाम्नः अकच्।
(२५) आहवं युद्धम्।

स्तुतिकराः स्तवनं मधुरं जगुः समुदितो नयने क्षणदाटपूः ।
जलकणस्तव कीर्णशिरोरुहे मुकुटरत्नमितः पतितं क्षितौ ॥२७॥
नृपतिसुन्दरि राजविभूषणं लुठति भूमितले सति चोत्थिता ।
भव विमुञ्च शुचं भज सान्त्वनामुदयमेति रविः क्षतजाशिभूः॥२८॥
अकुशला रजनी विगता तव जहिहि दुःखमयि प्रविलोक्यताम् ।
भयदबाहुजकार्म्मुकहुङ्कृतेः श्रवणतो मलिनाननवृत्रहा ॥२९॥
तुल्यं तदायुधवरस्य शिवस्य भीमं तूणं निशामय यतो भयमेति सोऽपि ।
वीरर्षभं तदनु पश्य महान्तमेनं सौन्दर्य्यसारविभृतां दयितं वधूनाम्॥३०॥
फलितसकलकामना यशस्या नृपतिवधूरतुला च भाग्यभोगैः ।
जयति रुधिरपेश्वरो वरेण्यो नियतिकृताखिलभव्य-हर्षितात्मा ॥३१॥
बलितनयगणप्रसूरियं वा रुचिरतरञ्च विभाति धन्यलङ्का ।
लसतु हसतु पूरुषः समग्रो ध्वनितसुरासुरमर्त्त्यलोकवासम् ॥३२॥
स्याद्राघवो भीतिविधूतचित्तो विभीषणश्चापि विपक्षदासः ।
ध्वनन्तु तूर्य्याणि नटन्तु योधा लङ्कास्तु पूर्णा जयगीतिरावैः ॥३३॥

इति श्रीमेघनादवधे महाकाव्ये अभिषेको नाम
पञ्चमः सर्गः ॥

---

(२७)　क्षणदाटपूः भीः लङ्के, सम्बुद्धिः ।
(२८)　क्षतजाशिभूः राक्षसकुलोद्भवः ।
(३०)　निशामय पश्य, अदर्शने घटादित्वम् ।
(३१)　पुष्पिताग्रा वृत्तम् ।

# कालस्येङ्गितम्

[ निबन्धकः --स्वर्गतः पण्डितप्रवरस्तारकनाथस्मृतिरञ्जनः ]

यः खलु सुमधुरो वंशीनिनादो नन्दगोपशिशोर्बाललीलया यमुनापुलिने व्रजबालानामलक्तकरञ्जितचरणकमलनूपुरशिञ्जितेन मिश्रतामापन्नो मुखरितवान् वृन्दावनवनस्थलीः, यश्च दुर्वृत्तक्षेत्रजपुत्रकंसदैत्यस्य पूतनामायावसाने संवर्धितवान् पुत्रोत्सुकाया यशोदायाः स्तननिःसृतक्षीरधाराम्, येन च हृदयहारिणा निनादेन मुग्धाया उत्कर्णायाः श्यामलाया धवल्याश्चोत्सुके लोचनकमले गोपालकगणमध्ये गोपालकाधिपतेराकर्णविश्रान्तनयनयोर्निधापिते, येन च समाकृष्टायाः प्रवाहिण्याः समुच्छलितनीलसलिलस्रोतो मन्ये ऊर्ध्वमुखं विधावितं कलकलध्वनिपुरःसरं चुम्बमानस्तच्चरणकमले कमलमधुपानमत्तमिव सञ्जातम्, मन्ये स्वप्रतिष्ठासमुत्सुकस्य कालस्य सयत्नपदविक्षेपमभिलक्ष्येव गोपकुले व्यदधाद्गभीरं गर्जनम्, वंश्याश्च स्वरमाधुरी श्रवणभैरवमार्षभस्वरमनुचकार ।

आर्त्तजीवानां नयनसलिलप्रोञ्छनायेव समवतीर्णस्य भगवतः सङ्गवशात् प्रेमविह्वलायाः सहचरीमध्यचारिण्या गोपराजनन्दिन्याः श्रीराधायाः सजलनयनभङ्ग्या साकं गोपीजनवल्लभः परिसमापितवान् व्रजलीलाम् । वृन्दावनस्थव्रजभूमेर्हाहाकाररवेण गोवर्धनगिरिशृङ्गमपि व्यदीर्यतेव । कज्जलनयनानां व्रजबालानां नयनसलिलसंवर्धितो यमुनासलिलराशिः प्लावितवान् व्रजस्थलीम् । का कथा मनुजानां मन्ये तिर्यञ्चोऽपि सुखस्यानन्तरं भगवद्विरहवेदनां नैव प्राभवन् सोढुम्, भगवत्सङ्गविरहानलोऽनलमपि ददाहेव

यद्यपि तदानीं निष्प्रभत्वमुपगतो व्रजवासिनां जीवनप्रदीपः, तथापि तस्याख्यानमद्यापि जगतीतलस्थानां जीवानां शीतलयति करालकालदहन-

ज्वालाम्। स्वार्थत्यागिनः संसारसुखत्यागः सदैव जगतः कल्याणं निष्पादयति।

यदुकुले आहुकस्य क्षेत्रे दैत्यराजसमुत्पादितो व्यभिचारिणीतनयो दुरात्मा कंसः कालस्वभावेन बलवत्तां सम्प्राप्तः, जरासन्धस्य च सहोदरां परिणीय स्वप्रभावप्रतिष्ठासौकर्यमधिगतवान्। यस्य तावदनुकूलः काल-स्तस्याऽऽघातकल्याणं प्रतिहन्तुं नैव प्रभवति प्राकृतजनः। मन्ये स्वयं भगवताऽपि कालः प्रतीक्षणीयः।

यदुराज आहुको वार्धके कालानुगततनयेन शृङ्खलाबद्धो विनिक्षिप्तः कारासु। धन्याऽसि कलिदेवते, धन्यश्च तवापूर्वः प्रभावः। कच्चित् शुभे एव मुहूर्त्ते प्रविष्टं त्वया जगदिदम्। प्रवेशावसर एव प्रतिष्ठापितस्त्वया स्वीयप्रभुभावो राज्ञो गृहे, जराजीर्णः पिता स्वतनयेन कारायां निरुद्धः। परं भोः कले तवापि परिणामो वर्तते, विश्वं भुवनं परिणाम्येव। अपि त्वं विश्वस्माद् भुवनात् पृथगसि ?

देशत्यागेन विच्छिन्नविपर्यस्तानां यदुवीराणां करुणो दशाविपर्यासो देवानामपि हृत्सु समुपाजनयद् वेदनाम्। ततश्च युगावतारो भगवानपि मन्ये कालप्रभावेण कपटताश्रयेण गोपाङ्गनाञ्चलावरणेन संवृतः क्रमेण वृद्धिं भेजे। एवमेव कलिः परिवर्धयति प्रभावमसज्जनानाम्, परं कालस्य तुलनया कति दिनानि तस्य प्रभावः ?

अतिदुर्वृत्तः सर्वदा सर्वत्राल्पभोगी एव। पितृद्वेषिणः कंसस्य सुखाव-सरः सौभाग्यभोगः क्रमेणावसितप्रायः सञ्जातः। दुरात्माऽसौ स्वविनाश-साधनसामग्रीसम्पादने समुत्सुकोऽभवत्। यदुराज्ये यागयज्ञादिविधि-बोधितकर्मणां निवृत्तिर्जाता। भक्तोऽपि भवपारावारकर्णधारस्य श्रीहरे-र्नामोच्चारणे कुण्ठितोऽभूत्। येन नाम्ना शमनभीतिरपि शममेति, तदेव नाम शमनशासनं स्मारयितुमारेभे।

अवसरे चास्मिन् कालसहचरः कंसोऽक्रूरमुखेण भगवन्तौ धनुर्यज्ञे समाहूतवान्। समुपनते परिपाककाले जीवः स्वयमेव

मरणाङ्कसङ्गाभिलाषी सञ्जायते, न खलु मरणराज्यसम्प्राप्तयेऽन्यस्य प्रयत्नमपेक्षते ।

कंसकेशिनिसूदनो मधुसूदनो यादवराज्ये पुनरपि आहुकं प्रतिष्ठाप्य यदुनन्दनान् सर्वान् मथुरादुर्गे सम्मेलितवान् । कालस्य प्रभावोऽपि क्षुण्णप्रायः संवृत्तः । सर्वं खल्ववसरे सम्भाव्यते । इच्छामयस्येच्छया जगतोऽस्य सृष्टिस्थितिनाशरूपा अभिनयपरम्परा रङ्गालयस्य रङ्गभूमौ विचित्रया भङ्ग्या सङ्घटते । न खलु तस्मिन् किमप्यसम्भवं वर्तते ।

कालस्य छायापातेन सञ्जाता कंसस्य समुत्पत्तिः, परं स एव कालो निराश्रयस्याश्रयस्य शरणागतपरित्राणस्य भगवतोऽप्यभयवाचो निमित्तम् ।

यदुनन्दनो गोविन्दो जरासन्धस्य कालापेक्षया अर्णवद्वीपे द्वारकायां यादवनगरीं प्रतिष्ठापयामास । एकतस्तावद् रैवतकगिरिश्रेणी प्रहरिवत् परिरक्षन्ती स्थिता, अपरतश्च अकूलपारावार आकुलगर्जनेन विपुलरिपुवाहिनीनां कर्णज्वरं यादवरमणीनां च प्रमोदातिशयं समपादितवान् । दिव्यश्च पारिजातः सुधर्मणा साकं नागरिकाणां परिचयं सङ्घटयन् भगवदैश्वर्यं च विज्ञापयन् संवर्धयामास नागरिकाणां कोलाहलसमाकुलमुत्साहभरम् । यादवकुले च भगवत्सान्निध्यात् कंसभयेन सीदत्स्वपि ब्राह्मणेषु वर्णाश्रमविधिः पुनरप्यात्मानं प्रतिष्ठापयामास । भगवतः प्रभावेण कलिकालप्रभावोऽपि प्रक्षुण्णः ।

अवतारार्थं सामग्रीसन्नाहः सम्पादितः । साक्षाच्छङ्करो महर्षिदुर्वासा द्वारकां समुपागतः, अतिथिसत्कारेण च सत्कृतः । आतिथ्यकर्मणि नियोजिता वासुदेववक्षोविलासिनी भगवती रुक्मिणी पश्यतामेव यादवानां रथे योजिता सर्वेषामेव पुरतो राजमार्गेणैव परिचालिता । मुहुर्मुहुश्च दारुणतमेन कशाघातेन तस्याः कमलकोमलाद् दिव्यदेहात् प्रक्षरन्ती रुधिरधारापरम्परा देवनरतिरश्चः सर्वानेव विस्मयविषादपरवशान् व्यधात्, परं भगवतो भगवत्याश्च धैर्यं न विचचाल । इत्थमेव सम्पन्नं परीक्षाकर्म । दुर्वाससश्च महर्षेर्वरप्रभावेण पदतलवर्जं श्रीकृष्णस्याखिलमङ्गम् अस्त्राभेद्य-

त्वादिगुणगणसम्पन्नं बभूव, श्रीमत्यपि रुक्मिणीदेवी समुत्कृष्टवरलाभेन साध्व्याः स्त्रियाः सम्भावनामुपलेभे। मातः! ब्रह्मण्यदेवताहृदयवासिनि! मृष्यतां तावद् ब्राह्मणस्याऽऽगः, विस्मर्यतां ब्राह्मणस्यौद्धत्यम्। मन्ये तवैव शापेन तवैव दीर्घश्वासप्रभावेणाद्य तावन्निःस्वानां ब्राह्मणानां नयनयुगलविनिःसृता सन्तप्तलोहितधारा सलिलधाराकारेणाऽऽप्लाव्य वक्षःप्रदेशं धरामिमां धर्मजीवनस्य श्मशानभूमित्वेन विपरिणमितवती।

इत्थञ्च कलियुगस्य प्रारम्भ एव यदुकुलस्य आबालवृद्धवनितं सर्वेषामेव पुरतो ब्राह्मणप्रभावं शास्त्रमर्यादां च संस्थापयितुं लक्ष्मीरूपया ललनया रुक्मिण्या सह स्वयं ब्राह्मणस्य प्रभावं प्रकटितवती ब्रह्मण्यदेवता। विस्मयविमूढं जगत् सम्भावयामास ब्राह्मणस्य तेजः कालानलसमप्रभम्, क्षणेनैव च तेन दिव्येन तेजसा समग्रमपि जगद्भस्मीभावमासादयेत्।

हन्त हन्त! एतावतापि कलिकलिप्रभावो नात्यन्ताय प्रतिबद्धः। केवलं भगवत्सान्निध्येन निष्प्रभ इवावस्थितः।

यावच्च श्वेतकृष्णयोर्वासुदेवयोर्दिव्यज्योतिःसमुद्भासिताया द्वारकानगर्याः सुधर्माभिधानायां राजसभायां समवेतानां शूरनिकराणां वीरभाषितानि देवसभाप्रभामपि उपहसितवती तावदेव महाकालस्याट्टहासस्तदुपहासहास्ये एव मुखान्तरे दुःखमिव स्वदेहं विन्यस्तवान्। न खलु कोऽपि प्रबभूव तदनुभवितुम्। अन्तःशत्रोरनङ्गस्याङ्गसञ्चालनं कस्य वा नेत्रपथातिथित्वमियात्?

---

## वायुपरिवर्त्तनम्

### तृतीयः परिच्छेदः

समागतस्तावद्धरिधनो मुङ्गेरम्। अपश्यच्च, भूपालमहोदयस्य वास-भवनं सुरम्यम्, गृहोपकरणानि प्रभूतानि महार्हाणि च। भृत्या अपि बहवः। अशृणोच्च ओड्पाचकस्य वेतनं भोजनाच्छादनातिरिक्तानि द्वादश रूप्यकाणि। आर्यस्य सम्पत्सन्दर्शनेनेर्ष्याक्रान्तं सञ्जातं हरिधनस्य मानसम्।

तस्य शरीरमपि द्रुततरमेव स्वस्थभावोन्मुखतामापेदे। प्रथमे सप्ताहे एकस्मिन्नेव दिने ज्वर उपागतः। राजकीयश्चिकित्सकः समागत्य नाडी-गतिमनुभूय शरीरोत्तापं च परीक्ष्य भेषजव्यवस्थामकरोत्। हरिधनोऽपश्यत्, भूपालमहोदयो दर्शनीरूपेण रूप्यमुद्राचतुष्टयं भिषजे प्रदत्तवान्।

द्वितीये सप्ताहे ज्वरस्तु स्पष्टतया नानुभूतः केवलं गात्रमीषदुष्णं सञ्जातम्।

तृतीये सप्ताहे किमप्यस्वास्थ्यं नावाशिष्यत। हरिधनोऽपि प्रातः सायं च स्वल्पं भ्रमणमुपक्रान्तवान।

मासेनैकेन तस्य वदनमण्डलं पाण्डिमानं परिहृत्य पुनरपि सहजं कृष्णिमानं प्रतिपेदे। कोटरप्रविष्टे च चक्षुषी स्वाभाविकीमवस्थामनुप्रापतुः। उदरायतनमप्यर्धं सञ्जातम्। सर्वमेतत् संपश्यतो भूपालमहोदयस्य मानसं परमां मुदं भेजे।

हरिधनो व्यचिन्तयत्, इदं तावद्धनिनो गृहम्। अत्रत्या भृतकाश्चेन्मां दरिद्र इत्यवगच्छेयुस्तर्हि कोऽपि मां न गणयेत्। अत एव भ्रातरि धर्मा-धिकरणं गते भृत्यान् सर्वानाहूय हिन्दीवङ्गभाषयोर्मिश्रणेन स्वमहिमानं प्रकटयितुं व्यापारितवानात्मानम्। एकदाऽवदत्—वयमेव ग्रामस्य मण्डला-धीशाः। अस्माकं तावद्दशानकभागाः। युष्माकं स्वामिनः पुनः षडानक-परिमिताः। वयमेव श्रेयांसः। अस्माकमेव पूर्वजा राजोपनाम लेभिरे।

इदानीमपि प्रजा अस्मानेव राजेति व्यपदिशन्ति। इत्येवमादि बहु प्रललाप। अपरेद्युरवदत्, अप्येतद् युष्मदीयस्वामिनो वासस्थानं वासस्थानम्? अहो अस्मद्देशेऽस्मदीयं तद् गृहं पश्यथ चेत्! सुविशालं विभागत्रयोपेतं भवनम्। प्रथमं तावद् व्यवहारविभागः, द्वितीयो बहिर्विभागस्तृतीयस्त्वन्तःपुरम्। ईदृशानि वासस्थानानि तत्र बहूनामेव वर्तन्ते प्रजानामस्माकम्। कामं युष्माकं स्वामिनः स्वदेशस्थं मन्दिरं गृहादस्माद् रमणीयतरम्, तथाऽपि न खलु अस्मदीयः प्रासाद इव विशालम्। स्वदेशे युष्माकं स्वामिनः केवलं द्वादश भृत्या अस्माकं पुनर्द्वाविंशतिः। अस्मादेव गृहस्याऽऽयतनं शक्यमूहितुम्। दिनान्तरे पुनरवदत्, युष्माकं गृहेऽस्मिन् घटीयन्त्रद्वितयमेव वर्तते। एकं तावद्बहिर्द्वारप्रकोष्ठे, द्वितीयं स्वामिनः शयनमन्दिरे। स्वदेशेऽस्माकं गृहे संहत्य द्वाविंशतिर्घटीयन्त्राणि। तेषां च यन्त्रचालनार्थं कर्मकरो नियुक्तो वर्तते।

अथैकदा पाचकमाहूय रहसि प्रोवाच हरिधनः, श्रूयतां भोः सूदावधानेन। दुग्धस्य मस्तु तावन्मदर्थं रक्ष्यताम्, अपराह्णे च लघुभोजनकाले मह्यं दीयताम्। यदा च मह्यं द्विदलं दास्यसि तदा किञ्चिद् घृतमनलेन क्वथित्वा द्विदलपात्रे निक्षिप्यताम्। इदमपि अवधीयताम्। किमिति मत्स्यमस्तकानि प्रतिदिनमेव स्वामिनः पात्रे प्रयच्छसि, मह्यमेव दीयताम्। अहं तावत प्रतिमासमेव तुभ्यं किञ्चित् प्रदास्यामि। इदानीं पुनर्मुद्राद्वितयमिदं गृहाण। पाचकस्तु विहस्य प्राह, मा मैवमार्य, न खलु मुद्राऽपेक्ष्यते। परिरक्ष्यतामसौ। भवता तावन्न चिरेण लब्धं स्वास्थ्यम्, अत एव स्वामिना गुरुपाकवस्तुभक्षणं प्रतिषिद्धम्। आदौ तावत् सर्वथा निरामयो भवतु भवान्, ततश्च यद् यदेव इच्छति भवान् भोक्तुं तत् सर्वमेव प्रदास्यामि।"

रूप्यकद्वितयमिदं न खलु हरिधनस्य निजस्वम्। त्रिचतुरेभ्यो दिनेभ्यः पूर्वं स्वकुञ्चिकया भूपालमहोदयस्य मञ्जूषां रहसि समुद्घाट्यापहृतमेतद्धनम्।

भूपालमहोदयस्य परमरमणीया काचन यन्त्रलेखन्यासीत्। अपहरणभयादसौ लेखनीमिमां कदापि कर्मस्थानं न नीतवान्। गृहे च सर्वदा

तामेव व्यवहृतवान्। एकदा च गतवति तस्मिन् धर्माधिकरणं स्वीयपत्र-विलेखनार्थं हरिधनस्तदीयस्य पत्राद्याधारस्य समीपमुपविष्टः। यद्यपि तत्र बह्वय एवान्या लेखन्य आसन् तथाऽपि तामेव लेखनीं गृहीतवानसौ। तस्य तु प्रयोगपरिपाटी तस्य न विदितेति यन्त्राणां चालनकाले भग्नाऽसौ। ततश्च कालं कञ्चित् तामेव परिचाल्य तद्व्यवहारे निराशोऽसावन्ततः प्राकृतलेखन्यैकया पत्रं विलिलेख।

न्यायालयाच्च प्रत्यागतो भूपालमहोदयो लेखनीं भग्नामपश्यत्। भृत्यञ्चाऽऽ-हूयाप्रृच्छत्तद्गतं वृत्तान्तम्। तेनोक्तं दृष्टो मया हरिधनमहोदयो गृहेऽ-स्मिन्नुपविष्टः पत्रं विलिखन् लेखनीं च परिवर्तयन्।

ततश्च भूपालमहोदयो हरिधनमाहूतवान्, यथाशक्ति च समुद्दीपितं क्रोधं संयम्योवाच, हरिधन, कथं तावद् भग्नवानसि मे लेखनीम्? इति। हरिधनस्त्वतिमात्रं विस्मित इवावदत, लेखनीति? का लेखनी?

एतच्छ्रुत्वा समेधामास भूपालमहोदयस्य क्रोधवह्निः। परं पूर्ववत नियम्याऽऽत्मानं प्रोवाच—मदीयामिमां यन्त्रलेखनीम्।

न खलु मया भग्ना, न खलु मया स्पृष्टाऽपि। न खलु मया लेशतोऽप्ये-तद्गतं किमपि विज्ञायते।

ततश्च परुषकण्ठेनोक्तं भूपालमहोदयेन, त्वमेवाद्यास्मिन् गृहे पत्रं विलिखितवान्ननु?

"पत्रमिति। न खलु त्रिचतुराणि दिनानि कस्मा अपि किमपि पत्रं विलिखितं मया।"

"नैव विलिखितं त्वया? भवतु। अत्राऽऽगच्छ। दृश्यताम्। किं-तावदिदम्?" एवमुक्त्वा भूपालमहोदयो लेखनसामग्र्याधारोपरिस्थितस्य शोषणपत्रगुच्छस्य स्थानमेकमङ्गुल्या विनिर्दिदेश।

हरिधनोऽग्रसरो भूत्वाऽपश्यत् पत्रस्य बहिरावणस्थस्य नामादिकं विस्पष्टमेव विप्रतीपं तत्रोत्कीर्णं वर्तते। ततश्चापहृतवाक्प्रसरो भूपालमहोदयं करुणं प्रेक्षमाणः स्थितः।

तेन च कथञ्चिदार्द्रभावमुपागतो भूपालमहोदयः प्रत्युवाच, एतानि तावद् वर्तन्तेऽनेकानि लेखन्यन्तराणि । एषु कामपि गृहीत्वा लेखनं सुशकमासीत् । सा तावदन्यविधा लेखनी । त्वं चाप्यज्ञः, न खलु वेत्सि तद्व्यवहारप्रकारम्, तेनोद्घाटनावसरे भग्नवानसि ।

क्षणं तूष्णीमवस्थाय हरिधनोऽपृच्छत्, कियत् तावन्मूल्यं लेखन्याः ?

"कथं पृच्छसि ?"

"यतस्तावद् भवतः शङ्का मयैव भग्नेयं लेखनी, अतो मयापणात् ईदृशीमेकां लेखनीं क्रीत्वाऽत्रभवते समर्पयिष्यते ।" भ्रातुः पेटकादपहृतानि कतिचिद्रूप्यकाणि तदानीमप्यवशिष्टानि ।

भूपालमहोदयस्य मानसे हरिधनं प्रति यस्तावत् करुणालेशः प्रादुर्भूतः एतदुत्तरश्रवणमात्रेणैवासौ तिरोहितः । स च सावज्ञमवोचत्, कुत्र वा लभसे तादृशीं लेखनीम् । न खल्वीदृशी लेखनी शक्यतेऽधिगन्तुमस्मिन् देशे । कलेक्टारमहोदय आङ्गलभूमितो लेखनीद्वितयमानीतवान् मह्यञ्चैकामुपायनीकृतवान्" इति ।

ततोऽपि व्यतीतानि कतिचिद्दिनानि ।

भूपालमहोदयः प्रतिदिनम् एकादशवादनकाले न्यायालयं गतवान् । कदाचिच्च ततः पूर्वमेव पत्रप्रापणाधिकरणात् पत्राणि लब्धवान्, प्रायेण तु नैवाधिगतवान् । समागतानि पत्राणि तस्य काष्ठनिर्मितपत्राद्याधारस्यैवोपरि स्थाप्यन्ते स्म । धर्माधिकरणात् प्रत्यावृत्तोऽसौ पपाठ तानि । समागतेषु च पत्रेषु सर्वाण्येव बहिरावरणरहितानि पत्राणि हरिधन आमूलान्तं वाचयति स्म । आवरणाभ्यन्तरवर्तिनामपि पत्राणाम् आवरणोन्मोचनपुरःसरं वाचने प्रावर्त्ततास्याभिलाषः, परं नोदसहतासौ तथा कर्तुम् । एकदा चापश्यत् कस्यचित् पत्रस्य प्रच्छदे विलसति स्वग्रामस्यैव नाममुद्रा, बाह्यनामापि नारीहस्ताक्षरमयम् । ततश्चानुमितवान्, नूनमिदं मद्भ्रातृपत्न्याः पत्रम् । भ्रातृपत्नी च तस्य सम्यगधिगतविद्येति प्रथिताऽसीद् ग्रामे । हरिधनो व्यचिन्तयत्, अहो कति वा सरसानि वस्तूनि न विलिखितान्यार्याय प्रज्ञावत्या । क्रमेण च

दुर्निवारतामुपागच्छदस्य पाठलालसा। सलिलसेकेनार्द्रीकृत्य पत्रावरण-मुन्मोच्य पपाठ हरिधनः पत्रम्। उन्मोचनावसरे च किञ्चिदिव त्रुटितं पत्रावरणम्।

अपराह्णे च गृहं प्रत्यागतो भूपालमहोदयः पत्रसन्दर्शनेनैवावबुद्धवान् पत्रमिदं सलिलसाहाय्येनोन्मोचितम् इति। उन्मोक्तृविषयेऽपि नासीदस्य लेशतोऽपि संशयः। भृत्यानाहूय यावत् पृच्छति तावत् साक्षी कश्चनोपालभ्यत येन प्रत्यक्षीकृतमिदं वृत्तम्।

भूपालमहोदयस्याऽऽपादमस्तकं समग्रं शरीरं जज्वालेव क्रोधेन। तदानीं च हरिधनो भ्रमणार्थमात्मानं सज्जयति स्म। क्षणाच्चोर्ध्वं मनोहरतमया पट्टिकया वेष्टितमस्तकः, रम्यनीशारप्रावृतशरीरो यष्टिविभूषित-पाणिरसौ निर्जगाम।

भूपालमहोदय आह्वयत—हरिधन।

"आर्य!"

"अप्युन्मोचितं त्वयेदं पत्रावरणम्?"

हरिधनस्तु नभस्तः पतित इवावदत्, पत्रावरणम्! न खलु मयोन्मो-चितम् आर्य।

भूपालमहोदयस्तं विडम्बयन् दन्तांश्च दन्तैर्घर्षयन्नुवाच "न खलु त्वयो-न्मोचितमार्य! केन तर्ह्युन्मोचितम्?"

"केनोन्मोचितं न जानामि। मया तु बिन्दुविसर्गमात्रमपि न ज्ञायते।"

भूपालमहोदयः परुषकण्ठमुवाच, पुनरपि मिथ्या ब्रवीषि।

आर्य, न खलु मयोन्मोचितम्। शपे तावद् यज्ञोपवीतस्पर्शेन न खलु मयोन्मोचितमिति। एवमुक्त्वा हरिधनः ससम्भ्रमं कञ्चुकग्रन्थिं मोचयितुमुपचक्रमे।

भूपालमहोदयोऽवदत्, अलं तावद् यज्ञोपवीतस्पर्शपूर्वकं शप्त्वा। अति हि नाम संरक्ष्यते त्वया गौरवं यज्ञोपवीतस्य! धिक् धिक् धिक्

किमित्येतादृशी कदर्या ते प्रवृत्तिः ! एवमुक्त्वा स्थानान्तरं प्रतस्थे भूपाल-महोदयः ।

"मिथ्यापवादकलङ्कलेपनं मयि" इति वदन्नस्फुटं प्रजल्पन्नसौ गृहाद्विनिष्क्रान्तः ।

कृतभ्रमणश्च प्रत्यावृत्तः शयनमन्दिरमेवागच्छत् । रात्रौ च भोजन-वेलायामनेकशस्तमाहूतवन्तो भृत्याः—नैवोदतिष्ठदसौ शय्यायाः । अन्त-तश्च भूपालमहोदयः स्वयमागत्याऽऽहूतवान् । सोऽवदत् नास्ति मे क्षुधेति ।

( क्रमशः )

---

# आख्यायिका

सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानाञ्च क्लिश्यन्ते लोभमोहिताः ॥

आसीद्वङ्गेषु शुकदेवाख्यः कश्चन ब्राह्मणकुमारः । बाल्येऽसौ सर्वशास्त्र-पारदृश्वना संयमिनां धुरि कीर्तनीयेन पित्रा महता प्रयत्नेन संवर्धितो विदितवेदितव्योऽधीतसर्वशास्त्रः श्रद्धादिगुणसम्पन्नः सदाचारपरायणः पित्रोः प्रतिपादयन्नमन्दमानन्दं चरित्रोत्कर्षेण ज्ञानसम्पदा च परमार्थत एव शुकदेवमनुचकार । ततश्च यौवनपदवीमुपारूढः समावर्तनत ऊर्ध्वं परम-रमणीयया मनोऽभिरामया सहधर्मिण्या संयोजितो निष्प्रत्यूहं गार्हस्थ्यधर्म-मनुष्ठितवान् । अथ कालक्रमेण पुरन्दरपुरातिथीभूते प्राणेभ्योऽपि प्रियतरे पितरि निसर्गसिद्धेन धैर्यबलेन संस्तभ्य शोकप्रसरं पितुरौर्ध्वदेहिकं कृत्यजातमभिनिष्पाद्य तीर्थसन्दर्शने मनो बबन्ध ।

क्रमेण च हरिद्वारादीनि सुबहूनि तीर्थवर्याणि विविधांश्च दिग्देशान् परिक्रम्य समुपजातसत्वशुद्धिः समेधितप्रज्ञः समवाप्तविविधविज्ञानश्चासौ स्वगृहं प्रत्यावर्तमानो मध्येमार्गं कदाचित् प्रमादादुत्क्रान्तपथः प्राचीनतमं निर्मानुषसञ्चारं शिवाद्यध्युषितराजपथं जीर्णभग्नेष्टकालयादिभिः सनाथं व्यपगतपूर्वसौभाग्यं वार्द्धके तपसीव निमग्नं नगरमेकमासादितवान्। क्षुधा तृष्णया च क्लाम्यन्नध्वश्रमं विनेतुकामस्तत्रत्ये कस्मिंश्चिज्जीर्णपादपमूले मुहूर्त्तं विश्रम्य व्यपनीतखेदः स्वपार्श्वस्थितं फलमूलादिकमुपयोक्तुमुपचक्रमे। अवसरे चास्मिन् नातिदूरवर्तिनि विशालप्रासादवातायने कश्चन मनुष्यविग्रहो यदृच्छयाऽनुप्राप्तस्तदीयां नयनसरणिम्। तृषा महत्या परिशुष्कतालोः सुरभिसलिलमिव मानवसमागमशून्यत्वान्नगरस्य भृशं समुद्विजमाननयनस्यास्य मनुष्यमूर्त्तिसन्दर्शनमतीव हृदयहारि सञ्जातम्। स चाऽऽकस्मिकेन तदाविर्भावेण विस्मृतान्यकर्तव्यो हर्षविस्मयपरवशस्तदात्व एव तदभिमुखमधावत्। क्रमेण च सम्प्राप्य भवनसन्निधिमवलोकयामास हर्म्यमिदमतीव रमणीयमासेचनकं च नयनयुगलस्य। अस्य च समन्तात् सुरम्या समुच्छ्रिता प्राकारराजिः। प्राकाराणां चोत्तरस्यां दक्षिणस्यां पूर्वस्यां पश्चिमायां च दिशि चत्वारि मनोहरतमानि तोरणद्वाराणि सर्वतश्च प्रशस्ततराः सिक्तसंमृष्टा राजपथाः। उभयतश्च पथी लोचनलोभनीया प्रसूनवाटिका। अस्य तावद्भवनस्य बहिःप्रदेश एतादृशसुषमामण्डितस्तस्याभ्यन्तरं पुनः कीदृशं हृदयहारि स्यादिति कौतूहलसमाक्रान्तमानसोऽसौ यावद् दक्षिणहर्म्यं प्रवेष्टुमुपचक्रमे तावद् दौवारिकस्तस्य समीपमुपसृत्य सप्रश्रयमुवाच, "आर्य मुहूर्त्तं तावत् प्रतीक्ष्यताम्" इति। एवमुक्त्वा सुरापूर्णं पानपात्रमुपप्रदर्श्याऽवोचत, अपि पश्यति भवान् किमत्र वर्त्तते इति। सन्दृष्टमात्रे एव मद्यभाजने सुराघ्राणशङ्कया सुतरां सन्त्रस्तोऽसौ ब्राह्मणयुवा ससम्भ्रमं नासाग्रसमर्पिताञ्चलः प्रोवाच, अथ किम्? दृष्टमेव मया। एतत् खलु मद्यम्। श्रुत्वा द्वारपालोऽकथयत्, आर्य भवनमिदं प्रवेक्ष्यता[illegible]वैकपात्रपरिमिता सुरा पेया। विचार्यतां तावत्, न खलु प्राकृतजनस्य गृहमिदम्। अत्र

हि सकृत् प्रवेशमात्रेणैव धर्मार्थकाममोक्षात्मकश्चतुर्वर्गः करतलगतः सम्पद्यते। अत्र च सर्वेषामेवाप्रतिहता गतिः, कस्याप्यभ्यन्तरप्रवेशे निषेधो नास्ति। प्रविष्टाश्च तथाविधमानन्दसन्दोहमनुविन्दन्ति यस्य किल वर्णनेऽपि जडीभवति जिह्वा, स्तब्धतामेति वाक्। किं बहुना ये तावन्महात्मानः पूर्वजन्मार्जितसुकृतवशेन सकृदत्र प्रवेशं लब्धवन्तस्तेषामेकतमोऽपि, व्यपेतेष्वपि प्राणेषु नेच्छति ततो विनिर्गन्तुम्। परमत्र जागर्त्यस्माकं प्रभोर्निदेशः न खल्वेकपात्रपरिमितसुरापानमन्तरेण केनाप्यनेन द्वारेण प्रवेष्टव्यमिति। निपीयतां तावदमृतकल्पं सुरासुरस्पृहणीयं सुरासारमिदम् प्रविश्य च प्रासादाभ्यन्तरं निर्विश्यतां देवदुर्लभा भोगपरम्परेति।

ब्राह्मणोऽसौ पूर्वं दूरे तावदास्तां सुरायाः पानं तस्याः स्पर्शमपि सुदूरं परिहृतवान्। अतश्च नैराश्यमुपगतोऽसौ विवर्णवदनस्तस्माद् द्वाराद् विनिर्गतो द्वारान्तरेण प्रवेशं लिप्समानः प्राचीनं द्वारं सम्प्राप्तः। तत्र चाऽऽरक्तचक्षुषं दीर्घघनश्मश्रुजालसमाकीर्णं मलीमसाकारं कालान्तकयमोपमम् अद्राक्षीत् कञ्चन यवनपुङ्गवं निशितकृपाणनिकृत्यमानगोमांसम्। दृष्टमात्र एवास्मिन् बीभत्से व्यतिकरे द्विजकुमारोऽसौ राम रामेति व्याहरन् सत्वरमेवापससार। यवनस्तु तं दृष्ट्वा ससम्भ्रमं बहिरागत्य भक्तिभरप्रह्वं प्रणम्यावोचत्, आगम्यतामार्य, आगम्यताम्। मन्ये अत्रभवानभिलषति भवनाभ्यन्तरं प्रवेष्टुम्। नात्र लेशतोऽपि भीतिकारणं समस्ति। विनैवाऽऽयासं प्रभवति भवान् प्रवेष्टुम्। एवमुक्त्वा समाश्वास्य यवनस्तं प्रत्यावर्तयत्, बहुमानपुरःसरं च तस्मायासनमुपानयत्। ततश्च द्विजन्माऽसौ सुखेन समुपविष्टः प्रहृष्टमानसो व्यचिन्तयत् नूनमिदानीं प्रसन्नो भगवान् विधिः, साम्प्रतं सुकरं सम्भावयामि गृहप्रवेशम् इति। अत्रान्तरे यवनवरः सुपक्वं सुरभिमांसखण्डं पुरतोऽवस्थाप्य प्रोवाच, आर्य, उपयुज्यतामिदं सुधासमधिकस्वादं पललखण्डम् प्रविश्यतां च यथेच्छं भवनाभ्यन्तरम् इति। ब्राह्मणस्तु तद्दर्शनेन बीभत्साक्रान्तहृदयो भीतिसंहृष्टसर्वशरीरः प्राब्रवीत्, अहो ब्राह्मणेन मया कथं गोमांसभक्षणसाहसमाचर्येत। न खलु व्यपेतेष्वपि प्राणेषु शक्यं मयैवं कर्तुमिति।

यवनस्तु प्रत्युत्तरितवान्, न खलु विना मांसादनं कोऽपि द्वारेणानेन गृहं प्रवेशनीय इत्येव मे प्रभोरादेश इति।" ततश्च ब्राह्मणोऽत्राप्याशाहतः पूर्वद्वाराभिमुखं प्रतस्थे। तत्र च समुपस्थितोऽत्यद्भुतं व्यतिकरं प्रत्यक्षी-कृतवान्। सोऽपश्यत्, युवतिकुलललामायमाना निरवद्यावयवा लावण्यप्रसर-तिरस्कृताङ्गलेखा काचन कामिनी द्वारदेशं परिरक्षतीति। तां दृष्ट्वा व्रीडावनतवदनोऽसौ ब्राह्मणः सपदि परित्यज्य तत् स्थानं प्रतस्थे। परं रमणीमणिरसौ समुन्नीततदभिप्राया नचिरादेव बहिर्विनिः-सृत्य सरसमधुरं व्याजहार, आर्य, सर्वथाऽवारितं गृहस्यास्य द्वारम्, निष्प्रत्यूहश्च सर्वेषां प्रवेशः। परं जागर्ति मे प्रभोर्निदेशः न खलु मां सहचरीम् अविधाय केनाप्यन्तः प्रवेष्टव्यमिति। अतश्च मां स्वभोगीनां सहचरीं प्रविधाय स्वच्छन्दं प्रविश्यतां सुरलोकदुर्लभमिदं पुरम्, सफली-क्रियतां चाऽऽत्मनो जीवितं च यौवनञ्चेति।

आजन्मतः सदाचारपूतस्य ब्राह्मणस्य मानसं सदैव परस्त्रीविमुख-प्रवृत्ति आसीत्। अत एव निशम्य कामिनीवाक्यं प्रतिसंहृतदृष्टिरसौ प्रोवाच, "सकृत् सञ्जातो मे परिणयः। जीवन्त्यामेव धर्मपत्न्यां स्त्र्यन्तर-परिग्रहो महते पापाय इत्येव मे मतिः।" एवमुक्त्वा तदात्व एव पर्यत्यजदसौ तत्प्रतिहारम्। मनस्तु तस्यातिमात्रं दर्शनीयस्याऽऽपात-मनोरमस्य भवनस्याभ्यन्तरसुषमासन्दर्शनलालसमेवावतस्थे। क्रमेण च तद्दिदृक्षाक्रान्तहृदयः कथमपि मानसं ततो निवर्तयितुं न प्रबभूव। अन्ततश्च तदेवानुध्यायन् प्रस्थितोऽसौ मन्दिरस्य तस्य पश्चिमं प्रतिहारं प्राप। अपश्यच्च तत्र कुलीन इव कश्चन समुज्ज्वलपरिच्छदसंछन्नावयवो द्वारदेश-मध्यास्ते, पार्श्वतश्च तस्य निशितः खड्गः समुल्लसतीति। स च दृष्ट्वैव तं वैदेशिकं ब्राह्मणयुवानं ससम्भ्रमं प्रत्युत्थायाभिवाद्य च सप्रश्रयमपृच्छत्, अपि नामार्योऽभिलषति पुरीमिमां प्रवेष्टुमिति। तस्य विनयमसृणया वृत्त्या संप्रहृष्टोऽसौ ब्राह्मणो व्यचिन्तयत्, "मन्ये, सिद्धमिदानीं मे समीहितम्।" एवं विचिन्त्य ससम्भ्रमं प्रत्युवाच भद्रमुख, बाल्यादारभ्य बहवो देशा मया

भ्रान्ताः, बहूनि च मनोहरतमानि सन्दृष्टानि नगराणि, ईदृशन्तु परमरमणीयं नयनयुगलासेचनकं पुरश्रेष्ठं कुत्रापि न प्रत्यक्षीकृतम्, श्रूयते चैतस्य बाह्य-शोभाऽभ्यन्तरभागसुषमायाः षोडशीमपि कलां न स्पृशतीति । एतदपि श्रूयते यत् सकृदत्र कृतप्रवेशश्चतुर्वर्गफलं समश्नुत इति ।

तच्छ्रुत्वा भद्रमुखीऽसौ किञ्चिदिव विहस्य प्रोवाच, आर्य, यद् यद् भवता श्रुतं तत् सर्वमवितथमेव । अत्र प्रवेशोऽपि लेशतोऽपि न दुष्करः प्रत्युतातीव सुकर एव । अनायासेनैव भवानत्र प्रवेष्टुं प्रभविष्यति, नैकोऽपि भवन्तं निवारयिष्यति । प्रथमतस्तु भवता खड्गेनानेन मदीयशिरश्छेदो विधेयः, ततश्च लप्स्यते भवानत्र प्रवेशाधिकारमिति । न चात्र लेशतोऽपि पाप-शङ्का कार्या, अस्माकं नरपतेरेवायमादेश इति निर्विशङ्कमेवानुष्ठीयताम् ।

तच्छ्रुत्वा ब्राह्मणो वज्राहत इव मुहूर्त्तं तूष्णीं स्थितस्ततश्च तत्र मुहूर्त्तमप्य-वस्थानं सर्वथाऽयुक्तमेवेति निश्चित्य सत्वरमेव ततो निष्क्रान्तः । कति-चिच्च पदानि गत्वा तमेव वृत्तान्तमनुध्यायन् तत्प्रासादाभ्यन्तरं च दिदृक्ष-माणो दोलायमानमतिः किंकर्त्तव्यतामूढ उन्मत्तकल्प इत्थं विचारयति स्म । सुरापान-गोमांसभक्षण-परदारगमन-नरहत्यालक्षणेषु चतुर्षु पातकेषु प्राथमिकमेव लघिष्ठमित्यवश्यमेवाभ्युपगन्तव्यम् । वर्जयित्वा ह्यस्मद्देशं सर्वत्रैव सुरापानं सदाचारेषु परिगण्यते । पुराणादितश्चावगम्यते पुराऽ-स्माकऽमपि देशे यज्ञादिषु सुरापानप्रथा सविशेषमेव समादृतासीच्चातुर्वर्ण्येषु । ततश्च दैत्यगुरुः शुक्राचार्यः कारणविशेषवशादुद्दीपितामर्षः सुरामशपत्—

यो ब्राह्मणोऽद्यप्रभृतीह कश्चिन्मोहात् सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्मो ब्रह्महा चैव स स्यादस्मिंल्लोके गर्हितः स्यात् परे च ॥

इति ।

तत आरभ्य शुक्रशापान्महापातकस्पर्शभिया बिभ्यति जनाः सुरापानात् विशेषतश्च देशस्यास्यौष्ण्यातिरेकात् सुरापानमत्र स्वास्थ्यहानिं समुपजनयति, सुरापायी च महतीं दुर्दशामनुभवति । एतस्मादेव कारणकलापात् संहिता-काराः सुरापानं पञ्चविधमहापातकेषु पर्यगणयन् । वस्तुतस्तु सुरापान-

प्रतिषेधोऽयं तदनुशासनमात्रमेव न तु परमार्थतो धर्मपीडामावहति,] न वा युक्तिमनुरुध्यते। यतः सकृत् स्वल्पसुरापानेन महापातकं सञ्जायते इति को वाऽतुन्मत्त आतिष्ठेत। किञ्च सुरा पीयूषयूषकल्पा परमस्वास्थ्यकरी-त्यायुर्वेदविद आचक्षते। तथा चात्र निदानवचनम्—

किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथाऽमृतम्॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या हिनस्त्यसून्।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम्॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम्।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम्॥

बुद्धिस्मृतिप्रीतिकरः सुखश्च
पानान्ननिद्रारतिवर्धनश्च।
संपाठगीतस्वरवर्धनश्च
प्रोक्तोऽतिरम्यः प्रथमो मदो हि॥
अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः
सोन्मत्तलीलाकृतिरप्रशान्तः।
आलस्यनिद्राभिहतो मुहुश्च
मध्येन मत्तः पुरुषो मदेन॥
गच्छेदगम्यां न गुरूंश्च मन्येत
खादेदभक्ष्याणि च नष्टसंज्ञः।
ब्रूयाच्च गुह्यानि हृदि स्थितानि
मदे तृतीये पुरुषोऽस्वतन्त्रः॥

चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः।
कार्याकार्यविभागज्ञो मृतादप्यपरो मृतः॥

इत्थञ्च सुचिरं सुराया गुणागुणौ मनसा पर्यालोच्यासौ सिद्धान्तितवान् स्वल्पमात्रया मद्योपयोगेन लेशतोऽपि पापस्पर्शो वा दोषापगमो वा न

सम्भवति। ततश्च परिसान्त्वितमानसः प्रथमं प्रतिहारं समासाद्य दौवारिकमवदत्, भद्र दीयतां मे मात्रया मद्यं यदुपयुज्याहं गृहमिदं प्रविशेयमिति। तच्छ्रुत्वा द्वारपालो हर्षस्य परां काष्ठामधिरूढः सपदि प्रत्युत्थाय ससम्भ्रमं सुरापात्रं समुपानयत्। सोऽपि निर्विशङ्कमनभिम्लानवर्णः पपौ तां सुराम्। ततश्च मुदा परमया युक्तः प्राविशदभ्यन्तरम्। तत्र च मुहूर्तमितस्ततः परिभ्रमन् समाक्रान्तोऽसौ मत्ततया। ततश्च विलुप्तज्ञानः क्रमेण पूर्वम् उत्तरं पश्चिमं च द्वारं सम्प्राप्य गोमांसभक्षणपरदारसेवनमनुजहत्यादिकं सर्वमभिनिर्वर्त्य तदात्वे एव चतुर्वर्गं करतलायत्तं व्यधात्। ततश्च व्यपेतेष्वपि प्राणेषु नैच्छदसौ विनिर्गन्तुं तद्भवनात्। धर्मकर्म पुत्रदारं सुहृन्मित्रं सर्वं विस्मृत्य तत्रैव विजहार। यस्या दर्शनमात्रत एव पूर्वं वस्त्रप्रान्तेन संववार नासिकाम्, ततश्च तस्याः पानम् अत्यल्पपापावहम् अथवा सर्वथा निष्पापं परमहितकरञ्च इति निश्चिकाय, तस्या एव सुरायाः प्रभावेण न खलु कस्यापि पापस्यानुष्ठाने सङ्कुचितोऽभूत्।

---

# प्रतिवचनम्

प्रायेण स्मर्यत एव प्रियपाठकमहाभागैर्यत् कियद्भ्यश्चिन्मासेभ्यः पूर्वं पृच्छाद्वितयं प्रकाशितं परिषत्पत्रिकायामिति। तत्र च प्राथमिकस्य प्रश्नस्योत्तरं पूर्वमेव प्रतिपन्नम्, द्वैतीयीकस्य समीचीनमुत्तरं रघुवंशस्य टीकाकृच्छिरोमणिभिररुणगिरिनाथैरेव प्रदत्तम्। नाथप्रणीता च प्रकाशिका टीका नैव सुलभा इति ततोऽत्रांशविशेषः समुद्ध्रियते। तत्र ६६श्लोकस्य टीकायां श्लोकं व्याख्याय विचारितं नाथेन—

अत्र महाप्रकरणे प्रतिराजवर्णनानि कानिचिद्वाक्यानि निन्दागर्भत्वेन कन्याव्यावर्तनपराणि। तत्र आद्ये वर्णने "क्रियाप्रबन्धात्" [ २३ ] इत्यादिना तस्मिन् भोगस्य का कथेति द्योत्यते। द्वितीये तु "अनेन पर्यासयता" [ २८ ] इत्यादिना निर्दयत्वम्। तृतीये "आरोप्य चक्रभ्रमम्" [ ३२ ] इत्यादिना प्रतिपादितोष्णांशुसाम्येन दुष्प्रेक्षत्वम् चतुर्थेऽपि "आयोधन" [ ४२ ] इत्यादिना महाभारतादिप्रसिद्धं दूषितदारत्वादकुलीनत्वम्। पञ्चमे "अस्यावरोधस्तनचन्दनानाम्" [४८] इत्यादिना बहुवल्लभत्वम्। षष्ठे तु "अनेन सार्धम्" [ ५७ ] इत्यादिना मर्मरध्वनिमत्त्वाद्विहारसौख्याभावः। सप्तमे तु "अनेन पाणौ" [ ६० ] इत्यादिना विदूरदेशत्वम् इति व्यावर्तनकारणानि। तथाच दण्डिनोक्तम्—

लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम्। [ काव्यादर्श २।२६८ ]

उदाहृतं च—

युवैव गुणवान् राजा योग्यस्ते पतिरूर्जितः।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि॥

इति। योजितं च—

वीर्योत्कर्षस्तुतिर्निन्दैवास्मिन् भावनिवृत्तये।
कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरान्॥

इति। तस्माल्लेशच्छायाऽनुसर्तव्या इति केचिदाहुः।

तदनालोचनविलसितं मन्तव्यम्। तथाहि—किं केनचिल्लक्षणकारेणोक्तं स्वयंवरविधावेवं विधेयमिति। यस्तु दण्डिनो लेशः सोऽस्मन्मते व्याजस्तुतिः, न च तस्याः स्वयंवरविषयत्वम्। तदुदाहरणदशा त्वत्र तत्-परिकल्पनमन्याय्यं नोदाहरणीयमिति प्रसिद्धो मार्गः। योजनाऽपि तदनु-सारिणी नादरणीया।

किञ्च निन्दाया विधेयत्वे तावान् स्तुतिप्रबन्धः सुनन्दाया गजस्नान-कल्पः स्यात्। स हि राज्ञां प्रकोपं परिहर्तु मिति चेत् तर्हि कवेः "स तत्र मञ्चेषु" [ १ ] इत्यादिकैः सामान्येन "निदर्शयामास" [ ३१ ] इत्यादिकै-र्वाक्यैर्विशेषेण यज्ञोकोत्तरतया वर्णनं तत् कोपयोगि। "प्रलोभिता" [ ५७ ] इत्यादि प्रलोभवचनं चासङ्गतम्। कश्चायमर्थो यदन्यथानुपपत्त्यैवं कल्प्यते। कन्याव्यावृत्तेस्तु कविनैव भवितव्यताबलोपनतो रुचिभेदोऽनवीकृतत्वदोप-परिहाराय भङ्गिभेदेन हेतुतया तत्र तत्र वर्णितः। न चतानि व्यावृत्तिं प्रयोजयितुमलम्। तथाहि तत्र भोगस्य दुर्लभत्वं यदुक्तं तद् यत्किञ्चिदेव, न हि तादृश्योऽभिजनादिसम्पन्ना उत्तमनायिकाः पुरुषार्थपराङ्मुख्यो भोगैकप्रवणा वा स्युः। तासां हि धीरोदात्तप्रकृतित्वाद् वासगृहादपि यज्ञशालायां प्रीतिः सम्भवति। तदुक्तं विच्छिन्नाभिषेकप्रस्तावे सीतया—

दीक्षितं व्रतसम्पन्नं वराजिनधरं शुचिम्॥
कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम्।

इति। तथा शत्रुवधे निर्दयत्वं यदुच्यते दोषः, तर्हि वीतराग एवात्राधिकारी स्यात्। प्रभाशालित्वं तु गुण एव। यथा—

सुन्दरी सा न वेत्त्येष विवेकः केन जायते।
प्रभामात्रं हि तरलं दृश्यते नात्र संशयः॥

इति। दूषितदारत्वमसिद्धम्। महाभारते हि—

तत्र माहिष्मतीवासी भगवान् हव्यवाहनः।
श्रूयते निगृहीतो वै पुरस्तात् पारदारिकः॥
नीलस्य राज्ञः पूर्वेषामुपनीतश्च सोऽभवत्।

तदा ब्राह्मणरूपेण चरमाणो यदृच्छया ॥

तं तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा ॥

इत्यादिषु कुलदूषणं किमुपलभ्यते। प्रजानामपचारश्च सर्वत्र सम्भवी। तदाह—"कः कदा किं कुतः कुर्यादिति को ज्ञातुमर्हति।" इति। बहुवल्लभत्वं तु स्नेहबहुमानपदम्। यदाहुः—

"स्त्रियः कामितकामिन्यो मूर्खाः पूजितपूजकाः॥"

इति। अन्यथा षोडशसहस्रान्तःपुरे भगवति न कस्याश्चिदप्यनुरागो जायेत। मर्मरशब्दवत्त्वं तु प्रत्युतानुरागहेतुतयोपलब्धं विदग्धया प्रतिहार्या। यतोऽभिनवोपदिष्टमणितादिप्रयोगप्रतिबन्धभूतायास्त्रपायाः प्रतीकारस्तत्र ते सुलभ इति द्योत्यते। विदूरत्वं तु विदर्भाणां पाण्ड्यानां च कियत्। उभयेषामपि दक्षिणापथान्तर्भूतत्वात्। एतानि च व्यावर्तनकारणानि प्रायशो नायकवर्णनेऽपि सुयोजानि। किं च कविनैव कण्ठोक्त्या दर्शितं प्रबलतरं कारणमनादृत्य कारणान्तरं मृग्यत इत्यहो विजिगीषुत्वम्। तथा च भोजराजः "इयं महेन्द्रप्रभृतीनधिश्रियः" [ कुमार० ५।५३ ] इत्युदाहृत्य नैसर्गिकीं प्रीतिमलङ्घ्यां दर्शितवान्। कारणान्तराभावश्च "नासौ न काम्यः" [ ६० ] इत्यादिभिर्वाक्यैः कवेर्विवक्षितः प्रतीयते। तदेवं स्थितेऽपि यदि गतानुगतिकतैवाङ्गीक्रियते तत् काममङ्गीक्रियतां किं नश्छिन्नम्॥

# किञ्चन शङ्कासमाधानम्

[ निबन्धकः—श्रीत्रिवेणीदत्त-त्रिपाठी ]

संस्कृत-साहित्य-परिषदो भाद्र (September) मासीयसंख्यायां श्रद्धेय-श्रीसम्पादकमहोदयस्य कश्चनं 'प्रतिवचनमि'तिशीर्षण्यः प्रबन्धः प्रकाशितः। स च ज्यैष्ठ (June) मासीयसंख्यायां प्रकाशिते पृच्छेऽवलम्ब्य (?) विहितः। तत्रभवता सम्पादकेन प्रथमायाः पृच्छाया एवोत्तरन्दत्तम्, तत्रास्माकं यद् वक्तव्यम्, द्वितीयायाः पृच्छाया उत्तरञ्च संस्थाप्यते धीमताम्पुरि (?)। तद्यथा —

कुत्रशब्द उदाहरणरूपेण भगवता भाष्यकृता लिखितः इति सर्व एव वैयाकरणाः स्वीकुर्वन्ति। खण्डपाठोऽपि न पाणिनि-प्रणीत इत्यत्रापि न कस्यचिद्विप्रतिपत्तिः। श्रीहर्षादिमहाकविप्रणीतेषु प्रबन्धेष्वप्युपलभ्यते, यत् श्रीहर्षः कालिदासादधिकोऽनुयायी पाणिनेः। यथा कालिदासो न पाणिनिमनुसरति, तत् प्रबन्धान्तरे दर्शयिष्यते। हरदत्तस्वीकृते खण्डपाठे किम् अप्रामाणिकत्वम्? भाष्याननुसरणमेव। नैतत् प्रतिभाति, भाष्यकृता कृतस्य विवेचनस्य सन्दर्शनेन। यदि नहीष्टो भाष्यकृद्भिः 'कुत्र'शब्दो भाषायान्तदा कथन्तैः किमोऽदिति सूत्रस्योदाहरणे धृतम्? यदुक्तं भगवता (?) नागेशेन तदपि न रमणीयम्, तस्य दीक्षितस्य प्रतिद्वन्द्वित्वात्। भट्टोजिदीक्षितपादास्तु स्वीकुर्वन्त्येव। यथा नागेशो भट्टोजिदीक्षितस्य प्रतिद्वन्दी(?), तत् सुस्पष्टङ्कृतम् मया स्वीयेऽ प्रकाशिते प्रबन्धे The Grammar of Pāṇini इतिशीर्षण्ये (एषः प्रबन्धो बृहत्कायः अपूर्णश्चात एवाप्रकाशितमपि सम्प्रति समयाभावान् न प्रेरयितुन्न वा लेखितुं शक्नुमः। अत एव मत्समीप एव स्थास्यति त्रिमासपर्यन्तम्, चतुर्थमासि श्रीमतीये (?) The Calcutta Oriental Journal पत्रे प्रेषितो भविष्यति)। बालमनोरमाकर्तुर्वासुदेवदीक्षितस्य वाक्येऽपि न किञ्चित्

तथ्यं प्रतिभाति, तत्पठनेन तु प्रतीयते कस्यचिन्मतमुद्धरन्ति इमे, इति सूत्रकारस्वरसोऽपि कुत्रशब्दः (?), येनेच्छति सूत्रकारः किमूशब्दात् खलु भाषायान्तदा कथं वा "ह च च्छन्दसि" इत्यस्मिन् सूत्रे वाचयोर्मध्ये-एकस्यैव ग्रहणेन कार्यनिर्वाहेऽपि द्वयोर्ग्रणङ्कृतम्। अस्तु। अस्माकं विचारे कुत्रशब्दः सर्वथा पाणिनीयः छन्दसि भाषायाञ्च। निर्णये तु सुधिय एव प्रमाणम्।

ज्येष्ठमासे प्रकाशिता श्रीरसिकलालघोषालमहोदयेन शङ्का— सुनन्दामुखेन स्वयम्वरसभायां (?) समुपस्थितानां नृपाणां वर्णनावसरे महाकविना अजव्यतिरिक्तानां नृपाणां व्यंग्यमर्यादया दूषणमुद्घाटितम्वा (?) येनेन्दुमत्या ते सर्वे प्रत्याख्याता इति।"

तत्रोत्तरं निवेद्यते—

यद्यपि तेषु श्लोकेषु कानिचित् पदानीदृशानि सन्ति यैः प्रतीयते दूषणोद्घाटनम्, परन्तु (?) तत्रैव कतिपयानि पदानीदृशान्यपि सन्ति यैः शङ्का नश्यते। तद्यथा—

मगधाधिपस्य परन्तपस्य वर्णनावसरे वर्णयित्र्या सुनन्दया तस्य बलवत्ता राज्यसञ्चालनपटुता, याज्ञिकतादिवर्णनया सह तस्य प्रोषितभर्तृकाकरणत्वमपि वर्णितम्, येन प्रतीयतेऽयं स्त्रीषु दयाविरहितः केवलबलवत्तादिषु दत्तावधानः अस्ति, अत एव तस्या 'नेत्रोत्सवं पुष्पपुराङ्गनानामि'त्यत्र नेत्रोत्सव उपहास्यवाचकताङ्गच्छति। प्रतीयतेऽनेन कालिदासस्य व्यंग्यमर्यादया नृपवर्णनम्।

तथैवाङ्गराजवर्णनावसरेऽपि शङ्का भवितुमर्हति परन्तु तामुच्छिद्याऽऽह कविकुलचूडामणिः 'नासौ न काम्यो नच वेद सम्यग् द्रष्टुं हि (?) सा भिन्नरुचिर्हि लोक' इति तथैवान्तेऽप्यनूपराजस्य पुरि (?) नीत्वा सुनन्दया कथयित्वा तस्य गुणावलीं पुनः कथयति कविः 'तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव, शरत्प्रमृष्टाम्बुधरोपरोधे शशीव पर्याप्तकलो नलिन्याः॥' इति। अस्तु। एभिर्वचनैः प्रतीयते, यत्कवि-कुलचूडामणिना

भगवता (?) कालिदासेन न कस्यापि व्यङ्गमर्यादया वर्णनङ्कृतमिति अपि तु साधारणरीत्यैवेति।

इदं यत्किञ्चित् मे मत्या प्रतीतम्, तत् संस्थाप्यते विदुषाम्पुरि (?) विशेषतस्तु विद्वांस एव विदन्ति।

---

## अत्रोत्तरम्

अहो महदिदं प्रमोदस्थानमस्माकं यदिदानीं वाचकमहाभागैः परित्यज्यौदासीन्यमात्मीयं व्यापार्यते पृच्छानां प्रतिवचनप्रदाने लेखनी। त्रिपाठिमहोदयेन तु विशेषतोऽवधातव्यं लेखानां शुद्धिविधौ। पृच्छेऽवलम्ब्य, पुरि, स्वयम्बर, उद्घाटितम्वा, :इत्यादयः प्रयोगा न खलु प्रयोक्तुर्गौरवाय इति सावधारणं ब्रूमः। "श्रीहर्षः कालिदासादधिकानुयायी पाणिनेः" भवतु वा मा वा, प्रकृते किं तावता गतमागतं वा? श्रीहर्षस्य नैषधचरिते बहव एव उपलभ्यन्तेऽपाणिनीयाः प्रयोगा इति न खल्वेतन्न विदितं पाणिनितन्त्रनिष्णातानां काव्यविदाम्। तथाहि षोडशसर्गस्य द्वादशोत्तरशततमे श्लोके द्विरित्यर्थे द्विकृत्व इति पदं प्रायोजि श्रीहर्षेण। 'द्विकृत्वः'शब्दस्य पाणिनीयत्वं को वा प्रेक्षावानाचक्षीत। ब्राह्मणेषु तु ईदृशाः प्रयोगा बाहुल्येनोपलभ्यन्ते। एवं कुत्रशब्दस्यापि नैषधे प्रयोगः। यच्चोक्तं हरदत्तस्वीकृते खण्डपाठे किमप्रामाणिकत्व तत्र प्रदत्तमेवोत्तरमस्मदीये प्रतिवचने। प्राचीनटीकाकृद्भिः कुत्रशब्दस्य भाष्यविरुद्धत्वस्य प्रतिपादनमेवात्र बीजम्, नान्यत् किमपि। यच्चोक्तं यदि नहीष्टो भाष्यकृद्भिः कुत्रशब्दो भाषायां तदा कथन्तैः किमोऽदिति सूत्रस्योदाहरणे धृतमिति, तत्रापि प्रदत्तमेवोत्तरमस्माभिः। कृपया सावधानं पठ्यतामस्मदीयं प्रतिवचनम्, तत्र हि वर्तते

समाधानं सर्वासां शङ्कानाम्। "भगवान्" नागेशो दीक्षितस्य प्रतिद्वन्द्वी भवतु चेत् भवतु नाम, काशिकाकृज्जयादित्यो भाषावृत्तिकारो विमलमतिः कालन्त्रटीकारचयिता दुर्गसिंहः बहोः कालात् पूर्वमेव प्रादुर्भूताः, एतेषां तु दीक्षितोपरि प्रद्वेषः कथमपि न सम्भवति। किमित्येतैरपि कुत्रशब्दस्य भाषायां व्याकरणानुशासनविरुद्धत्वमुद्घोषितम्, किमिति वा जयादित्ये-नैकीयमतत्वेन कुत्रशब्दस्य साधुत्वविषयकं मतं समुल्लिखितम्। यच्चोक्तं वा ह च च्छन्दसि इति सूत्रे वाचेतिनिपातद्वयोपादानात् कुत्रशब्दस्य भाषायां प्रयोगः सिध्यति तदप्यविचारितरमणीयम्, वाचयोरन्यतरोपादाने छन्दसि कुह-कुत्रेतिपदयोरन्यतरस्यैव सिद्धिर्न तूभयोः। एवं त्रिपाठिमहोदयप्रदर्शि-तानां युक्तीनामेकतमाऽपि कुत्रशब्दस्य भाषायां पाणिनीयत्वं प्रतिपादयितुं नालमिति शिवम्।

---

# समालोचनम्

**शेक्सपियर् नाटककथावली।** मेडेपल्लि वेङ्कटरमणाचार्येण विरचिता। (Tales from Shakespeare in Sanskrit by M. Venkataramanacharya, Sanskrit Pandit, Maharaja's College, Vizianagaram.) Published by V. Ramasavami Sastrulu and Sons, 292, Esplanade, Madras.

केन वा जगति न श्रुतं कविकुलचूडामणेः शेक्सूपियरस्य नाम ? केन वाऽक्षरमुखेण न पठितानि तस्यामृतनिष्यन्दिनाटकचक्राणि स्वस्वमातृभाषानुवादद्वारेण। संस्कृतभाषायां पुनरिदानीमपि द्वित्राणामेव कविकुलपतेर्नाटकानामनुवादः प्रकाशित इति परमिदमासीद् विपादस्थानं गीर्वाणवाणीनिषेवणैकव्रतानाम्। बहोः कालात् पूर्वमधुनाविलुप्ते विद्योदयाख्ये परमरमणीये संस्कृतभाषामये मासिकपत्रे शेक्सपियरस्य सर्वस्वस्य हामलेट्रूपकस्यातिमात्रं समीचीनोऽनुवादः संमुद्रितः। अभिरूपशिखामणिना च श्रीकृष्णमाचार्यमहोदयेन वासन्तिकस्वप्नसमाख्यया A Midsummer Night's Dream नामकं नाटकं देवभाषयोपनिबद्धम्। ततश्च परशुरामशैयमहोदयेन Romeo and Juliet नाटकस्य सारमादाय गद्यभाषामयी विजयिनीसमाख्या व्यरचि काचनाऽऽख्यायिका। परलोकप्रस्थितेन पुण्यपत्तननिवासिना विद्याव्यसनिना ओकमहोदयेनापि शेक्सपियरादिप्रतीच्यकविगुरूणां सुभाषितकुसुमानि संस्कृतभाषया संग्रथितानि।

एवं विद्यमानेष्वपि द्वित्राणां ग्रन्थानामनुवादेषु भूयांस्येव नाटकानि संस्कृतभाषाप्रणयिनामनधिगम्यानीत्येतत्काव्यरसपीयूषपूरपानवञ्चिता एवासन् बहव एव सहृदयवर्याः। तत्तद्देशभाषासु ये तावत् प्रकाशिता अनुवादास्तेषां पाठतः प्रायेण सम्यक्तया रसोपलब्धिर्नैव भवतीति

नैतत् परोक्षं प्रेक्षावताम्। अत एव श्रीमतो वेङ्कटाचार्यमहोदयस्य प्रयत्नोऽयं साधीयानेवेत्यत्र नास्ति लेशतोऽपि विप्रतिपत्तिः। एतेन खलु महाभागेन शेक्सपियरविरचितानां प्रसिद्धतमानामद्वर्विंशानां नाटकानां गद्यमयोऽनुवादः प्रकाशितः। प्रायेण च Lamb's Tales from Shakespeare इत्यभिधानं ग्रन्थमवलम्ब्यैव समुपस्थापितोऽत्र संस्कृतविदां पुरतः शेक्सपियरनाटकसुधासारः। यद्यप्यस्मादनुवादान्नैव शक्यते शेक्सपियरविरचितानां रूपकाणां स्वरूपमवगन्तुम्, तथाऽपि कविप्रजापतिसंग्रथितानां नाटकानां वस्तुपरीक्षणं तन्मूलतश्चामन्दानन्दाधिगमः सम्भवत्येव।

अत्र च संस्कृतशैलीं समवलम्ब्य देशनामानि जननामानि च लेशतः परिवर्तितानि, यथा Naples इत्यस्य नेपालः, Prospero इत्यस्य च प्रस्फुर इति रूपान्तरं संसाधितम्, एतावता तु रसास्वादने कोऽपि प्रतिबन्धो न भवति। केवलं भाषायाः प्रमादबाहुल्यमेव नितरां समुद्वेजकं सहृदयानाम्। एकतस्तावदक्षरग्रथकानां प्रमादाः, अपरतश्च ग्रन्थकृतां स्खलितानि एतद्द्वितयसम्मेलनेन सारमेयोच्छिष्टकृमिसङ्कुलपायसकल्पमिदं सञ्जातम्। न खलु सर्वेषां प्रमादानां प्रदर्शनं सम्भवति लघीयस्यामस्यां पत्रिकायाम्, केवलमस्मदुक्तस्य याथार्थ्यप्रदर्शनाय केचन समुद्ध्रियन्ते।

पृः ४ "अहं तावन्निवृत्ततर्ष अध्यात्मज्ञानरतिः"।

पृः १४ यावदहं परापतिष्ये।

पृः १५ युवां निरस्थताम्।

पृः १६ अनुनयो नेपालभूवल्लभश्च प्रस्फुरं प्रजज्ञाते।

पृः १८ आयुरारोग्यैश्वर्याभिवृद्ध्या तौ दम्पती अनुगृहीतुमीश्वरं तुष्टाव।

पृः १९ प्रस्फुर आर्यनमप्यवलोक्य आर्यन! दुस्सहोऽपि मे त्वद्विरहः मोक्ष्यसे।

पृः १९ यतस्स नेतः परं कदाचिदिन्द्रजालविद्यां प्रयोक्ष्यामीति प्रतिजज्ञे। एवं स दुर्जयान् रिपून् पराजित्य स्वभ्रात्रा नेपालदेशाध्यक्षेण च कृतसख्यस्य फलितास्तस्य सर्वे मनोरथाः।

पृः २४ मृतभूरमणस्यौरसं सुतं बालमनुह्लादनामानं विना शशङ्किरे केचित्। ( 'विना' इत्यत्र 'अन्तरेण' इति पठनीयं प्रतिभाति )।

पृः २६ यदीयं स्थितिस्सर्वदाऽवलम्ब्यते चेन्ममाशयः परैरभ्यूह्येत।

पृः ३१ तावपि तच्छ्रुत्वाऽनुह्लादस्योन्मादस्स्त्रीव्यामोहजनित एवेति निरणैषिष्टाम्।

पृः ३४ सदेवीको राजा सर्वैं राजवल्लभैस्तत्र सन्नयधिषि।

पृः १६६ आर्य मा विमुखोऽभूः।

पृः १६६ मम भ्रातृजीवनस्यावधिं दत्वा पुनरायाहीत्युक्तवान्।

पृः १६७ कारागृहनिगलितात् परेद्युर्हनिष्यमाणात् कालादधिकतरां वेदनामियाय।

पृः १६८ नाहमुत्कोचमादास्यामीति प्रतिज्ञां कुर्वन्नपि भ्रातृविमोक्षण-रूपमुत्कोचं तस्यै दत्वा तां वशीकर्त्तुं निश्चितवान्।

पृः १६८ अथ प्रातः पुनरागतामीशबलामवलोक्य प्रभञ्जनस्तामेकाकिनीं रहसि निशीथे स्वनिकटमागन्तुमभिललाष।

पृः १७० इति ब्रुवन्ती भ्रातरं दिदृक्षुर्बन्धनागारमुपससाद।

पृः १७१ कम्पतीव मे गात्रम्।

पृः ३११ आसीन्निजविभवाधःकृतराजराजनगरी विरोचननगरी नाम पुरी।

पृः ३११ कथाः श्रोतुं जातनिर्वेदस्तं परिजहास।

पृः ३११ सुखस्वेच्छाजीवनमेवातिमात्रं सुखकरमिति समर्थयंस्ता-दृगिन्द्रियचापल्येनास्पदीक्रियमाणमात्मानं।

पृः ३१२ गृहे निद्रालवो यूनः प्रायशस्सर्वदा परिहासकथासक्ता वृथा कालं यापयन्ति।

पृः ३१२ कामिन्यनुरागलम्पटस्सन् गृहेऽवतिष्ठसि चेत् कामं सफलकामो भव।

पृः ३१२ तथापि सा आत्मनोऽत्युदारप्रकृतितया सुलभेन परस्य वशंवदा भवितुमभिजातकन्यकानामनर्हमित्यमन्यत।

पृः ३१२ तस्मात् सा कामपालस्य रागवृत्तिं जानन्तीव बहिर्दर्शयन्ती।

पृः ३१५ अयमाप्तोपदेशोऽवश्यं कर्तव्य इति कामपालस्य पिता अमंस्त। सुमतिप्रार्थनानुरोधेन स्वपुत्रं मल्लिानगरं प्रेषयितुं निरचिन्वत। स्वतनूजे जनकोचिताधिकारं विनियुंजन् स एवमब्रवीत्।...मम हठात्कृतामाज्ञां श्रुत्वा विस्मयाकुलो माऽभूः।

पृः ३२१ तूर्याय मे दुहितरं दातुमहं निरचिन्वम्।

पृः ३२३ तमेवानुगन्तुमध्यवस्यत्।

ईदृशाः परःशताः स्थूलतमाः प्रमादाः प्रायेण प्रतिपृष्ठमेवाहमहमिकया प्रादुर्भूय प्रतिघ्नन्ति रसप्रसरम्।

ग्रन्थस्यास्य प्राथमिकभागस्य शब्दसंयोजनचातुरी रमणीयतमेव, स्मारयति च कादम्बरीदशकुमारचरितादीनि प्राचीनानि ग्रन्थरत्नानि। दृश्यतां तावदनुह्लादचरितस्य (Hamlet) प्रारम्भः।

"आसीदाह्लादको नाम राजा धर्मार्कदेशे यथार्थनामा स महीपतिः पितेव चिरं प्रजाः परिपाल्य दिगङ्गनावतंसितनिजकीर्तिकुसुमो हठाद् वभूयं गतः। अजीर्णयौवना जरन्तीनाम्नी तन्महिषी मृतस्य भर्त्तुर्मासद्वयेऽप्यनतीते एव क्लान्ताभिधं तत्कनिष्ठभ्रातरमुपयेमे। ततः सर्वे जनाः "धिगिमां वराकीमनाथां भर्तृगुणपराङ्मुखीमविमृश्यकारिणीम्। या खल्वचिरोपनतं भर्तृव्यापत्तिशोकमपि मनसा दूरीकृत्य वैषयिकसुखैकलालसा भर्तुरनुजं सर्वथा तद्विसदृशं गुणहीनं नीचमतिमेनं क्लान्तं पतित्वेन जग्राहेति भृशं निनिन्दुः" इत्यादि।

अतिमात्रं मनोहरमपीदं पुस्तकं प्रमादसहस्रसन्दूषितत्वाद् दूरतः परिहेयं छात्राणाम्। व्युत्पन्नानां पुनः पिपठिषूणां न खलु प्रभवेदिदं सम्पादयितुं हानिमिति तैरिष्यते चेच्छेक्सपियरमहाकवेः काव्यानामाख्यानवस्त्ववबोद्धुं द्रष्टव्यमेवैतत्। यैस्तु संस्कृतभाषाऽध्याप्यते आंग्लविद्यालयेषु

प्राचीनचतुष्पाठीषु च तैः क्रयेण वा विनिमयेन वा याचूनया वाऽपहरणेन वाऽवश्यमेव संग्राह्यं पुस्तकमिदम्। एतत् पार्श्वे वर्त्तते चेत् सुमहदेव सौकर्यं स्यादशुद्धिप्रदर्शनावसरे छात्रेभ्यः इति।

आशास्यते च वेङ्कटाचार्यमहोदयो वार्धकाद्विलुप्तप्रायां स्मृतिशक्तिं पुनरपि व्याकरणग्रन्थसन्दर्शनेन समुद्बोध्य ग्रन्थमिममामूलचूडं प्रतिसंस्कृत्य प्रकाशयेत्। तेन च सुमहानेवोपकारः स्यात् संस्कृतभाषाप्रणयिनामशेषाणां विशेषतश्च छात्राणाम् इति शिवम्।

**Prakrta Prakasa of Vararuci** with Bhamaha's Commentary Manorama. Edited with translation, introduction, glossary etc. by **Dr. P. L. Vaidya**, M. A. (Cal.), D. Lit. (Paris). Published by Oriental Book Agency, Poona. Price Rupees three only.

प्राकृतभाषाणां यानि तावद्व्याकरणानीदानीमुपलभ्यन्ते तेषु वररुचिविरचितः प्राकृतप्रकाश एव प्राचीनतम इति सर्वेषामेव सम्मतम्। व्याकरणञ्चेदं यद्यपि बहुष्वेव प्रदेशेषु सकृन्मुद्रितम्, तथापि विपश्चिद्वर्येण विविधविरुदावलीमण्डितेन वैद्यमहोदयेन उपोद्घातशब्दसूच्यादिविलसितं सम्पादितं भामहप्रणीतटीकासनाथं काउयेलमहोदयविरचिताङ्गलभाषामयानुवादविभूषितमिदं पुस्तकमतिमात्रमुपकारकं संस्कृतादिभाषानुशीलनपराणां विशेषतश्च छात्राणाम्।

अत्रत्ये च समीचीनतमे उपोद्घाते प्रथमतस्तावत् प्राकृतशब्दस्यार्थविषयको विचारः प्रवर्तितस्ततश्च वररुचि-चण्ड हेमचन्द्र-क्रमदीश्वर-त्रिविक्रम-सिंहराज-लक्ष्मीधर-मार्कण्डेयकवीन्द्र-रामतर्कवागीशविरचितानां प्राकृतव्याकरणानां संक्षिप्तमितिवृत्तमुपनिबद्धम्, ततश्च भरत-शाकल्य-कोहल-लङ्केश्वर-स्यमन्तभद्र- नरचन्द्र-शेषकृष्ण वामनाचार्य-रघुनाथशर्म नरसिंहाऽप्पयदीक्षित-भामकवि- दुर्गुणाचार्य-नागोवा शुभचन्द्र-श्रुतसागर-भोज-पुष्पवननाथानां नामानि प्रायेण च तत्प्रबन्धाभिधानानि च सन्निविष्टानि।

अभिनवगुप्तविरचितायामभिनवभारत्यामेतदतिरिक्ततया उत्पलस्य नाम वृत्तिरचयितृत्वेनोपलभ्यते । तथाचाभिनवगुप्तवचनम् —

"विस्तारविजिज्ञासुः प्राकृतदीपिकादिकमवलोकयेत् । उत्पलविरचितायां च सूत्रवृत्तौ पद्धतौ च स्फुटं पूर्णं च सर्वमस्तीति तत्रादरः कार्यः" इति ।

ततश्च Grammarians of Prakrit Languages समाख्ये परिच्छेदे प्राकृतव्याकरणगतविशेषाः शब्दरूपधातुरूपादयश्चाति-संक्षेपेणोपवर्णिताः । ततश्च मनोरमाटीकोपेतानि सूत्राणि आङ्गलभाषामयाश्च तेषामनुवादाः । ततश्च परिशिष्टे सञ्जीवनीसुबोधिनीसमाख्ययोष्टीकयोः सूत्राणां पाठान्तराण्युपप्रदर्शितानि । अन्ते च सन्निविष्टया मूले टीकायां चोपलभ्यमानानां शब्दानां सूत्राणां च सूच्या महानेवोपकारः स्याद् विद्यार्थिनाम् ।

अवश्यं संग्राह्यमिदं पुस्तकं विविधप्राकृतभाषासु प्रवेशं कामयमानैः सर्वैरेवेति शिवम् ।

---

# भुवनभीषणो भूकम्पः

मकरराशौ क्रूरतमानां राहुभौमशनैश्चराणां मेलनेन भारतभूमौ कोऽपि स्वप्नेऽप्यसम्भावनीयो विपत्परम्परापातः सङ्घटिष्यत इत्युत्प्रेक्षमाणा ज्यौतिषिका महत्तमेनोद्वेगेन समाक्रान्तहृदया भगवन्तमेव निखिलपापप्रशमनं सकलदुर्दैवविघातकमनुध्यायन्तः स्थिताः। परं दुर्दैवस्यौत्कट्यात् पापभारस्य च दुर्वहत्वाद् ग्रहसम्मेलनस्यास्य समुत्कटतममेव फलमनुभूतं भारतवर्षेण। अत्र च भुवनभीषणेन भूमिकम्पेन पञ्चषनिमेषाभ्यन्तरे एव धूलिसाद्भुताः परोलक्षाः प्रासादाः, करालकालकुहरं चानुप्रविष्टाः परःसहस्रा मानवाः। अहो! को वा समुपवर्णयेत् तादात्विकीं समवस्थां मगधप्रदेशस्य, एकतस्तावद् भूमेः कम्पेन चूर्णपेषं निष्पिष्टानि प्रासादप्रभृतीनि वासस्थानानि, अपरतश्च भूतलतः प्रादुर्भूताभ्यो गुहाभ्यः शतसहस्रेभ्यः समुत्थितानि ऊर्द्ध्वं समुत्क्षिप्तानि सलिलस्रोतांसि प्लावयामासुर्नगरखर्वटादीन्यखिलानि। कियन्तंचन कालं यावद् भगवती भागीरथ्यपि ग्रीष्मकुसरिद्विलायं विलीना सिकतासु प्रकम्पयामास ततोऽपि भीषणतरोत्पातमालाशङ्कया मानसानि श्रद्धालूनाम्; ततश्च धार्मिकजनप्रार्थनाप्रभावेण कियतश्चित् कालादूर्ध्वं पुनः प्रादुर्भूता भगवती दुरितक्षयकारिणी भागीरथी देवी।

भूकम्पस्यैतस्य प्राबल्येन मजःफरपुर-मुङ्गेर-मतिहारिप्रभृतिषु समृद्धतमेषु नगरेषु प्रायेण नैकमपि भवनमवशिष्यते, तत्रत्यानां च जनानां ये इदानीमपि कथञ्चिच्छ्वसन्ति ते प्रबलशीतवातादिपीडिताः शून्येष्वेव क्षेत्रेषु कथं कथमपि कालं नयन्ति। अहो! कति वा मनुजाः पुत्रकलत्रादिसमूलविनाशेन भृशं न सन्तप्यन्ते, कति वाऽसूर्यम्पश्या ललनाः पतिपुत्रादिस्वजनगणवियोजिता अविज्ञातशीतादिक्लेशा उन्मत्तवत् सोरस्ताडं न क्रोशन्ति, कति वा शिशवः पित्रादिसहायनाशेन नितान्तमेवाशरणा धूलिषु न लुठन्ति। बहुत्र

हि पुत्रशोकातुरा मातरः, पतिशोककातराः सहधर्मिण्यः, मातापितृवियोगविधुराश्च बालाः स्तोकतमोच्छ्वासमात्रावशेषितजीवना विचेतना इवापगतासूनां स्वजनानां पार्श्वतः करुणं विलपन्ति। एतेषां च समवस्थासन्दर्शनेन क्रूरतमस्यापि विदीर्यते हृदयम्। अकाण्डखण्डप्रलयेनामुना को वा सचेता नानुभवेदरुन्तुदां वेदनाम्। न वार्त्तानाममीषां साहाय्याय नातिष्ठेत् प्रयासम्। सर्वथेदानीमपि निवारयतान्महामार्यादिकं भगवान् भूतभावनः, प्रशमयताच्च दुःखशोकावेगं दुर्दैवविलासितपीडितानां मगध-प्रदेशनिवासिनामिति शम्।

---

# गङ्गास्तोत्रम्

ॐ नमो गङ्गायै

भगवति भवलीलामौलिमाले तवाम्भः-
कणमणुपरिमाणं प्राणिनो ये स्पृशन्ति।
अमरनगरनारीचामरग्राहिणीनां
गलितकलिकलङ्कातङ्कमङ्के लुठन्ति ॥१॥

ब्रह्माण्डं खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती
स्वर्लोकादापतन्ती कनकगिरिगुहागण्डशैले स्खलन्ती।
क्षोणीपृष्ठे लुठन्ती दुरितचयचमूं निर्भरं भर्त्सयन्ती
पाथोधिं पूरयन्ती सुरनगरसरित् पावनी नः पुनातु ॥२॥

मत्तमातङ्गकुम्भच्युतमदमदिरामोदमत्तालिजालं
स्नानैः सिद्धाङ्गनानां कुचयुगविगलत्कुङ्कुमासङ्गपिङ्गम्।
सायम्प्रातर्मुनीनां कुशकुसुमचयैश्छन्नतीरस्थलीकं
पायान्नो गाङ्गमम्भः करिकरमकराक्रान्तरंहस्तरङ्गम् ॥३॥

शैलेन्द्रादवतारिणी निजजले मज्जन्मलोत्तारिणी
पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी ।
शेषाहेरनुकारिणी भवशिरोमल्लीदलाकारिणी
काशीप्रान्तविहारिणी विजयते गङ्गा मनोहारिणी ॥४॥

आदावादिपितामहस्य नियमव्यापारपात्रीजलं
पश्चात् पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या किल्बिषनाशिनी भगवती भागीरथी पातु नः ॥५॥

भगवति तव तीरे नीरमात्राशनोऽहं
विगतविषयतृष्णः कृष्णमाराधयामि ।
सकलकलुषभङ्गे स्वर्गसङ्गे प्रसङ्गे
तरलतरतरङ्गे देवि गङ्गे प्रसीद ॥६॥

कुतोऽवीचिर्वीचिस्तव यदि गता लोचनपथं
त्वमापीता पीताम्बरपुरनिवासं वितरसि ।
तदुत्सङ्गे गङ्गे यदि पतति कायस्तनुभृतां
तदा मातः शातक्रतपदलाभोऽप्यतिलघुः ॥७॥

गङ्गे त्रैलोक्यसारे सकलसुरवधूधौतविस्तीर्णतोये
पुण्ये ब्रह्मस्वरूपे हरिचरणरजोहारिणि स्वर्गमार्गे ।
प्रायश्चित्तं यदि स्यात्तव जलकणिका ब्रह्महत्यादिपापे
कस्त्वां स्तोतुं समर्थस्त्रिजगदघहरे देवि गङ्गे प्रसीद ॥८॥

गंगे जाह्नवि देवि शम्भुवनिते मौलौ निधायाञ्जलिं
जानुभ्यां प्रणिपत्य हन्त भवतीमेकं वरं प्रार्थये ।
त्वन्नीरे वपुषोऽवसानसमये नारायणाङ्घ्रिद्वयं
सानन्दं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवः ॥९॥

इति श्रीशङ्कराचार्यविरचितं गङ्गाष्टकं समाप्तम् ॥

[ सुमनोहरमिदं स्तोत्रं सुरभारतीसेवाव्रतदीक्षितेन श्रीमता नित्यधन-भट्टाचार्य एम् ए महोदयेन संप्रेषित इति भूयांसस्तस्मै धन्यवादा वितीर्यन्ते। प्रणेता चास्य शङ्करावताराच्छङ्कराचार्यादन्य एव गौडाभिजनः कश्चन विद्वद्वर इति विदन्तु वाचकमहाभागाः। अत्र प्रतिपद्यमेव स्मुल्लसमानं मनोज्ञतमं शब्दालङ्कारजालं सुमधुरश्च भावः कस्य वा सचेतसश्चेतो नापहरेत्। यद्यपि सप्तमे पद्ये शातक्रतव इत्यर्थे प्रयुक्तं शातक्रतपदं च्युत-संस्कृतिसमाख्यं दोषमावहति तथापि "एको हि दोषो गुणसन्निपाते निमज्ज-तीन्दोः किरणेष्विवाङ्कः" इति न्यायेन नासौ विशेषतः समुद्वेजयति हृदयानि सहृदयानाम्। अस्य पुष्पिकायां गङ्गाष्टकमिति पदमुपलभ्यते, मूले पुनर्नव श्लोकाः सन्दृश्यन्ते। नात्राद्भुतं किमपि वर्त्तते। तथाहि यथा नीतिवैराग्यादि-शतकेषु शततोऽप्यतिरिक्ताः केचन श्लोका दृष्टिपथमुपयान्ति तथात्रापीति-बोद्धव्यम्। स० सा० प० स० ]

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

| March 1934. | १८५५ शकीये फाल्गुने १६श-वर्षस्य ११श-संख्या | Vol. XVI. No. 11. |
| --- | --- | --- |

## प्राचीनभारते नारीणां परिस्थितिः

[ निबन्धकः—श्रीउपेन्द्रनाथविद्याभूषणशास्त्री ]

स्त्रीवाचकशब्देषु नारीशब्द एव प्राचीनतमतामवगाहते, अयं च ऊढाया अनूढायाश्च द्विविधाया अपि स्त्रिया अभिधायकः। ततश्च स्त्री, योषित्, योषा, अबला, सीमन्तिनी, योषित् इत्येते शब्दाः प्रादुर्भूतास्तमेवार्थमभिव्यञ्जयन्ति। सा हि सर्वेषु गृहकर्मसु स्वतन्त्रासीत्, गृहपतिना तत्साहाय्यमन्तरेण धर्मकर्म नैव शक्यते साधयितुम्, अत एव पत्नीति तस्या नामान्तरम्। तत्र च "पत्युर्नो यज्ञसंयोगे" [ पा० ४।१।३३ ] इति भगवत्पाणिनिसूत्रमपि साक्षिभूयमावहति। स्त्रियाश्च गुणेषु शिक्षा—विशेषतः मानसिकी आध्यात्मिकी च शिक्षा—प्रधानतया पर्यगण्यत। तासु च बहवो वेदसूक्तद्रष्ट्र्य ऋषय आसन् बहवश्च शत्रुभि र्युद्ध्वा पतीन् पुत्रांश्च लेभिरे। ऋग्वेदतोऽथर्ववेदतश्च विस्पष्टं प्रतीयते तदानीं बाल्यविवाहप्रथा नैव प्रावर्त्तत, स्त्रियश्च पितृगृहे स्थिताः सम्यक् शिक्षिता विदितवेदितव्या यौवनपदवीमुपारूढाः स्वाभिप्रायानुरूपं पतिं वा वृतवत्य आत्यन्तिकं वा कौमारव्रतमङ्गीकृतवत्यः। वैदिककाले विधवानां पुनरुद्वाहोऽपि सर्वथाऽपरिचितो नासीत्। श्रूयन्ते चानपत्या अक्षतयोनयो वा विधवा देवरादिभि-

र्घनिघ्नज्ञातिभिः परिणीताः। महाभारताच्चावगम्यते प्राथमिके काले विवाह एव नासीत्, श्वेतकेतुनैव महर्षिणार्यवंशस्य सम्पत्तये इदंप्रथमतया प्रवर्त्तिता विवाहविधिः। प्राचीने ब्रह्मावर्त्ते भोगायोद्वाहः सर्वथा शशविषाणायमान एवासीत्। वैदिककाले पुरुषाणामेकपत्नीकत्वमेव प्रथितमासीत्, ततश्च कालक्रमेण बहुविवाहोऽपि धनिषु दृढतरं पदं लेभे। सत्यपि परिग्रहबहुत्वे महिषीपदवाच्यायाः प्रधानराज्ञ्या एव पुत्रा उपरते पितरि राज्यं लेभिरे। सम्राजो द्वितीया पत्नी परिवृक्त्याख्यासीत्, तृतीया च वावाताभिधाना, चतुर्थी पुनः पालागलीति। पुत्रेषु च प्रथमद्वितीयौ धर्मतनुजौ तदितरे च कामतनुजा इति प्रसिद्धाः, यत् किल विवाहकाले यौतुकरूपेणालभ्यत यच्च शरीरकर्मणा वा विद्याबलेन वा पारिश्रमिकरूपेण वा भृतिरूपेण समुपार्ज्यत तत् सर्वं नार्य्या एव, न खलु तत्र लेशतोऽपि भर्त्तुः स्वामित्वमासीत्। मातरो हि पुत्रैर्दुहितृभिश्च मान्यन्ते स्म—पूज्यन्ते स्म। स्त्रीणां चात्यन्तिकपारतन्त्र्यं सर्वथाज्ञातमेवासीत् तदानीम्। स्त्रीणां च चारित्रमेव पूजास्थानमासीत्, हीनचारित्रा असद्वृत्ताश्च नार्यः पतिता इति दूरतः परिहृताः—सयत्नं समाजशरीरात् सुदूरं समुत्सारिताः। न खलु तदानीं वेश्यापदवाच्या वेश्यागणिकादयो नासन् परं ताः कलाकौशलसम्पन्ना इति उत्सवावसरे एवाहूयन्त। कामं वैदिकेषु सूक्तेषु भ्रूणहत्याव्यभिचारागम्यागमनादिकं श्रूयते, चौर्यस्तेयविप्रलम्भादीनि च, परं सर्वत्रैव तत्तदागस्कारिणः समाजशृङ्खलारक्षणार्थं महता दण्डेनायोज्यन्त। किं बहुना वैदिकसूक्तेषु समाजपरिस्थितेर्यच्चित्रमुन्मीलितमुपलभ्यते तत्र भारतीया आर्याः स्वल्पसन्तुष्टाः प्रफुल्लमानसा निरालस्या युद्धप्रियाश्च दृश्यन्ते।

वैदिककाले बह्व्योऽपि नार्यो मन्त्रद्रष्ट्र्यश्च वेदाध्यापिकाश्चासन्निति तदानीं स्त्रीणामपि मौञ्जीबन्धनं सुप्रथितमासीत्। तथाच यमः—

पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनं च वेदानां सावित्रीवचनं तथा॥

इति। ताभिरपि पितृभर्तृपुत्रभ्रात्रादिवद् गायत्रीमन्त्र उच्चार्यते स्म। मनुनाऽपि विस्पष्टमेव पत्नीसहायस्य पत्युः सृष्टिकर्तृत्वं प्रतिपादितम्—

द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्।
अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः॥

महाभारतेऽपि स्मर्यते—

अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा।
भार्या मूलं त्रिवर्गस्य भार्या मूलं तरिष्यतः॥

किं बहुना जायापत्न्यर्धाङ्गिनीसहधर्मिण्यादिशब्दव्यपदेश्याभिः स्त्रीभिः सहचरिता एव पुमांसः पूर्णतया परिगणिता आसन्। एवञ्च धर्माचरणाय सर्वार्थेषु स्वसमानयोगक्षेमया पत्न्या संयोगः सर्वथावश्यकीभूतः। न च पत्नीसंयोगमन्तरेण धर्म्येषु कर्मस्वधिकार उपजायते। तथाच श्रुतिः—सस्त्रीको धर्ममाचरेत् इति।

बृहद्देवतायां सप्तविंशतेर्मन्त्रद्रष्ट्रीणां नारीणां नामान्युपलभ्यन्ते। तासु च काक्षीवती घोषा विश्ववारा अपाला च श्रेष्ठाः। विश्ववारा हि न केवलं मन्त्रद्रष्ट्री, परं सा यागहोमादिषु ऋत्विक्पदमप्यलभत। तदानीं हि स्त्रीणां वेदाध्ययने तदध्यापने वेदसूक्तद्रष्टृत्वे च नैपुण्ये कठी बह्वृच्याचार्योपाध्याय्यादिपदानि साक्षिभूतानि तिष्ठन्ति। तथाहि कृष्णयजुर्वेदस्य कठशाखाध्येत्री एव कठीति व्यपदिश्यते। ऋग्वेदे च सम्यग् व्युत्पन्ना बह्वृचीति समाख्यायते। आचार्योपाध्यायाशब्दौ च या खलु स्वयमेवाध्यापनादिकमनुतिष्ठति तामेवाभिधत्तः। उपनिषत्स्वपि बहूनां सर्वशास्त्रपारङ्गमानामध्यात्मविद्याविशारदानां नारीरत्नानां समुपलभ्यन्ते नामानि। तथाहि मित्रस्य महर्षेर्दुहिता, याज्ञवल्क्यस्य च ऋषिवर्यस्य पत्नी मैत्रेयी, वचक्नुमहर्षेस्तनया वाचक्नवी, स्वायम्भुवमनोस्तत्पत्न्याः शतरूपायाश्च कन्या देवहूतिर्या किल कर्दमस्य महर्षेः पत्नी सांख्यशास्त्रप्रवर्तयितुः कपिलस्य च जनन्यासीत्, कर्दमदेवहूत्योश्च कन्यका वशिष्ठस्य महर्षेः सहधर्मिण्यरुन्धती, दक्षस्य प्रजापतेस्तत्पत्न्याश्च प्रसूतेः प्रसूति-

रनसूया या किल महर्षिणाऽत्रिणा स्वसहधर्मिणी व्यधायि—एताः सर्वाः स्वविद्यावैशद्यविमलीकृतदिगन्तराला उपनिषत्सूपवर्णिताः।

प्राचीना आर्यावर्तनार्यो न केवलं विदुषीणां धर्मपरायणानां च धुरि कीर्तनीयाः, ता हि चारित्रोत्कर्षेण स्वदेशवात्सल्येन च—

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी"

इति भगवतो वाल्मीकेर्महावाक्यं सदैवानुपालयन्त्यः स्वजन्मानुग्रहपवित्रितवसुन्धरा मूर्तय इव पातिव्रत्यस्य विराजन्ते स्म। मातर इति स्वसार इति दुहितर इति गृहिण्य इति सर्वथा तृणीकृतस्वार्थाः स्वस्वधर्ममनुरुध्यमाना विभूषयामासुस्ताः स्वकुलं च श्वशुरकुलं च निखिलं च विश्वम्। तदानीं चावरोधप्रथायाः सद्भावो नासीत्। अवरोधनिवासो हि बहोः कालादनन्तरं स्त्रीणां पुरुषाणां च सहजशौर्यवीर्यबलपराक्रमादिपरिभ्रंशादेव समुत्पन्नः।

स्त्रीणां बहुभर्तृत्वं विरलमेवासीत्। यद्यपि पुरुषाणां बहुपरिग्रहस्तथा न विरलस्तथापि स्त्रीणां वा पुरुषाणां वा बहुविवाहः सर्वथाऽश्लाघनीय एवासीन्नारीणाम्।

स्वनयेन राज्ञा महर्षये कक्षीवते दशकन्याप्रतिपादनम् इन्द्राण्याश्च सपत्नीदमनाय प्रार्थनं पुरुषाणां बहुपत्नीकत्वस्य भीतिजनकत्वे प्रमाणम्। याज्ञसेन्या साकं पञ्चानां पण्डवानामुद्वाहोऽपि बहूनामेवासम्मत आसीत्।

इदानीं प्रसिद्धानां स्त्रीणां संक्षिप्तमितिवृत्तं प्रकाश्यते।

**१। विश्ववारा।** अत्रिगोत्रजा ब्रह्मवादिनी मन्त्रद्रष्ट्री विश्ववारा ऋग्वेदस्य पञ्चममण्डलस्याष्टाविंशतितमसूक्तस्य ऋषिः। सूक्तस्यास्य षड्भ्यो मन्त्रेभ्यः आत्रेय्या विश्ववाराया न केवलमृषित्वम् ऋत्विक्त्वमपि विस्पष्टमेव प्रतीयते। सूक्तमिदमतिमात्रं मधुरं दर्शनतत्त्वप्रतिपादकं च पाठमात्रमेव हरति मनः पठितुः।

**२। अपाला।** अत्रितनूजाया ब्रह्मवादिन्या अपालाया वृत्तान्तः पूर्वमेव सविस्तरं समुपवर्णित इति नेह प्रतन्यते। सा हि रमणीयतमदर्शनापि चर्मरोगविशेषसमाक्रान्ततया पत्या परित्यक्ता देवराजमिन्द्रं समाराध्य तद्वरेणोल्लाघतामापन्ना जातानुशयेन वल्लभेन सोत्कण्ठमङ्काश्रयणीकृता।

**३। घोषा।** दीर्घतमसः पुत्रस्य कक्षीवतः शूद्रागर्भसमुद्भूता तनया घोषा नाम। सा हि ब्राह्मणाच्छूद्रायां समुत्पन्नेति पारशवी घोषेति व्यपदिश्यते। ऋग्वेदस्य दशममण्डलस्यैकोनचत्वारिंशचत्वारिंशे सूक्ते तयैव दृष्टे। सा हि श्वित्रेण विरूपीकृता षष्टिर्वर्षाणि पितृगृह एव निवसन्ती मनोरथानुरूपं पतिमनासादयन्ती विषादस्य परां काष्ठामधिरूढा सूक्तद्वयेनाश्विनौ स्तुतवती। ततश्च प्रीताभ्यामश्विभ्यामसौ निरामयतामापादिता देवानाञ्च प्रसादात् स्वानुरूपेण भर्त्रा सङ्गता सहस्त्यनामानं तनयं प्रसूतवती। स च सहस्त्यो दशममण्डलस्यैकचत्वारिंशत्तमस्य सूक्तस्य द्रष्टा।

**४। शश्वती।** प्लयोगनाम्नो राज्ञः पुत्रोऽसङ्गाभिधानो राजा कदाचिद्द देवशापेन नपुंसको बभूव। अस्यासङ्गस्य भार्याङ्गिरसः सुता शश्वत्याख्या मूर्त्तिमतीव पातिव्रती मेधातिथेरुपदेशेन तीव्रं तपस्तप्त्वा पुनः पुंस्त्वेन योजयामास भर्त्तारम्। अष्टममण्डलस्य प्रथमसूक्तस्य त्रिंशादृक्चतुष्टयेन राजा मेधातिथिं स्तौति। पञ्चत्रिंश्या च ऋचा राज्ञी प्राप्तपुंस्त्वं तमुपलभ्य स्वानन्दं प्रकटयति।

**५। जुहूः।** बृहस्पतेर्जुहूर्नाम भार्या बभूव। कदाचिदस्य किल्विषमस्या दौर्भाग्यरूपेणासाञ्चक्रे, अत एव स एनां पर्यत्याक्षीत्। अनन्तरमादित्यादयो देवा मिथो विचार्यैनामकिल्विषां कृत्वा पुनर्बृहस्पतये प्रादुः। ब्रह्मवादिनी च देवी जुहूर्ऋग्वेदस्य दशममण्डलस्य नवाधिकशततमस्य सूक्तस्य द्रष्ट्री।

६। सूर्या। मन्त्रद्रष्ट्री सूर्या विवस्वतः पत्नी। सूर्योदयात् पूर्वं सा उषा इति व्यपदिश्यते मध्याह्ने सूर्येति सायाह्ने च वृषाकपायीति। दशममण्डलस्य पञ्चाशीतितमस्य सूक्तस्य सर्वा एव ऋचः सवितृसुतया सूर्यया दृष्टाः। अतिमात्रे रमणीयऽस्मिन् सूक्ते वध्वाः पतिगृहगमनं यथा निर्विघ्नं सम्पद्येत यथा च पत्युः स्वजनास्तस्यां स्निग्धभावमवलम्बेरन् यथा च प्रतिबन्धका दूरं समुत्सारिता भवेयुस्तथा स्तुतिपरम्परात्र वर्त्तते।

७। इन्द्राणी। ऋग्वेदस्य दशममण्डलस्य षडशीतितमस्य सूक्तस्य इन्द्र इन्द्राणी तत्सुतो वृषाकपिश्च द्रष्टारः। आदितो नवर्चं इन्द्रोस्योक्तिः, तत एकादशर्चं इन्द्राण्याः, अन्तिमाश्च तिस्रो वृषाकपेः। दशममण्डलस्य १४५सूक्तस्य सर्वा एव ऋच इन्द्राण्या दृष्टाः सपत्नीनां विनाशकर्मणि विनियुक्तमिदं सूक्तम्। अतश्च प्रतीयते प्राचीनेऽपि काले न खलु पुरुषाणां परिग्रहबहुत्वं स्त्रीणां सम्मतमासीदिति।

८। गोधा। ऋग्वेदस्य दशममण्डलस्य १३४ सूक्तस्य अर्धर्चसहितायाः सप्तम्या ऋचो ब्रह्मवादिनी गोधा द्रष्ट्री।

९। शची। ऋग्वेदस्य दशममण्डलस्य १५९ सूक्तस्य द्रष्ट्री पुलोमतनूजा शची देवेन्द्रपत्नीनामन्यतमा। सूक्तादस्मात् सपत्नीषु तस्याः श्रेष्ठत्वं विस्पष्टमेवावगम्यते। तथापि तस्याः सपत्नीविनाशप्रवृत्तिरपि स्फुटीभवति।

---

# भारत-रहस्यम्

## प्रथमः परिच्छेदः ।

विधुभृतं गुरुदेवमहं मुदा सुकृतिनश्च प्रणम्य मुहुर्मुहुः ।
सुविदधे स्वधिया रुचिरं हृदे खलु(?) रहस्यमनूनकभारतम् ॥ १ ॥

कस्मिंश्चिदतिरमणीयमनोहराराम वीणापुस्तकविभूषितकरकिसलया विमलद्युतिः सरस्वती चामीकररत्नजटिते सिंहासने विराजते। धृति-स्मृतिप्रमुखा वयस्या वरिवस्यायां सन्त्युपस्थिताः। लज्जाशोकाकुला भारतमाता मूर्धानमधः कुर्वाणा तिष्ठति ।

( सरस्वती साश्चर्यं भारतमातरमवलोकयति ।

सरस्वती—अहो भारतेश्वरि ! भारतमातः ! रत्नगर्भे ! भावत्कं विशदं यशस्तु चतुर्षु दिक्षु भुवनेषु किलारूढमिव । त्रिषु लोकेषु नारदादयो महर्षयो गायन्ति त्वां स्वरैः सामवेदस्य । तथा च—

भारद्वाजो मुनिश्रेष्ठः पौलस्त्यश्च पराशरः ।
वसिष्ठो गौतमः सौख्यो हारीतश्च्यवनोऽपि च ॥ २ ॥

मैत्रेयो जमदग्निश्च विश्वामित्रः परीक्षकः ।
नारदो वामदेवश्च कुशिको बादरायणः ॥ ३ ॥

शौनकः सहकौण्डिन्यः पाणिनिश्च पतञ्जलिः ।
भृगुवत्साङ्गिरोगर्भास्तथैवान्ये महर्षयः ॥ ४ ॥

ब्रह्मज्ञानस्य निधयो यमस्य नियमस्य च ।
तपन्तस्तेजसा दीप्ता हूयमाना इवाग्नयः ॥ ५ ॥

एतैः समस्तैर्भावत्कं जगत् सिंहासनञ्च तत् ।
किं नोच्चकोटितां नीतं वद मां भारतेश्वरि ॥ ६ ॥

हरिश्चन्द्रो दिलीपश्च दुष्यन्तो भरतः शिविः ।
रघुरेको महायज्ञः(१) शुनासीरं जिगाय यः ॥ ७ ॥

स हि दाशरथी रामो स हि भीमो महाबलः ।
स हि कर्णो महात्यागी स हि राजा युधिष्ठिरः ॥ ८ ॥

महाभारतसंग्रामे पार्थो यश्च धनुर्धरः ।
योगेश्वरत्रिलोकेशकृष्णचन्द्रादयोऽपि च ॥ ९ ॥

पराक्रमेण शौर्येण सूर्यचन्द्रकुलोद्भवाः ।
विश्वं जित्वा सुखं किं ते न वा ननमशूशुभन् ॥ १० ॥

तत्रभवत्या धर्मिणो वणिग्वंशजा महीयसा व्यापारसमूहेन कृषावखिलामुन्नतिं च विधाय विश्ववसुना धान्येन च कोषं पूरयन्ति स्म । शूद्रजा अपि विविधव्यतिकरैः(२) शिल्पोन्नतिमधिस्फाय्य द्विजातीनभिषेव्य भवतीं प्रियाचक्रुः । एवं सुयोग्यधर्मशीलबलशौर्यव्यवसायशिल्पप्रवीणेष्वगण्यगुणागारेषु चतुर्षु सन्तानेषु सत्स्वपि हा मातः ! अद्य स्वीयाखिलशोभाविहीना कथमभिदृश्यसे ।

भारतमाता—अहमस्मद्व्यलीकगाथां किं तेऽभिदधानि । प्रियभारति ! प्रजां जनयित्रा विधात्राऽहमशेषविभूतिविभूषिताऽकारिषि । क्रममसृजन्त्यः सदा षडृतवो मां भजन्ते । त्रिपथगा (३)सूरसुताद्यापगा अतनु(४)वृजिनान्तका ममोत्सङ्गे समं कल्लोलकदम्बैः(५) समन्ततो विलसन्तितराम् । तुहिनगिरिसह्यशाशेषशैलशिखरविभागाः पुष्करं(६) संमृशन्ति । खाद्यलेह्यादिषड्विधद्रव्यैः सुगन्धिभिः फलकुसुमविसरैर्हेमरत्नमणिवज्र(७)समृद्धाश्चित्तानुगुणपदार्थोपपन्नाश्चत्वारो मे विश्राणिताः सन्तानाः सरोजजन्मना । तथा च—

---

१। एष रघुर्न्यासावशेषं मखं चक्रे। २। व्यतिकरैः प्रकारैः। संपर्के च व्यतिकरः प्रकारव्रतयोरपि ॥ इत्यमरः। ३। सूरः सूर्यः। ४। वृजिनं पापम्। ५। कदम्बैः समूहैः। ६। पुष्करं व्योम। ७। वज्रं हीरकः।

आननाद् ब्राह्मणो ज्ञेयो बाहुतः क्षत्रियः स्मृतः ।
जानुतो वैश्यसन्तानाः शूद्रः पादोद्भवं दधौ ॥ ११ ॥

इमे चत्वार एव सन्ताना मदीयसुखसमृद्धिमानप्रतिष्ठायां हेतुभूताः पुराभूवन्। एतेषामेव तपोविद्यादानशौर्यवीर्यप्रज्ञारक्षणैर्व्यवसायशिल्पनैपुण्यादिभिरनेकैः सद्गुणैरहमात्मानं धन्यां मन्यमाना सुखेनासम्। परं हा! एतर्हि किं करवाणि? मामकीनास्त्वद्य चत्वारोऽपि सन्तानाः स्वपूर्वजानां मर्यादामतिक्रान्ताः खलु। तथा चात्मनीनैर्जातीयधर्मकर्मगुणैर्विहीनाः कलहप्रवीणाः पारस्परिकमुज्झित्वा स्वरूपं सुधियो विमुखीभूय दुर्व्यसनाकृष्टचेतसो विद्वेषानलस्य मोहरोषरूपेऽविद्यास्वप्ने प्रसुप्ताः सन्ति। हे सरस्वति!

सन्ततेर्मे गतो धर्मो देशः कर्मस्वतन्त्रते ।
दैशिकं गौरवं मानं विद्यालक्ष्मीबलं गतम् ॥ १२ ॥

पराधीनाः पशुनिभाः परेषां मुखदर्शकाः ।
समापन्नाः सुसन्तानाः दुःसन्ताना गतत्रपाः ॥ १३ ॥

कस्याश्चिन्मातुरेका सन्ततिर्लभेत चेन्मान्द्यं तदेतरं स्वसूनुमाश्रित्य कदाचिदात्मगौरवं गोपायितुं शक्नुयात्। परञ्च प्रतिकूलदैवा किं करोम्यहम्। मम तु चतस्रोऽपि प्रजाः दुष्टवार्टीं (१)समायाताः। भवतीमधुना विसृज्य कां शरण्यां प्रपत्स्ये। (इति मन्युविह्वला भारतमाता रोदिति)।

सरस्वती—भारतेश्वरि! मा कुरु शुचम्। तव प्रतापी हर्यक्ष-(२)-सदृक्षो बली सन्ततिजनोऽवश्यमेवाज्ञाननिद्रां विरहय्योत्थास्यति। तदा भो भारतेश्वरि! स्वजातीयगुणकर्माणि सुधार्यात्मप्रबलपराक्रमोद्योगैर्भयस्त्वां सुखाकरिष्यति।

---

१। वाटी पन्थाः। २। हर्यक्षः सिंहः।

( गुणगानमीश्वरीयं कुर्वन्तश्चत्वारो वेदाः समायान्तो विलोक्यन्ते )

सरस्वती—( भारतमातरमुद्दिश्य ) पश्य ते चत्वारोऽपि वेदाः समायान्ति पुरतः। एत एव तव क्लेशं नूनं नेष्यन्ति दूरतः।

( वेदाः सरस्वतीसनीडमेत्य सादरं प्रणमन्ति )

सरस्वती—वेदाः! अखण्डं वो यशो धवलयतु दिशो भूमण्डले।

वेदाः—हे भगवति! निर्वाणरूपिणि! महामाये! पतितपावनि! विश्वप्रकाशिनि! जगदाधारमूर्ते! अस्मानाज्ञापय त्वमधुना क्व वयं निवसाम इति।

स्वरस्वती—भो वेदाः! परमात्मना युष्माकमधिवासाय पूतेयं भारतभूरस्ति प्रतिनियता। अन्यच्च कृतवन्तो भवन्तो भारतक्षितेः लोकलोकान्तरेषु स्वकप्रकाशम्। (१)प्रयतामेतादृशीं वसुमतीं विसृज्य कुत्र वासं करिष्यथ?

चत्वारो वेदाः। ( संकुच्य ) इदानीं भारतीयसन्ततिभिर्यादृशी दुर्दशाऽस्माकं कृताऽऽस्ते स्मरन्तो वयं तां भारते घृणां प्रपद्यामहे।

सरस्वती—( सविस्मयम् ) किमनादरो वेदानामिह भारते? शोकः? शोकः!! महाशोक!!!

चत्वारो वेदाः—भारतेऽधुनास्माकं नाममात्रतः सत्कारः। तदप्यसमज्ञामार्थयोभारतीयजनाः मिथः कलहाय्य विक्षिप्य वा विवदनमेवात्मराद्धान्तं बुध्यन्ते। यत्र भारते (२)निगमनिगमेषु ग्रामग्रामेषु सदनसदनेषु आश्रमेष्वाश्रमेषु च प्रत्यूष एव वेदपाठादि हवनं सन्ध्यावन्दनं सुकृतकर्म चाभवंस्तत्राद्याहर्मुखतो रोगशोकादिभिर्दग्धमानसाः परायत्ततयाऽवगुण्ठिताः स्वार्थरता भारतान्ववायाः स्वजठरभरणे प्रसक्ताः। यत्र भारतीयनवयुवानो वर्णिवर्गा गुरुकुलेषु वेदानधीतवन्तस्तत्राभितो यावन्या भाषाया ध्वनिरवगीर्यते श्रूयते चापि परितः। यत्र कुत्र

---

१। प्रयतां पवित्राम्। पवित्रः प्रयतः पूत इत्यमरः। २। निगमनिगमेषु—नगरनगरेषु। पूः स्त्री पुरीनगर्यौ च पत्तनं पुटभेदनम्। स्थानीयं निगम इत्यमरः।

चित्कश्चिच्छुद्धिमशुद्धिं वाविगणय्योदरपूरणाय शुकरटनमिव वेदपाठी बाहुल्येनोपलभ्यते। प्रियब्राह्मि(१)! अस्मद्व्यलीकव्याख्यां त्वमेतस्मादेवावगच्छ। यदस्माकं चतुर्णां वेदानां निकेतनाय किञ्चिदपि स्थानं न समीक्ष्यते।

रस्वती—हा धिक्! हा धिक्!! किमेतादृशो दिष्टोऽभूदत्र भारते। सर्वासां विद्यानां कूपाराः(२) सम्पदामनूनकानामाधाराः प्रयता वेदाः, तेषामिह भारते त्वीदृशी दुर्गतिः। शोकः किल! रे भारत! त्वं स एव यत्र द्विजातीनां दारकाः स्वकीयायामलिपिष्ठायामेव दशायां कर्कशं ब्रह्मचर्यव्रतं संधार्य समस्तानामुन्नतीनां निलयभूतान्वेदान् पठितवन्तः। वेदानां विमलज्ञानेन स्वीयधर्मकर्माणि बुबुधिरे। पुनर्गार्हस्थ्यधर्मे पदं निदधुः। दैव! त्वया भारतस्य कीदृशीयं दुर्दशा विहिता!

स्मृतिः—महाराज्ञि! सरस्वति! भवद्दर्शनकाङ्क्षिणः पुराणेतिहासा दर्शनावसरं निरीक्षन्ते।

सरस्वती—शश्वच्छिश्वि(३)दानानेतान्सत्वरं प्रेषय।

( कृतर्षिवेषाः पुराणेतिहासाः समायन्ते )।

सरस्वती—( भारतमातरं लक्षयित्वा ) वीक्षस्व! पुराणेतिहासा अपि विमनस इव निर्वर्ण्यन्ते।

( ते च सरस्वतीसंनिकटमासाद्य सादरं विनीतास्तिष्ठन्ति )।

सरस्वती—पुराणेतिहासाः! कथयत युष्माकं सत्क्रिया सम्माननञ्च भवति भारते?। कालचक्रेण तु नोद्दारिता(४) यूयम्।

पुराणेतिहासाः—अस्मिन्ननेहसीह भारते या दशास्माकमस्ति तद्वर्णने मन्युर्भवति चेतसः। यत्रावमानिता वेदास्तत्र के वयं वराकाः। अस्मन्नामधेयेन समुद्विजन्ते भारतीया नवदेश्याः। पोतलीलाविलासा इत्याक्रुश्य दूरमयन्ते बिभ्यति चेक्षणादस्माकम्। एतादृशानि दुराचरणानि

१। ब्राह्मी सरस्वती। २। कूपारः समुद्रः। ३। शिश्विदानान् पुण्यकर्मणः।
४। नोद्दारिता नोत्पाटिताः।

चरन्ति यदनुशोचतां ग्लानिर्निरुणद्धि चेतो नः। सरस्वति ! क वयमस्माम वसन्तः सम्प्रति ?

सरस्वती—वेदपुराणेतिहासाः ! भारतीयानामपनेतुमहं यतिष्येऽज्ञाननिद्रां सुघोराम्। पश्यत ! मातेयं भारतीयानां कुसृतिमधीयामानन्ववायान्विलोक्य व्यलीकविदग्धा विनतानना मन्युविक्लवा विद्यते। सम्प्रति यावन्न भवेद्भारते सुधृतिस्तावद्यूयं ममोपकण्ठे प्रतिवसत। ( वेदपुराणप्रमुखाः सरस्वतीवचनमाकर्ण्य प्रसन्ना बभूवुः )।

सरस्वती—भारतेश्वरि ! वद तवादीनवमपहर्तुं किं यतामहे ? निर्वर्णय, तव प्रजाः निजनिखिलभूतिनिदानान् वेदपुराणप्रवेकान् कीदृशमवहेलयन्ति। इत्थमभिसरतां दुष्प्रसरणौ विलासालसितमनसां धर्मविमुखाणां सन्ततिनराणां प्रोन्नत्यै किमुपेयाम। मातः ! स्वार्थरतास्ते सन्ततयो निःशेषमपनीय परिकरं समीहन्ते श्रान्तं सुनिद्राम्।

भारतमाता—यदा कस्यचिद् दुर्भाग्यमायते तदा गतिर्वैयात्यं व्यतति। न च सदुपदेशास्तमयान्ति यथायथम्। तथा च स्वान्तमधर्ममालिङ्ग्य निखिलसुखमूलं धर्मकूलं विहाय पापशूलं समयते। सैव खलु गतिर्मम सुतनृणाम्। एतर्हि विनम्यात्मीयं ललाटं भवत्याश्चरणकुमुदेषु प्रार्थयेऽहमिदमेव यन्मम सन्ततिभ्योऽनुकम्पया सुधियं ददातु भवती। अत्ययं च मे दवयतु।

सरस्वती—शोकं मा कुरु। भारतेश्वरि ! विश्वासमादधत्स्व। तव क्लेशोऽवश्यं दूरंगामी। त्वामहमात्मना सममुपनयानि वैकुण्ठम्। तत्रोद्धर्तुं जगत्पितरमुपेन्द्रमभिप्रार्थयिष्ये।

भारतमाता—सरस्वति ! कृपया त्वरितमवलम्बय वैकुण्ठैकपदीम्।

सरस्वती—साधु भारतेश्वरि ! साधु। गन्तव्यं तरसा सुरावनिवर्त्म (भारतमाता सत्रा सरस्वती वैकुण्ठमुपगच्छति, ततश्च वेदपुराणेतिहासा गुणगानमीश्वरीयं कुर्वन्तोऽनुसरन्ति )।

## द्वितीयः परिच्छेदः

यत्र कान्तागिरो वेदा यत्र धर्मोऽर्थसाधनम् ।
यत्र स्वप्रतिभा मानं तस्मै श्रीकलये नमः ॥ १४ ॥

विविधरत्नजटितस्वर्णरचितरेखाऽमलवल्लिखचितसर्पतिर्यग्गतिस्तम्भभूषाविभूषितायामतिरुचिरच्छविगुणयुतायामेकस्यां सभायां नैकविधविचित्रचित्रचित्रितपट्टनिर्मितसुमण्डपतले हेममये रत्नव्यूहविबद्धोचितस्थानविशेषे महितमहार्घरत्नप्रसुप्तपञ्चा(१)स्याकारदन्तपादे (२)स्थानीयस्थिते मिहिर(३)किरणप्रतापाद् द्विगुणितप्रचरिष्णुतेजसि सिंहासने नृपतिसहस्रवन्दितचरणसारसरजाः स्वीयलीलाकुलीकृतसकलविश्वः कलिराजो विराजते सार्वभौमः। कलिमहाराजस्य वामपार्श्वेऽर्धाङ्गिनी राजमहिषी मदिरादेवी मनोरमामेकां लोहिनिकां शाटीं परिदधानालङ्कुरुते निजासनं सहस्रपत्रमृदुलम् । दक्षिणे कुमतिभार्यया सपत्नीको दुर्व्यसनदेवः समेजते । सम्मुखेऽधर्माभिधेयः सामन्तराजोऽपि भ्राजते । राजसमज्याया उभयपार्श्वयोर्विच्छन्दकेषु च्छलकपटलोभमोहतृष्णाक्रोधहिंसादम्भनिरुद्योगितादारिद्र्यातथ्याशौचानाचारकुत्सादुराशापस्वार्थप्रमुखा मुख्यमुख्याः सदस्याः स्वस्वपरिवारान्विताः समासज्य समायान्ति । कलिदेवं वन्दमानाः स्वकीयं यथाभिमतमवतिष्ठन्ते शुभासनम् । अथ राजसंसत्परिषद्भिः(६) परिपूर्णा नमितनानानाकगन्धर्वसर्वाप्सरः सुप(७)र्वगर्भलेखर्षभसुधर्मा(८)गर्वा राजभियाऽनुत्पन्नकलकला वर्तन्ते । प्रसन्नतया विकसितास्य(१)सारसस्तिष्यदेवः कदाचिन्निजान्ववायपुरोधसा

१। पद्मास्यः सिंह। २। स्थानीयं सभा। ३। मिहिरः सूर्यः। ४। सहस्रपत्रं कमलम्। ५। समज्या सभा। ६। परिषदः सदस्याः। ७। सुपर्वाणो देवाः। ८। सुधर्मा देवसभा। १। सारसं कमलम्।

मदिरादेव्या वा कदाचिद्वार्तालापं विधत्ते, कदाचन स्मयते हसति च कदाचित्। किञ्च, आत्मनः सार्वभौमं समीक्ष्य राज्यं प्रफुल्लोऽपि न क्षमते निगोपयितुं हर्षोद्गाढमात्राम्। राजसदसि सदस्यसंघट्टश्चित्रां शोभां व्यनक्ति। वाद्यानि वाद्यन्ते। चित्तोत्कर्षकराणि पराणि स्वान्त(१)हराणि गीतानि गीयन्ते। सकृद्दिष्वग्भवं दुन्दुभिनिनादं निशम्याशेषायां संसदि जोष(२)म्भावो नितान्तविसर्पी समागमत्। राजनिर्देशाश्रवो धर्मसचिव उत्तिष्ठति क्रियामारब्धुं सूचयति च।

अधर्मः—प्रियसदस्याः! दिनमद्यतनमस्माकमस्ति महतः सौभाग्यमहसः। कुतोऽद्यैवास्मत्कुला(३)थर्वणः श्रीदुर्व्यसनदेवस्त्रैलोक्यविजयप्रबोधकं जितसपत्नरत्नाहृतागणितमणिप्रवरखचितदेदीप्यमानभास्व(४)दखिलचक्षुविचक्षादकं मुकुटं शिरोमणिमशेषामरनराणां कलिसम्राजं परिधापयिष्यति। तिष्यदेवश्चाद्य सार्वभौमसम्राडिति महतीं पदवीं प्रतिपत्स्यते। इत्थमाख्यायाधर्मसामन्तः स्वस्थानमधितष्ठौ। शिष्टिममूमाकर्ण्य तत्सदो हर्षनादेन करतलध्वनिना च जुगुञ्जे। श्रीदुर्व्यसनदेव उत्थायोक्तपूर्वं मुकुटं परिधापयति पुष्कलां न्यक्कृतचन्द्रिकां चन्द्रिकामेकां मदिरादेवीं परिधाप्याशिषमवादीत्। सद्योमन्दिरे महोत्सवेन प्रभयते।

अवादि वाद्यैरतिघोषमेतज्जयो भवेदस्य युगेश्वरस्य।
प्रजाजनाश्चापि सुशान्तिमाहुर्जेयं नियन्तुश्च यमादिकानाम् ॥१५॥

( साम्प्रतमेव दुन्दुभिः पुनश्चुकूजाधर्मामात्यश्चोत्तस्थौ।

अधर्मः—प्रियसभ्यमहोदयाः! अद्य श्रीमान् सकलगुणनिधानं कृपापारावारः (५)कृत्स्नदुरितापहारः कलिदेव आत्मीयमुकुटक्षण(६) प्रसादे यथायोग्यं सेनानीभ्यो भटेभ्यश्च—यैः साम्राज्यस्थापने स्वयोग्यतायाः

१। स्वान्तं मनः। २। जोषम्भावो मौनता। ३। आथर्वणः पुरोहितः। ४। भास्वान् सूर्यः। ५। कृत्स्नं संपूर्णम्। ६। क्षण उत्सवः।

परिचयः प्रदत्तः—यथायथमभिरास्यति प्राभृतम्। ( सचिववचनमाकर्ण्य सभा हर्षारवैरगुञ्जीत् )।

अथ दत्तदृष्टिषु सदस्यविसरेषु(१) तिष्यदेव उदस्थात्। पूर्वमसौ मणिमौक्तिकविशालां वज्रमालां(२) स्वकुलपुरोधसे परिधार्य बहुमूल्यमाभूषणं कुमतिदेव्यै गुरुपत्न्यायुपहारं विहापयामास। सदः समन्ततो जयतु देवो दुर्व्यसनः कुमतिर्देवी जयतुतराम् इति तुमुलजयघोषैः प्रतिदध्वान। एवमाचार्यदेवं प्रपूज्योपदेष्टुं प्रचक्रमे कलिदेवः।

कलिदेवः—प्रियभ्रातृवर्ग। बहुदिष्टे(३)नोद्युञ्जानाः स्विकां महतीमाशावल्लीमासिञ्चमाना इदं भद्रमहो अहो महाकाठिन्येनाप्तवन्तो वयम्। प्रियसभ्यसमुदयाः! वयं पूर्वकालिकीर्विपत्तीः कियन्तमवधि यावद्वर्णयामो या ह्यस्माभिः कृतयुगाद् द्वापरं यावद् भुक्ताः। परञ्च द्वापरान्ते दृढसन्धे(४) भीष्मे धर्मधुरन्धरे युधिष्ठिरे योगीश्वरे कृष्णचन्द्रे—एतेषु सत्सु यः स्थानाय नासीद्धिष्ण्यं(५) क्वचित्। अतिकर्कशे काले तस्मिन् मामकीनैश्छलकपटपरार्ध्यैः पृतनापतिभिर्निःशेषेण कुमतिदेव्या च स्वप्रभावेण दुर्योधनो धराधिपोऽधिकृतः। अञ्जसाऽशेषं भारतं युगपत्कलहस(६)मीकेऽभूत्प्रलग्नम्। अमुष्मिंस्तुमुलाहवाहव(७)नीये भारतीयमहात्मधर्मात्मगुणिवरवीरवारा(८) राजन्यकानि वाडव्यानि(९) च साम्नाय्यत्वेन(१०) हुतानि। परञ्च सति यतीश्वरेऽतिनागरे नयसागरे दामोदरे पाण्डवगृह्येऽधर्मिणो मायाविनो दुर्योधनस्य पराजयो जयश्चाभूद्भीमाग्रजन्मनः। साम्प्रतं कृतप्रयत्नो योद्धृवर्योऽप्यधर्मो यादवेशश्रीकृष्णचन्द्रस्य धर्मराजस्य युधिष्ठिरस्य च पुरतोऽरतो बभूव स्थातुमपि। ईदृशि निष्ठुरे दिष्टे मम कुमतिदेव्या विधाय पार्ष्णिग्रहावात्मनोऽविस्रम्भगर्वौ प्रविष्टं कुले यादवानाम्। ऋषेर्दुर्वाससः शयनाग्निधनमैषी-

१। विसरेषु समूहेषु। २। वज्रमालां हीरकहारम्। ३। दिष्टेन समयेन। ४। संधा प्रतिज्ञा। ५। धिष्ण्यं स्थानम्। ६। समीके युद्धे। ७। आहवनीयम् यज्ञाग्निः। ८। वारः समूहः। ९। साम्नाय्यं हविः। १०। वाडव्यानि ब्राह्मणसमूहः।

त्कुलम्। गोविन्दो गोलोकमगमत्। धर्मधुरन्धराः पाण्डवास्तुहिनग्रावाणं शरण्यममन्यन्त। रणाङ्गणमरणामरविग्रहस्य जितमन्योरभिमन्योः सुतः प्रजानिवहैः शुभदृष्ट्या समीक्षितः परीक्षितः सिंहासनमशुशुभत्। तदा वयमेधिष्यमाणस्याऽऽत्मराष्ट्रस्याशां प्रपन्नाः। तथा चास्मद्भिया कातरीभूतोऽसहायो धर्मः सपक्षिणं कृष्णमाकारयामास। दुर्दैवाद्रथमारूढो वसुधापतिः परीक्षितः समीक्षितवानध्वस्थितं माम्। तेनाऽस्मत्पीडितोऽमेयमीडितो धर्मो व्यालोकि, तस्करमिव तिरस्कृत्य मां बद्ध्वा(१)ऽन्दुकेन निनायाऽऽत्मनिकेतनम्। ततोऽभूवमगतिको भूयः। स तु पूर्वमदृष्टो दिष्टो भयावहः किंविध आसीत्।

प्रियसुहृद्गणाः! तदाऽभ्यमित्रीणैर्युधि प्रवीणैश्छलकपटाग्रैश्चः सहानुवर्त्तिभिः क्ष्माभृतश्चरणावाश्रित्य क्षमामयात्वे। अथ क्षमाशीलोऽक्षमो वीक्षितुं करुणां क्षमापतिः शरण्यः शरणमुपगतं मां निध्याय(२) मदीयच्छलकपटप्राग्रहरान्(३) योद्धृवर्गानपरिचित्य निर्भीकं विधाय स्वराष्ट्रान्निर्यातुमाज्ञापयत्। तदा निर्लज्जतामाश्रित्य निर्वाहयोग्यं निकेतमयाचे। स तु मम दैन्यमालक्ष्य दयालुः सन् निर्णीतविषयेषु(४) वासाय मामदिक्षत्। अथ चाहं प्राप्तावसरस्तङ्क(५)न्नात्मविजयव्यतिकरं प्रत्यैक्षिषि। एकदा मृगरमण(६)मत्तः पिपासाकुलोऽचलाधिपः परीक्षितः सलिलस्पृहया शमीकस्य मुनेराश्रमं प्राविशत्। तत्र साधितसमाधेर्मुनिपुङ्गवस्याऽऽज्ञावसरं निरीक्षमाणो बभ्रामेतस्ततः। मुनिरपि समाधिसंस्थः कथमेतद्वेत्तु यदत्र कश्चित्तिष्ठति मानवः, अतस्तथैव तस्थौ। तदाहमपि समयमनुकूलं संप्रधार्य सेनापतिष्वग्रगण्यं धरण्यामविश्वासं रसाशासकस्य मानसमवासयम्। योऽवनिपतिर्निपतितवंशगर्वो विनीतः सन् सदा मुनिगणचरणयुगलं वन्दमान आसीत्स चातिक्रान्तो ममाविश्वासेन महात्मानं शमीकं सर्वलिङ्गिनं(७) समवधार्य सनीडस्थमेकं

---

१। अन्दुकं शृङ्खला। २। निध्याय दृष्ट्वा। ३। प्राग्रहरान् प्रभृतीन्। ४। विषयेषु देशेषु। ५. कृच्छ्रेण जीवन्। ६। मृगरमणमाखेटकम्। ७। पाखण्डम्।

मृतं विलेशयं समादाय परीक्षितु गलदेशे परिधापयामास। स्वयञ्च तृष्णारुणितनयनः शुष्कतालुदन्तच्छदः पुनरासमाद स्वकीयं प्रासादम्। स्ववयस्यसख्यचारिभिश्चरन्मुनिसूनुर्ऋष्यशृङ्गोऽवालोकयदपमितं पितरमित्थं केनचिदिति क्रुधा लुब्धचित्तोऽकरणिं तस्मिन्नवाकिरत्। पर्याप्तमवेत! ततः समेधमानं दमयद्धर्मादिकं मामकं साम्राज्यमिदानीं निःशेषायां भारतवसुन्धरायामाप्यायत। प्रियभ्रातृवर्गाः! मदीयैर्यैः सेनानायकैरात्मप्रबलपराक्रमैः समग्रे भारते मम राज्यस्य श्रीर्विहिता तेभ्यः ससत्क्रियं हर्षसहितं धन्यवादं ददामः। (करतालध्वनिः)। प्रियसदस्याः! यथाऽस्माभिः स्वकस्वच्छायथाऽऽच्छादितानि भारतनरमानसानि कलङ्काङ्कितमुद्रया, मम देव्या मदिरया रयादत्तकृत्यथाऽनयाऽपि तथैव नीवृदयमात्मरसिकीकृतः। (हर्षनादः) अस्मद्वंशसन्तताराधितवैशद्यशीलप्रतीक्ष्यवरेण्येन श्रीदुर्व्यसनदेवेन स्ववशीकृतसकललोकमत्या कुमत्या चास्माकीनस्य सौराज्यस्यानारतमुन्नतिरनायि। अतोऽयमाचार्यशिरोमणीत्युपाधिना संप्रयोज्यः। (करतालध्वनिः)। इत्थमात्मनो वाचोयुक्तिं परिसमाप्य कलिराजो न्यषीदन्निजसिंहासनम्। प्रजाजनाः सप्रमदमुपायनं प्राभृषत। महोत्सवेन सहायमभूत्समाप्तोऽद्यतनः सभारम्भः। कलिराज उत्थाय सह मदिरादेव्या स्वकं प्रासादमायात्। सभास्तारा अपि प्रसन्नचन्द्रबिम्बकान्तिवक्त्राः स्वं स्वं पस्त्यं प्रतस्थिरे।

---

## मेघनादवधम्।

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदशर्मा ]

अस्तङ्गतो दिनमणिर्गोधूलः समुपस्थितः।
सन्ध्या-भाल-तटे लग्नः शुक्रो रत्नमिवाबभौ ॥ १ ॥
कुमुदिनी समुत्फुल्ला नलिनी बद्धलोचना।
युगपद्धर्षशोकाभ्यां तयोर्लोका दशाविदः ॥ २ ॥

प्रतीच्यां याति सूर्योऽस्तं प्राच्यां विधुरुदेति च ।
तेजसी वा समं ह्रासवृद्धी शिक्षयतो जनान् ॥ ३ ॥
हर्षितव्यं न सम्पत्तौ नावसत्तव्यमापदि ।
सुखदुःखं नरो भुङ्क्ते चक्रनेमिक्रमागतम् ॥ ४ ॥ ( युग्मम् )
नीडं निविशते पक्षी कूजित्वा मधुरं सुखी ।
गावः शब्दायमानाश्च धावन्ति गोष्ठमन्दिरम् ॥ ५ ॥
निशीथिनी प्रादुरास शशिनोडुसीमन्तिनी ।
ववौ सुगन्धपवनः सलीलं परितो वदन् ॥ ६ ॥
मधुस्वरं मृदु मृदु विलासीव सुखोचितः ।
स्पृष्ट्वा स कानि पुष्पाणि किं किं धनमवाप्तवान् ॥ ७ ॥ (युग्मम् )
स्वागतं निद्रया देव्या मातृक्रोडे शिशुर्यथा ।
यस्याः पादे सर्वसत्त्वं लेभे विश्रामसम्पदम् ॥ ८ ॥
स्वर्णपीठं समध्यास्त सुधर्मायां स्वरीश्वरः ।
सार्द्धं पुलोमनन्दिन्या समलङ्कृतवामया ॥ ९ ॥
मूर्ध्नि तस्य छत्ररत्नमकिरद्द्युतिमण्डलम् ।
किङ्करी वीजयामास व्यजनं रत्नमण्डितम् ॥ १० ॥
मधुगन्धं वहन् वायुर्नन्दनस्य ववौ सुखम् ।
ननाद परितो दिक्षु वादित्रममरक्षितिम् ॥ ११ ॥
षड् रागा मूर्त्तिमन्तश्च रागिणीभिः समं तदा ।
षट्त्रिंशता जगुर्गीतं सुरलोकमनोहरम् ॥ १२ ॥
रम्भोर्वशीमुखाः स्वर्गाङ्गनास्तत्र ह्यनर्त्तिषुः ।
शिञ्जितेन हरन्त्यस्ता मनः सर्वसुपर्वणाम् ॥ १३ ॥
ददुः सुधारसं दिव्यं गन्धर्वा हैमभाजने ।
केचित् कस्तूरिकामन्ये कुङ्कुमं हरिचन्दनम् ॥ १४ ॥
मन्दारदामकर्पूरमानैषुरपरेऽपि च ।
चतुर्विधं दैवमन्नं रत्नपात्रससज्जितम् ॥ १५ ॥ ( युग्मम् )

प्रासादे वैजयन्ताख्ये सुखितं वासवं तदा ।
देववृन्दैरमभाणं रक्षःश्रीरिन्दिरा गता ॥ १६ ॥
ससम्भ्रमं समुत्थाय शिरसा नतमौलिना ।
प्रणनाम पदाम्भोजे श्रियाः शचीहृदीश्वरः ॥ १७ ॥
तं प्रशस्यारविन्दाक्षी गृहीत्वा हैममासनम् ।
नलिनाक्षहृदम्भोजवासिन्याह सहस्मितम् ॥ १८ ॥
आकर्णय महाभाग सुरमण्डलनायक ।
केनाद्य ते सभां प्राप्ता स्ववधानपुरःसरम् ॥ १९ ॥
इन्द्रः प्रत्याह भो देवि रत्नाकरप्रियात्मजे ।
लिप्सन्ते भुवि सर्वे ते प्रसादं चरणाब्जयोः ॥ २० ॥
यस्मिंस्तव कृपापाङ्गः पतेत्तस्य ध्रुवं शुभम् ।
केन पुण्येन दासस्तेऽलब्ध कृपासुखं वद ॥ २१ ॥
रमा देवी पुनः प्राह वसामि बहुकालतः ।
लङ्कायां चित्ररत्नेन रक्षोराजसमर्चिता ॥ २२ ॥
एभिर्दिनैर्विधिर्वामो हन्त तस्य कुकर्मभिः ।
नष्टं पापेन सकुलं नाहं तं त्यक्तुमुत्सहे ॥ २३ ॥
आजीवनं गृहे तस्य वत्स्यामि भक्तियन्त्रिता ।
किं निष्कामति देवेन्द्र वन्द्यनिर्मुक्तबन्धना ॥ २४ ॥
इन्द्रजित्तनयस्तस्य सम्यक् तं वेत्सि वृत्रहन् ।
एकः स एव लङ्कायामास्ते वीराः परे हताः ॥ २५ ॥
सैनापत्ये वृतः स श्वो वीरविक्रमकेशरी ।
क्रमिष्यति रघुश्रेष्ठं तेजस्तेजसि शाम्यति ॥ २६ ॥
विचिन्तय कथं रामं सर्वदेवातिवल्लभम् ।
त्रायेथाः समरे घोरे मेघनादाग्रनायके ॥ २७ ॥
पूर्णे निकुम्भिलायज्ञ आरप्स्यते यदेन्द्रजित् ।
तुमुलं संयुगं तत्र रामो विपदमाप्स्यति ॥ २८ ॥

मन्दोदर्य्याः सुतोऽजय्यो भुवि त्रिदशनायक ।
क्रव्याद्वंशतिलकस्तार्क्ष्य इव खगान्वये ॥ २९ ॥
एवमुक्त्वा रमा देवी तूष्णीमास विषादतः ।
वीणेव मधुरं हृत्वा चित्तं रागादिझङ्कृतैः ॥ ३० ॥
रागाद्यस्तदा तस्या वाणीं श्रुत्वा निजक्रियाः ।
विसस्मरुर्मधौ कुञ्जे पिकध्वनेरिवाण्डजाः ॥ ३१ ॥
स्वरीश्वरः प्रत्युवाच मातः कस्त्रास्यते पुनः ।
विपत्तौ राघवं विश्वरक्षकं माधवं विना ॥ ३१ ॥
बिभेम्यहं ततो युद्धे रावणे रणदुर्मदात् ।
अधिकं पन्नगरिपोर्नागेभ्योऽपि विभीषणात् ॥ ३३ ॥
चूर्णं वृत्रासुरशिरा दम्भोलिरिव कुण्ठितः ।
नाम्ना तेन बली वीर इन्द्रजित् प्रथितः क्षितौ ॥ ३४ ॥
स हि सर्वजयी सर्वपावनप्रसादतः ।
आज्ञां देहि किङ्कराय यामि कैलाससद्मने ॥ ३५ ॥
देवराज द्रुतं गच्छ प्रोवाच श्रीर्हरिप्रिया ।
वार्त्तामेतां प्रयच्छास्मै बालेन्दुभालभिक्षवे ॥ ३६ ॥
रोरुद्यते सती पृथ्वी पापभारनिपीडिता ।
क्लान्तत्वाद् भुजगेन्द्रस्य कम्पते सा मुहुर्मुहुः ॥ ३७ ॥
समूलघातमहते तस्मिन् पृथ्वी रसातलम् ।
ध्रुवं याता मयि परं खिद्यति स त्रिलोचनः ॥ ३८ ॥
हित्वा वैकुण्ठभवनं सास्ते लङ्कापुरे चिरम् ।
अत्यर्थं भावयन्त्यास्त्वं न कुतः स्मरसि प्रभो ॥ ३९ ॥
पृच्छ भूयो जटाजूटधारिणं तं महेश्वरम् ।
निर्वासयेत्तनुजां कस्तातो जामातृवेश्मनः ॥ ४० ॥
त्र्यम्बकं न लभेथाश्चेदम्बिकायाः पदाम्बुजे ।
निवेदयेरिदं सर्वं यदुक्तं दुःखकारणम् ॥ ४१ ॥

सर्वमेतत् समुच्चार्य सुधांशुवदना रमा ।
विसृष्टा देवराजेन गमनाय मतिं दधे ॥ ४२ ॥
अनम्बरपथेनाथ सुकेशी विष्णुवल्लभा ।
अधो ययौ सुवर्णस्य प्रतिमेव जलाशये ॥ ४३ ॥
आनिन्येमातली रथं शचीमाह शचीपतिः ।
गच्छ देवि मया सार्द्धं वायुः ससुरभिः प्रियः ॥ ४४ ॥
आकर्णय वरारोहे गुणैः कमलसम्भवैः ।
मृणालं सुषमां धत्ते तथाऽहं तव सङ्गतः ॥ ४५ ॥
प्रेष्ठस्य वाचमाकर्ण्य हसित्वा वरवर्णिनी ।
प्रेम्णा पतिभुजं धृत्वारूढा रथवरं सुखम् ॥ ४६ ॥
उपतस्थे रथः स्वर्गहेमद्वारि हिरण्मयः ।
वायुवेगोऽप्रतिहतः शोभितसर्वदिङ्मुखः ॥ ४७ ॥
अमुच्यत प्रतीहारः सत्वरं मधुरारवम् ।
देवयानं तदैवाशु निर्माय गगने बभौ ॥ ४८ ॥
उदयाचलमारूढं मत्वा देवं दिवाकरम् ।
जजागार सचकितं जगत् स्थास्नु चरिष्णु च ॥ ४९ ॥
कलिङ्गश्चापरे पक्षिगणाश्चक्रू रुतं कलम् ।
निकुञ्जभवनं पूर्णं प्रभातगीतसुस्वनैः ॥ ५० ॥
कौतुकागारमुत्सृज्य पुष्पतल्पात् कुलाङ्गना ।
लज्जाशीला स्वकार्याणि कर्त्तुं समुपचक्रमे ॥ ५१ ॥
मानसाभ्याससंशोभी तत्र कैलासपर्वतः ।
यत्र शैवगृहं रेजे बर्हापीडमुकुन्दवत् ॥ ५२ ॥
सुश्यामाङ्गोऽचलस्तत्र हैमपुष्पाणि सुन्दरः ।
दधते सुषमां पूर्णां कृष्णस्य पीतवाससः ॥ ५३ ॥
निर्झरक्षरितैः शैलस्तत्र तत्राच्छवारिभिः ।
सम्यक् प्रतीयते नूनं श्वेतचन्दनचर्च्चितः ॥ ५४ ॥

स्वरीश्वरो रथात् पद्भ्यां स्वरीश्वर्या समं सुखम् ।
आनन्दभवनं शम्भोः शाश्वतं सम्प्रविष्टवान् ॥ ५५ ॥
तत्र हैमासने दुर्गा राजराजेश्वरी स्थिता ।
राजच्छत्रं जयाऽधार्षीद् विजयाऽवीजयच्च ताम् ॥ ५६ ॥
वैभवं भवगेहस्य कविवाचामगोचरम् ।
तत् सर्वं मनसा पश्य भावुकात्ममनीषया ॥ ५७ ॥
इन्द्राण्या सह देवेशः पूजयामास भक्तितः ।
महादेव्याः पदाम्भोजे सर्वाभीष्टवरप्रदे ॥ ५८ ॥
उदीर्याशिषमत्यर्थं प्रत्युवाचाम्बिका च तौ ।
ब्रूतं प्राक् कुशलं केन प्राप्नुतं वा मदन्तिकम् ॥ ५९ ॥
कृताञ्जलिः समारेभे वक्तुं वज्रप्रहारकः ।
किं न जानासि सर्वज्ञे मातस्त्वं जगतीतले ॥ ६० ॥
देवद्रोही भीतलङ्काधीश्वरस्तनयं पुनः ।
मेघनादं वृणाति स्म सैनापत्ये महामृधे ॥ ६१ ॥
स्वाभीष्टदेवमिष्ट्वा स लब्ध्वा चेष्टं वरं ततः ।
रणं प्रवेक्ष्यति प्रातः श्वः कुमारः परन्तपः ॥ ६२ ॥
पराक्रमस्तस्य देवि नाज्ञानगोचरस्तव ।
भृत्यं वार्त्तामिमां स्वर्गे राक्षसश्रीरवेदयत् ॥ ६३ ॥
हरिप्रियाऽवदत् पृथ्वी भारं सहितुमक्षमा ।
रोरुद्यते तथाऽनन्तः क्लान्तस्तस्या विधारणे ॥ ६४ ॥
सा चापि चञ्चला साक्षात् सन्ततं त्यक्तुमानसा ।
स्वर्णलङ्कामदित्सत्ते निवेदयितुमीदृशम् ॥ ६५ ॥
सत्यं रघुकुलापीडो देवानामतिवल्लभः ।
युध्येत कः पुनर्युद्धे मेघनादेन नाकिनाम् ॥ ६६ ॥
नाम्नेन्द्रजिद् भुवि ख्यातो राक्षसः समरे जयी ।
प्रथितं कुलिशं चक्रे कुण्ठिताश्मि महाबलम् ॥ ६७ ॥

विचिन्तय जगद्धात्रि कथं स त्रास्यते रणे ।
त्वत्प्रसादं विना पृथ्वीमरामां स विधास्यति ॥ ६८ ॥
प्रत्यभ्यधाच्छिवा शैवसत्तमो रावणः स हि ।
पिनाकिप्रियपात्रस्य तस्य हानिः कथं नु मत् ॥ ६९ ॥
साम्प्रतं तापसेन्द्रः स तपस्याहितमानसः ।
अतो लङ्का समाधत्ते देवेन्द्र दुर्दशामिमाम् ॥ ७० ॥
बद्धाञ्जलिः पुनः प्राह वासवः स निशाचरः ।
धर्मभ्रष्टः सुरद्रोही विचारय नगात्मजे ॥ ७१ ॥
दीनवित्तापहर्त्ता यस्तस्मिन् दया तवोचिता ।
कच्चिद् विविच्यतां मातः सृष्टिस्थितिलयेश्वरि ॥ ७२ ॥
सुशीलो राघवः पितृसत्यव्रतपरायणः ।
विहाय राज्यमैश्वर्यं भिक्षुवेशी वनागतः ॥ ७३ ॥
अमूल्यं रत्नमेकं स यत्नाद्रक्षितवांश्चिरम् ।
अहो दुष्टोऽहरन्मायाजालं विस्तीर्य तद्वनम् ॥ ७४ ॥
तत्स्मृतेर्दह्यते चित्तं कोपाश्रयभुजा भृशम् ।
शूलिनो वरदृप्तः स तृणाय मन्यते सुरान् ॥ ७५ ॥
स्पृहयत्यन्यदारेभ्यो गृध्नुश्चान्यधनानि सः ।
पामरेऽस्मिन् कथं धत्से करुणां करुणामयि ॥ ७६ ॥
इत्युक्त्वा जोषमासिष्ट सुरेशः प्राह तत्प्रिया ।
वीणाविनिन्दि मधुरं सुस्वरं हृदयङ्गमम् ॥ ७७ ॥
चित्तं कस्य न दूयेत वैदेह्या दुःखदर्शनात् ।
रोदित्यहर्निशं कुञ्जेऽशोकस्य सा सुदुःखिता ॥ ७८ ॥
आबद्धा पिञ्जरे पक्षिण्याक्रन्दति यथानिशम् ।
शोकार्त्ता सा तथा सीता सहते मर्मवेदनाम् ॥ ७९ ॥
एतत्ते चरणाब्जानां मातरविदितं न हि ।
त्वां विना दण्डयेत् कस्तं पाषण्डं राक्षसाधमम् ॥ ८० ॥

व्यापाद्येन्द्रजितं देहि रामाय जनकात्मजाम् ।
कलङ्कं मुञ्च किङ्कर्याः शशाङ्काङ्कितभालके ॥ ८१ ॥
पराभवति देवेन्द्रं युद्धे पामरराक्षसः ।
श्रुत्वेदं हृदयं मातर्विलज्जते भृशं मम ॥८२॥
सस्मितं प्राह शर्वाणी प्रत्यादिष्टवराङ्गने ।
द्वेष्टीन्द्रो रावणं त्वञ्च व्यग्रेन्द्रजिद्विनाशने ॥ ८३ ॥
युवां मामनुरुन्धाथे स्वर्णलङ्काऽचिरत्तये ।
न शक्ताऽहं यतो लङ्का विरूपाक्षसुरक्षिता ॥ ८४ ॥
तमृते भालबालेन्दुं नालं पूरयितुं तव ।
धासनां योगमग्नोऽसौ देवराज वृषध्वजः ॥ ८५ ॥
नाम्ना योगासने शृङ्गे भीमे घनघनावृते ।
योगेश्वरेश्वरस्तत्र विविक्ते स तपस्यति ॥ ८६ ॥
यत्रोत्पतितुमीशो न पक्षीन्द्रो गरुडोऽपि त्र ।
तत्र त्वं तत् कथं ब्रूहि गमिष्यसि स्वर्गेश्वर ॥ ८७ ॥
प्रत्युवाच सविनयमादित्यगणनायकः ।
त्वां विना शक्तिदे कस्य शक्तिरेतुं तमस्तीह ॥ ८८ ॥
जननि सदयमाशु ध्वंसयारीन् क्षपाटा-
नुपचिनु महिमानं धर्मतत्त्वस्य कामम् ।
लघु कुरु वसुधाया भारमारक्ष ताञ्च
स्थिरय भुजगभूपं रक्ष रामं विपक्षम् ॥ ८९ ॥

इति श्रीमेघनादवधे महाकाव्ये षष्ठसर्गे देवेन्द्रकृतं श्रीदुर्गास्तोत्रम् ।

---

# रसमञ्जरी

**कालिदासस्य वङ्गीयत्वम्**—सहृदयाः कालिदासस्य वङ्गीयत्वसाधनाय कियद्वा न विचेष्टितं विपश्चिद्भिर्वङ्गीयैः। अस्माभिः पुनरिदानीं लब्धा तथाविधसामग्री यया किल विनैव नवद्वीपयात्रायासम् अन्तरेण च कष्टकल्पनाम्बुधौ निमज्जनम्, लीलयैव शक्यते साधयितुं कालिदासस्य वङ्गीयत्वम्। यच्च कैश्चित् पण्डितम्मन्यैरसत्यवादव्यसनिभिरुद्घोष्यते—प्राचीने किल भारते वर्षे कवित्वादिकं सर्वं ब्राह्मणेष्वेवायतते स्म, तस्याप्यतीव निःसारत्वमत एव स्फुटीभवति। उपलभ्यते किल श्रीधरदासनामधेयवङ्गीयविद्वत्प्रवरविरचिते सदुक्तिकर्णामृताख्यसुभाषितसंग्रहे कालिदासनन्दिप्रणीता नव श्लोकाः, ये विस्पष्टमेवावबोधयन्ति कालिदासस्य वङ्गीयत्वं च शूद्रत्वं च। सुप्रसिद्धे किल नन्दिवंशे समुद्भूतः काशीमवाजाराधिपतेः सगोत्रः किलायमासीत् कविप्रवरः। आशास्यते नचिरादेव काशीमवाजाराधिपेन कालिदासस्य स्मरणचिह्नस्थापनाय यतिष्यत इति।

इदानीं पूर्वोक्ताः श्लोकाः समुपह्रियन्ते प्रियपाठकमहाभागेभ्यः।

### विश्रब्धनवोढा

१। अपि भुजलतोत्क्षेपादस्याः कृतं परिरम्भणं
प्रियसहचरीक्रीडालापे श्रुता अपि सूक्तयः।
नवपरिणयव्रीडावत्या मुखोन्नतियत्नतोऽ-
प्यलसवलिता तिर्यग्दृष्टिः करोति महोत्सवम्॥ १॥१॥२।

### गर्भिणी

२। आविर्भूतविपाण्डुरच्छवि मुखं क्षामा कपोलस्थली
स्वव्यापारपरिश्लथे च नयनेऽनुत्साहमुग्धं वपुः।

श्यामीभूतमुखं पयोधरयुगं मध्यः स्वभारोज्झिता
जाताऽन्यैव मनोहराकृतिरहा गर्भोदये सुभ्रुवः ॥२॥१६॥१

३। हारिद्रमम्बरमुपान्तनिबद्धचक्र-
मेकं कुलस्थितिवशाद्दधती प्रियाऽसौ ।
तत्कालमङ्गलसमाचरणप्रयत्न-
श्यासिद्धकेलिरपि मङ्गलमातनोति ॥२॥१०॥२ ।

विरहिणीवचनम्

४। गच्छामि कुत्र विदधामि किमत्र कस्मि-
स्तिष्ठामि कः खलु ममात्र भवेदुपायः ।
कर्त्तव्यवस्तुनि न मे सखि निश्चयोऽस्ति
त्वां चेतसा परमनन्यगतिः स्मरामि ॥२॥२७॥६ ।

५। सखि मलयजं मुञ्च क्षारं क्षते किमिवार्प्यते
कुसुममशिवं कामस्यैतत् किलायुधमुच्यते ।
व्यजनपवनो मा भूच्छ्वासान् करोति ममाधिकान्
उपचितबले व्याधावस्मिन् मुधा भवति श्रमः ॥२॥२७॥४

वचनम्

६। तिर्यक्कयैव परपुष्टवधूरपास्तं
वीणाऽप्यमानुषगुणा गणना कुतोऽस्याः ।
वाचां न किञ्चिदनुकारि मृगायताक्ष्या
माधुर्यसीमनि सुधां पुनरालिखामि ॥२।७४।३ ॥

वाद्यम्

७। वक्षोजाभोगगुर्वीर्मुखरयति युगं कांस्ययोः काऽपि कान्ता
प्रेयोदत्तव्रणालीविधुरितमधरं वेणवे काऽपि दत्ते ।
काचित् कृत्वाऽङ्गभङ्गं प्रसृतमुदमिव स्निग्धमुग्धप्रणादं
वारं वारं कराभ्यां प्रहरति मुरजं गीतसंवादरम्यम् ।२०।११।६।४

श्रृङ्गारात्मकग्रीष्मः

८। एतस्मिन् घनचन्दनार्द्रवपुषो निद्राकषायेक्षणा
लीलालोलमृदूल्लसद्भुजलता व्याजृम्भमाणा मुहुः।
निर्गच्छन्ति शनैरहःपरिणतौ मन्दा लतामन्दिरात्
स्वेदाम्भःकणदन्तुरस्तनतटाभोगाः कुरङ्गीदृशः ॥२॥१५॥६॥३

न चायं त्रिभुवनप्रथितकीर्त्तेः कालिदासाद् भिन्न एव कश्चन कविपाश इति प्रलपितव्यम्, कालिदासकाव्ये सन्दृश्यमानानां गुणदोषाणामत्रापि सन्दर्शनात्। कविप्रजापतिं वर्जयित्वा को वाऽन्यो 'नयनेऽनुत्साहमुग्धम्' इत्यत्र वैयाकरणैः सशपथं निषिद्धमप्येकादेशं प्रादुर्भावयेत्। कालिदासस्य व्याकरणानुशासनेषु श्रद्धाभावः सुप्रथित एव। स्मरणस्य चित्तधर्मत्वस्य सर्वजनविदितत्वेऽपि यथा शाकुन्तलपद्ये [ ५।२ ] कालिदासेन 'तच्चेतसा स्मरति नूनमबोधपूर्वम्' इति प्रयुक्तम्। तथाऽत्रापि चतुर्थपद्ये 'त्वां चेतसा परमनन्यगतिः स्मरामि' इति दृश्यते। एवं भवभूतिना कालिदासलेखेभ्यो बहवः शब्दा अपहृता इति सुविदितमेवैतत् सहृदयानाम्। अत्रत्यात् पञ्चमात् पद्यात् 'क्षते क्षारम्' इति चोरितम्, प्रथमाच्च 'अलसवलितामि'ति। एवं कालिदासेन यथा—

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः।

इत्यत्र समाप्तपुनरात्तताख्यो दोषः स्वीकृतः अत्रापि द्वितीयश्लोके स एव दोषो दृष्टिपथमुपयाति! इत्थञ्च संक्षिप्तसारवृत्तिसंशोधकस्य जुमरनन्दिनः पूर्वपुरुषो नन्दिवंशसमुद्भूतो वङ्गीयो वैश्यः कालिदास इत्यत्र नास्ति संशयलेसाऽपीति शिवम्।

---

# वेदापौरुषेयत्ववादः*

[ निबन्धकः—श्रीविनोदविहारी मज्जुमदारः, एम्. ए ]

वेदाः पौरुषेया अपौरुषेया वा नित्या अनित्या वेत्ययं विचारो बहुप्राचीनकालादारभ्येदानीमपि पण्डितप्रकाण्डानां बहूनां विविधतर्कजालसमाकीर्णोऽस्माभिरुपलभ्यते। भारतीयानां दार्शनिकानामेतादृशीं विप्रतिपत्तिं सम्पश्यन्तः पाश्चात्यपण्डितवर्या अप्यत्र तर्कयुद्धे समवतीर्णाः। तेषां मतादिकन्तु विस्तरभिया समयसंक्षेपेण च नाधुनाऽस्माकं विशदं विविदिषितम्, केवलं सुधीभ्यः किञ्चिदुपहरणार्थं तस्य सारं समुद्धर्तुमत्र कियान् प्रयत्नः करिष्यते। सर्वेषां पण्डितानां मतं दूरमवस्थाप्य वेदानां स्वगतप्रमाणादिबलेन स्वाधीनचिन्तयोपर्युक्तवादस्य कः पक्षः समर्थितो भवेत् को वा पक्षो दूरं प्रक्षिप्तो भवेदित्ययं स्वतन्त्रविचारो बहुकालसव्यपेक्षः प्रभूतश्रमसाध्यश्चेति मन्यते। अतस्तस्य किञ्चिदुल्लेखं कृत्वैव साम्प्रतं वयं सन्तोषं लप्स्यामहे। भारतीया दर्शनकारा यद् युक्त्यादिकमस्यैकतरपक्षसंस्थापनायावतारयन्ति तदतीव मनोरमं विबुधचित्तविनोदकरञ्च, तदप्यत्र साकल्येनोपन्यस्तुमशक्यमिति संक्षेपतः किञ्चिद् विमृशामः।

नैयायिक-मीमांसक-वैयाकरणाः सांख्या वैदान्तिकाश्चात्र तर्कयुद्धे प्रधानरणमल्लाः। सर्वेषामेतेषां मीमांसकास्त्वतीव प्रसिद्धिं गताः। तत्राऽऽदौ तावत् पक्षत्रयबीजं संक्षेपत उपन्यस्यते। वेदा अनित्याः पौरुषेयाश्चेति नैयायिकाः। वेदा नित्या अपौरुषेयाश्चेति मीमांसकाः। वेदा अनित्या अपौरुषेयाश्चेति वैदान्तिकाः। इतस्तावत् कलहोद्यतयोर्नितरां विरुद्धमतावलम्बिनोर्नैयायिकमीमांसकयोर्वादिप्रतिवादिनोरन्तरा

---

* संस्कृतसाहित्यपरिषदो मासिकाधिवेशने वाचितोऽयं निबन्धः।

मध्यस्था इवेमे अन्तिमा इति सुधीभिर्द्रष्टव्यम्। तत्र न्यायमते नित्यसर्वज्ञेश्वरप्रणीतत्वेन वेदानां पौरुषेयत्वमनित्यत्वञ्च, परन्त्वपराहतप्रामाण्यम्; अनुमानमपि—वेदाः पौरुषेयाः, वाक्यत्वात्, कालिदासादिवाक्यवदिति। तदेतन्मतं पुरत उपन्यस्यैव भगवान् जैमिनिर्वेदापौरुषेयत्ववादं सिद्धान्तयितुं पूर्वपक्षं सूत्रयामास। तथा च सूत्रम्—

१। वेदांश्चैके सन्निकर्षं पुरुषाख्याः। (सू० १-१-२७)

एके वादिनः (नैयायिकवैशेषिकादयः) वेदस्य सन्निकर्षो रचयित्रा पुरुषेण साकं सम्बन्धोऽस्तीति मन्यन्ते। यथा रघुवंशादय इदानीन्तनास्तथा वेदा अपि। न तु वेदा अनादयः। अत एव वेदकर्तृत्वेन पुरुषा आख्यायन्ते। वैयासिकं भारतम्, वाल्मीकीयं रामायणमित्यत्र यथा कर्तृत्वेन व्यासादय आख्यायन्ते तथा काठकं कौथुमं कालापकं पैप्पलादं तैत्तिरीयमित्येवं तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वाद् वेदाः पौरुषेयाः।

ननु नित्यानामेव वेदानां सम्प्रदायप्रवर्त्तकत्वेन काठकादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूत्रयति—

२। अनित्यदर्शनाच्च। (सू १-१-२८)

वेदेषु तावत् "बबरः प्रावाहणिरकामयत" (तै० सं० ७।१।१०।२) "कुसुरुबिन्द औद्दालकिरकामयत" (तै० सं० ७।२।२।१) इति जननमरणवन्तः पुरुषा आख्यायन्ते। अत एतेषां पूर्वमभावादनित्या वेदाः। इत्येतावति पूर्वपक्षे प्राप्ते सिद्धान्तं सूत्रयति—

१। उक्तं तु शब्दपूर्वत्वम्। (सू० १-१-२९)

प्राचीनैरेव सूत्रैः कठादिपुरुषेभ्यो वेदस्य पूर्वत्वमुक्तम्। "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" (सू० १-१-५) इत्यस्मिन् सूत्रे सर्वेषां शब्दानां वेदानां तदर्थानां तदुभयसम्बन्धस्य च नित्यत्वं प्रतिज्ञाय उत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यां तदुपपादितम्। काठकादिसमाख्यायाः समाधानन्तु—न खलु कठादयो रचयितारः, परं तत्तच्छाखायाः प्रचार-

कारिणः। तदुक्तम्—"आख्या प्रवचनात्" ( सू० १-१-३० ), प्रवचनात् प्रकृष्टभाषणात् प्रचारात् कठादयः श्रूयन्ते।

बबराद्यनित्यदर्शनं तु यदुक्तं तस्य परिहारस्तु--

२। परं तु श्रुतिसामान्यमात्रम्। ( सू० १-१-३१ )

यत् परं बबरादिकमुक्तम्, तच्छब्दसामान्यमेव। बबरध्वनियुक्तः प्रवहणशीलो वायुरेवात्राभिधीयते, न तु कश्चिन्मनुष्यः। एतावतैव पूर्वोक्त-पूर्वपक्षे निराकृते वेदस्य कोऽपि कर्त्ता नास्तीत्यवधारिते तद्वैयर्थ्य-प्रदर्शनायान्यः कश्चित् प्रबलः पूर्वपक्ष आपतति।

ननु "वनस्पतयः सत्रमासत" "सर्पाः सत्रमासते"ति विमतानि खलु वेदवाक्यानि असम्भवदर्थप्रतिपादनपरत्वेन "जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणी"त्याद्युन्मत्तबालवाक्यसदृशत्वात् स्वेषां रचनाकर्त्तारं कमपि विप्रलम्भकं पुरुषमवश्यमेवार्हन्तीति स्थितं तावद् वेदस्य पौरुषेयत्वम्। अस्य च समाधानम्—

३। कृते वा विनियोगः स्यात् कर्मणः संबन्धात्। ( सू० १-१-३२ )

वेदस्यैवंविधपुरुषकृतत्वे "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादि-वाक्यं स्वर्गसाधनत्वेन विनियोजनाय नार्हति। अनर्हत्वमपि दोष एव यतो लौकिकवाक्यवदत्रापि स्वर्गसोमदीक्षणीयाद्यङ्गोपकारकरूपसाध्य-साधनेतिकर्त्तव्यतानां समत्वमुपलभ्यते। कथं वा वेदस्य केनचन पुरुषेण निर्मितत्वे ज्योतिष्टोमादिवाक्यस्य स्वर्गसाधनत्वे विनियोगः स्यात् पुरुषेण ज्योतिष्टोमः साधनं स्वर्गश्च तस्य साध्य इति सर्वथाऽपि ज्ञातुम् अशक्यत्वात्। वनस्पत्यादिसत्रवाक्यानामप्यचेतना वनस्पत्यादयः विद्यारहिताः सर्पादयोऽपि यागमनुष्ठितवन्तः किं पुनर्ब्राह्मणा इति यज-मानस्य तेषु हि कर्मसु चोदनामुद्दिश्य सत्रस्तुतिपरत्वेनार्थवादत्वादुन्मत्त-बालवाक्यसदृशत्वन्तु दूरमपास्तम्। तस्मान्नास्ति कुत्रापि वेदस्य पुरुष-प्रणीतत्वसन्देहावकाश इति सर्वं खलु भगवत्पादानां जैमिनीनां समञ्जसम्।

वेदपौरुषेयत्वं निगमयितुमनुमानमपि यन्नैयायिकः प्रयोजयति—वेदाः

पौरुषेयाः, वाक्यत्वात्, कालिदासादिवाक्यवदिति ; तन् स्मर्यमाणकर्त्तृकत्व-रूपशङ्कितोपाधेर्दुष्परिहरत्वेन व्यभिचारसत्त्वादसिद्धमेव। तत्रैतत् प्रतिसाधनमपि, वेदा अपौरुषेयाः स्मर्यमाणकर्त्तृकत्वादात्मवदिति। यतः स्वतन्त्रपुरुषप्रणीतो वेदश्चेत् तर्हि कर्त्तुरपि स्मरणं भारतादाविव स्यात्। तदुक्तं श्लोकवार्त्तिकव्याख्यायां न्यायरत्नाकराख्यायां "वेदानां हि कर्त्ता स्ववश्यं तत्कालभवैः पुरुषैः प्रत्यक्षेणानुभूयेत, तैश्चान्येभ्यः कथ्येत तैश्चान्येभ्य इत्येवं परम्परया नियतरूपमेव कर्त्तुर्मन्वादीनामिवाध्येतृभिः स्मरणं स्यात्, न तु तदस्ती"ति। अतो वेदस्य कोऽपि कर्त्ता नास्तीति स्थितम्। यच्च नैयायिकैर्वेदस्य नित्यसर्वज्ञेश्वरप्रणीतत्वमुक्तम्, तदपि सर्वज्ञत्वकल्पनायां युक्तिविरहेण तादृशेश्वरस्यास्तित्वाभावात् सर्वथैवासिद्धम्। सर्वज्ञनिराकरणञ्चेत्थम्—तादृशसर्वज्ञस्यापि स्वस्वभाव-प्रतिबद्धचक्षुरादीन्द्रियाणां स्वस्वविषयानतिक्रम्य अन्यस्मिन्न कदाऽपि प्रसरणमस्तीति न सर्वत्र सर्वज्ञस्यावकाशः। तदुक्तं कुमारिलभट्टपादैः—

यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता॥

इति। अतस्तत्कर्त्तृकवेदप्रणीतत्वापादनं शून्ये सौधरचनमिव निरर्थकमिति सुधीभिर्ज्ञेयम्।

अपि च किमिदं पौरुषेयत्वं नाम, तदपि विचारणीयम्। किं तावत् पुरुषादुत्पन्नत्वमात्रमथवा प्रमाणान्तरेणार्थमुपलभ्य तत्प्रकाशनाय रचितत्वम्। आद्ये इष्टापत्तिः, अध्यापकादिभिः शिष्यादिभिश्चाहरहर्वेदस्योच्चार्य-माणत्वेनास्य पुरुषोत्पत्तेः स्वीकृतावपि तत्र कस्यापि स्वातन्त्र्येण वेदवचन-रचनाभावान्नाङ्गीकृतं पौरुषेयत्वम्। द्वितीयोऽपि न प्रमाणसहः,असम्भवात्, नहि वेदमन्तरा वेदार्थज्ञानं सम्भवतीति स्वेतरनिखिलप्रमाणकलपस्य तत्र वेदार्थबोधने सामर्थ्याभावात् कुतोऽस्य तत्पूर्वकरचितत्वम्? एतावान् सिद्धः खलु जैमिनीयानां युक्तिसम्भारः।

यत्तु—पण्डितकुलकेशरिणा महामतिना धर्मराजाध्वरीन्द्रेण स्वकृत-

वेदान्तपरिभाषायां वेदान्तमतव्याख्यानवेलायां नैयायिकादिसम्मत-पौरुषेयत्वोक्तौ सिद्धसाधनरूपदोषमुद्भाव्य तन्निरस्य च वेदापौरुषेयत्व-तात्पर्यावधारणपूर्वकं गम्भीरं स्फुटतरं विचारणमवतारितम्, तत् खलु अतीवमनोज्ञत्वात् पण्डितानां चित्तविनोदकं मन्दधियाञ्च नितरां बुद्धिवैशद्यकरमित्यतोऽस्माभिरत्र यथापंक्त्येव सर्वमुद्ध्रियते।

"ननु क्षणिकत्वाभावेऽपि वियदादिप्रपञ्चवद् उत्पत्तिमत्त्वेन परमेश्वर-कर्तृकतया पौरुषेयत्वादपौरुषेयत्वं वेदानामिति तव सिद्धान्तो भज्येतेति चेत्, न; नहि तावत् पुरुषेणोच्चार्यमाणत्वं पौरुषेयत्वम्, गुरुमतेऽपि अध्यापकपरम्परया पौरुषेयत्वापत्तेः। नापि पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वम्, नैयायिकाभिमतपौरुषेयत्वानुमाने अस्मदादिना सिद्ध-साधनत्वापत्तेः, किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम्। तथाच सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान्, न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणान-पेक्षोच्चारणविषयत्वं वेदानाम्। भारतादीनान्तु सजातीयोच्चारणमन-पेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्"। एतेन सुष्ठु खलु वेदान्तपक्षो व्याख्यातः।

वेदान्तमते यद्यपि वेदाः परमार्थतोऽनित्याः (ब्रह्म एव नित्यं वस्तु, ततोऽन्यदखिलमनित्यमिति नित्यानित्यवस्तुविवेकनिरूपणे प्रपञ्चितत्वात्) तथाऽपि पूर्वोक्तापौरुषेयत्वमभिप्रेत्यैव भगवता बादरायणेन "अत एव च नित्यत्वमि"ति प्रथमाध्यायस्य तृतीयपादे नवमाधिकरणे (देवताधिकरणे) व्यवहारदशायां वेदानां नित्यत्वमुक्तम्। एतादृशं नित्यत्वं श्रुतिः स्मृतिश्चापि विवृणोति। तथाच श्रुतिः।

"वाचा विरूपनित्यया" (ऋ० सं ८।७५।६)

(क्रमशः)

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| April 1934. | १८५५ शकीये चैत्रे<br>१६श-वर्षस्य १२श-संख्या | Vol. XVI. No. 12. |


## वायुपरिवर्त्तनम्

### चतुर्थः परिच्छेदः

अथ गच्छता कालेन प्रतिदिनमेव समुन्नतिपथमुपारूढं हरिधनस्य स्वास्थ्यम्। क्रमेण च शीतो व्यतीतः समागतश्च वसन्तः।

साम्प्रतं पुनर्हरिधने भृशमपरक्तो भूपालमहोदयः। तस्य मञ्जूषातो रूप्याणि प्रायेण ह्रासमुपयन्ति स्म, स तु कथमपि न प्रबभूव धनर्णानां साम्यमापादयितुम्। हरिधनेनैव चोर्यन्ते रूप्यकाणि इति संशयस्तस्य मनसि पदं कृतवान्, परं न खलु तत्र कमपि साक्षिणमुपलेभे। हरिधनस्तावत् सावधानः संवृत्तः। यथा कोऽपि भृत्यो न पश्येत् तथा सप्ताहं कृत्वैवासौ प्रावर्ततापकर्मणि।

जामालपुरं तावदतिमात्रमेव सन्निहितं मुङ्गेरनगरस्य। बाष्पशकटे नगरयोरुभयोर्मध्ये एकमेव शकटविश्रान्तिस्थानं वर्तते। हरिधनस्य जामालपुरं गच्छत आगच्छतश्च कतिचिद्दिनानि संवृत्तानि। एकदा भूपालमहोदयेन पृष्टोऽसौ प्रत्युवाच, जामालपुरस्थकार्यालये किमपि कर्म

संग्रहीतुं प्रयस्यामीति। भूपालमहोदयो व्यचिन्तयत्, जामालपुरे चेदस्य कर्म स्यात्, सम्यक् स्यात्, व्यतिगच्छेन्न आपदिति।

रविवासरः। भूपालमहोदयो बहिर्द्वारप्रकोष्ठे समुपविष्टो वृत्तपत्रं वाचयति। सपदि च कश्चिद्वर्षीयान् भद्रमहोदयः समुपसृत्य तं नमश्चक्रे। भद्रमुखस्य तस्य दक्षिणे पाणौ छत्रम्, वामे च गात्रमार्जनीसमाच्छादितं वस्त्रम्।

भूपालमहोदयस्तावन्नैवालं बभूव संज्ञातुमागन्तुकम्। ततश्च पप्रच्छ, कुतस्तावदागम्यते भवता।

"इदानीमेव बाष्पीयशकटेन जामालपुरात् समागतोऽस्मि।"

"किन्नामधेयो भवान्?"

"मदीयं नाम श्रीरासविहारिमुखोपाध्यायः। जामालपुरे बाष्पीय-शकटनिर्माणशालायां कर्मकरोऽहम्।"

"उपविश्यताम्। केन मानसेन समुपागतो भवान्।"

"आर्य, गङ्गास्नानायागतोऽहम्। ततश्च मनस्यकरवम्, भवन्तं साक्षात्कृत्य गृहं प्रत्यावर्त्तयेति।"

"सम्यक्" इत्युक्त्वा भूपालमहोदयः प्रतीक्षाञ्चक्रे।

भद्रमहोदयो मुहूर्त्तमिव विचिन्त्योवाच, "कच्चित् हरिधनाख्यो वर्त्तते भवतो भ्राता?"

"वर्त्तते। ज्ञातिरेव।"

"हरिधनो हि प्रायश एव मदीयं गृहमुपगच्छति। कच्चित् उक्तवानसौ भवन्तम्?"

"नहि।"

वृद्धस्तु क्षणं तूष्णीं स्थित्वा प्रोवाच, मम तावत् काचिदनूढा कन्यकाऽस्ति। सा च त्रयोदशवर्षदेशीया। इदानीमपि नैव प्राभावि मया तस्या विवाहविधिं निर्वर्त्तयितुम्। प्रथमतस्तावद् विदितमेव भवतां कीदृशं दुष्करं कन्याविवाहानुष्ठानम्। तत्रापि न मे विद्यतेऽर्थबलम्। पञ्चाश-

न्मुद्राकल्यवर्तमेव लभ्यते वेतनरूपेण, तावतैव कथञ्चित् कायक्लेशेन संसार-यात्रा निर्वाह्यते। भवतोऽनुमतश्चेत् भवन्तं तत्र नीत्वा कन्यां प्रदर्शयेयम्। न खलु पित्रा वर्णनीयं गुणगौरवं दुहितुः, तथाऽपि न खलु तद्दर्शनेन समुद्विजेत भवतो मानसमित्यस्ति मे द्रढीयान् विश्वासः।

भूपालमहोदयः सविस्मयं प्रोवाच, मह्यं प्रदर्शयिष्यति भवान्? किमिति?

रासविहारिमहोदयः किञ्चिदिव प्रतिपत्तिमूढः प्रोवाच आर्य, भवतश्चेदनुमतं तर्हि हरिधनेन साकम्—

भूपालमहोदयस्त्वाक्षिप्यावोचत्, हरिधनेन साकं विवाहः। असम्भाव्यः।

वृद्धो विनयसूचकं स्मितं कृत्वोवाच हरिधनस्तावत् नैव सम्मतः स्याद् दारपरिग्रहे इत्येव मन्ये भवान् असम्भाव्यं मन्यते विवाहमिमम्? परं सर्वं तन्निर्णीतप्रायम्। गृहे तावन्मया श्रुतं मदीयां सरयूं दृष्ट्वा— किं बहुना न जानामि एतस्य भवतः सविधे शंसनं समीचीनमसमीचीनं वा—तेन किलोक्तम् गुरूणामसम्मत्याऽपि सन्नद्धोऽस्मि दारकर्मणि, तथाऽपि भवतोऽनुमतिं प्रार्थयितुं भवत्सविधमुपागतोऽस्मि। एतावन्तं कालं नैव सम्मत आसीद्धरिधनो दारकर्मणि, कति वा श्लाघनीयाः सम्बन्धा न प्रत्याख्याताः, इदानीं समुत्सुकमस्य मानसं विवाहे इति शृण्वन्तो नूनमतिमात्रं मोदेरन् भवन्तः। भवांस्तावन्महापुरुषः, अहञ्च कन्यादायग्रस्तः, न खलु भवान् प्रभविष्यति मम प्रणयभङ्गं विधातुमित्याशया भवन्तं प्रपन्नोऽस्मि।

एतच्छ्रुत्वा भूपालमहोदयस्तूष्णीं स्थितः। हरिधनस्याभिनवमिदं कौशलमवगम्य सन्दीप्त इवासौ क्रोधानलेन।

रासविहारिमहोदयोऽमन्यत, कदाचिदसौ मन्यते पात्रं वशीकृत्य पणेनास्मान् वञ्चयितुमीहते इति। अत एव विनयनम्रकण्ठोऽसाववदत्, काममहं दरिद्रः, तथाऽपि न खलु किमपि न दास्यामीति मन्तव्यम्।

एकैवेयं मदीया तनया, न खल्वपत्यान्तरं मे वर्त्तते। तनयामिमां पात्रसात् कृत्वा निर्वृतिं लप्स्ये। मम तावत् पित्र्यं किञ्चिद्रिक्थमासीत्। ग्रामस्थं गृहं बन्धकरूपेण न्यस्य ऋणमपि किञ्चिल्लप्स्ये। नानकेन पञ्चशती, सहस्ररूप्यकमूल्यानि भूषणजातानि, तद्व्यतिरिक्तं च पञ्चशतीसम्मितवराभरणदानसामग्रीप्रभृति, एवं संहत्य सहस्रद्वितयं मया कथमपि दातुं शक्यते। कथितं मया हरिधनाय। स खल्वत्रैव सम्मतः। काममिदमकिञ्चित्करं भवताम्। तथाऽपि भवतां गौरवं परिरक्षितुं का मे शक्तिः। त्रायतां तावद्दुर्गतं विप्रं विपदः इति प्रवया नम्रीभूय भूपालमहोदयस्य पादौ स्प्रष्टुं समुद्यतः।

"शान्तं शान्तम्" इत्युक्त्वा भूपालमहोदयो धृतवांस्तस्य हस्तौ। तं च समुपवेश्यापृच्छत्, अपि नाम सम्यग् अन्विष्टो भवता हरिधनवृत्तान्तः?

आर्य, भवतो भ्राता। किमत्रान्वेषणेन। न खलु मया किमप्यन्विष्टम्। परं गृहे निखिलमेव वृत्तान्तजातं कथितं मम सहधर्मिण्यै हरिधनेन।

सर्वमेव कथितम्? तस्य तावद्वर्त्तते एका पत्नी इत्यपि कथितम्?

एतच्छ्रुत्वा रासविहारिमहोदयश्चकित इव स्थितः। पत्नी वर्त्तते! किं ब्रवीति भवान् पत्नी वर्त्तत इति।

"आर्य अथ किम्।"

तेन तावदुक्तम्, विवाहो मे सञ्जात एव, परमुपरतायास्तस्याः पत्न्या वर्षद्वितयं व्यतीतम्। पुत्रादिकमपि किमपि नास्ति।

पुत्रादिकं किमपि नास्तीति सत्यम्। पत्नी पुनर्जाज्वल्यमाना तिष्ठति। काममं तस्या मरणमेव श्रेयोऽभविष्यत्, तावता तस्या निखिलं दुःखं व्यपागमिष्यत्।

एवं ननु?

अथ किम्।

अहो, न खलु मया विज्ञातमीदृशोऽयं वृत्तान्त इति। उक्तं खलु

तेन, "वर्षद्वितयात् पूर्वं लोकान्तरं प्रस्थिता मे पत्नी। तत आरभ्य मानसं मे समाक्रान्तं वैराग्येण। अत एव नैव परिगृहीतं पत्न्यन्तरम्। अनेकशश्च स्पृहणीयतमाः सम्बन्धाः प्रत्याख्याताः। व्यतीते च मार्गशीर्षे मासि उत्तरपल्लीतो मुखोपाध्यायान्वयात् सम्बन्धः कश्चन समुपागतः। तैस्तु नानकेनाभरणादिना च साकल्येन पञ्चविंशतिः सहस्राणि दातुमिष्टानि, तथाऽपि नैव मया कृतस्तत्र विवाहः इति।

भूपालमहोदयेनोक्तम्—भ्रान्तं सर्वमेवानृतम्।

वृद्धो दीर्घं निःश्वासं विमुच्यावदत्, अहो दृश्यतामस्य दौरात्म्यम्। न खलु मया सपत्नीसत्त्वे धनिकधुर्यायापि कन्या प्रदास्यते। मम तावत् पञ्च वा सप्त वा पुत्रा वा दुहितरो वा न सन्ति। सैवैका कन्यका; सा चेत् साधुचरित्रस्य दरिद्रस्य गृहे प्रतिपादिता प्रतिदिनं सकृदेव भुञ्जीत तदपि शोभनम्, तावताऽपि सुखेनैव वत्स्यति मे दुहिता। न खलु सम्पदां लोभेन सपत्नीसत्त्वे कन्या मया प्रदास्यते—यावत्तिष्ठन्ति मे प्राणास्तावत् कथमप्येवं न कुर्याम्।

अहो। आत्मानं महान्तं धनिकं व्यपदिष्टवान् भवतां पुरतः?

आर्य, अथ किम्। उक्तं खलु तेन भूसम्पद एव वार्षिको लाभो रूपकाणां षोडशसहस्रम्। अत्र तावत् वायुपरिवर्त्तनार्थमागतमेतेन, अस्य च तुच्छव्ययनिर्वाहार्थं कर्मकरैः प्रतिमासं संप्रेष्यते मुद्राणां शतद्वयम्। भृत्येन रूप्यकप्रेषणे विलम्बो विहित इति दिनकतिपयात् पूर्वं मत्तः पञ्चाशद् रूपकाणि तेन ऋणरूपेण गृहीतानि। अपि नाम सम्पद्वृत्तान्तोऽपि मिथ्यैव?

सर्वथा मिथ्या। सम्पत्सु च केवलं पञ्चाशद्विघासम्मिता ब्रह्मत्रा भूमिर्वर्तते, तस्याश्च कियांश्चन भागः भाटकाय प्रतिपादितः, शिष्टश्च कृष्यते, तावतैव कथञ्चिद्व्ययनिर्वाहो भवति ग्रासाच्छादनादेः।

तच्छ्रुत्वा विषादस्य नैराश्यस्य च परां कोटिमारूढोऽसौ भद्रमहोदयः। अवदच्च—तर्हि दरिद्रस्यास्य जनस्य पञ्चाशद्रूपका गता एवेति सम्भा-

वयामि। अहो! तस्मिन्नेव दिवसे वर्तनं लब्धमानीतानि च गृहे रूप्यकाणि, न खलु तानि पेटिकायामपि स्थापितानि। तानि च रूप्यकाण्यमुष्मै प्रदाय पूर्वसञ्चितार्थव्ययेन तण्डुलद्विदलादिकं क्रीतम्।

अवसरे चास्मिन् जिह्मसीमन्तशोभितशिराः कञ्चुकोपरिन्यस्तवैदेशिककोटः भूपालमहोदयस्य रौप्यमण्डितवेत्रयष्टिं करे कुर्वाणो दीर्घकच्छविभूषितः क्षुद्र इव सुरत्राणो हरिधनो निर्वर्त्य प्रातर्भ्रमणं प्रत्यावर्त्तमानोऽदृश्यत। कदाचिदसौ श्वशुरमहोदयमकाले समुपस्थितं संप्रेक्ष्य ततोऽपसर्तुमना आसीत्। परं भूपालमहोदयस्तमाह्वयत्।

तस्मिंश्च तत्राऽऽगत्य दण्डायमाने सति, भूपालमहोदयो गम्भीरमुवाच, अपि त्वमपरं विप्रलम्भस्य पात्रं नाधिगतोऽसि? ब्राह्मणस्यास्य सर्वनाशं साधयितुं समुद्यतोऽसि?

हरिधनोऽवदत्, किमिति किमिति? कथं सर्वनाशं साधयितुमिति?

कन्यकामेतस्य विप्रलम्भसाहाय्येन परिणेतुं प्रयतिष्ठा इति।

"काममहं परिणेतुं प्रयतितवान्, परं कुत्र मे विप्रलम्भः? अहं तावत् कुलीनसन्तानः, प्रभवामि दश दारान् परिग्रहीतुं यदि मे रोचेत। कथं न परिगृह्णीयाम्?"

"कामं प्रभवसि त्वं परिणेतुम्, परम् किं कथितवानस्यस्मै?"

"किं कथितवानहम्? अनेनैवोक्तम्, तात अहं तावद् दारिद्र्योपहतः, कन्यादायग्रस्तश्च। रक्ष तावन्मे जातिकुलम्। मयोक्तम्, भद्रमुख वर्तते तावन्मे पत्न्येका, कथमेतत् सम्भवेत्। अनेनोक्तम्, भवतु, का हानिः। एवमुक्त्वा भृशं निर्बबन्ध। अत एव गत्यन्तरमनुपलभ्य बलादनिच्छता मया प्रतिपन्नम्। कोऽत्र मे दोषः?"

भद्रमहोदयोऽसाववदत्, अङ्ग हरिधन, त्वयैतदेवोक्तम् आहोस्वित् पत्न्या मे उपरताया वर्षद्वयं व्यतीतमित्युक्तम्?

हरिधनस्तु क्रोधसंरक्तनयनः प्रोवाच, मिथ्या ब्रवीति भवानिति।

तच्छ्रुत्वा भद्रमहोदयः क्रन्दनोन्मुखः भूपालमहोदयस्योपरि विन्यस्य

दृष्टिं प्रोवाच, न खलु मया मिथ्योच्यते। कथं वा मिथ्या ब्रूयाम्! भवांश्चेत् कृपया सकृत् समागच्छति जामालपुरम् तर्हि पञ्चषैरेव निमेषैः कस्य वचनं सत्यं कस्य चानृतमिति प्रमापयितुं प्रभवेयम्।

हरिधनेनोक्तम्, भवदुक्तमामूलं मिथ्यैव इति।

भूपालमहोदयेन गर्जितम्, दुरात्मन्, शठ, तूष्णीमास्स। विप्रलम्भस्त्वया समाश्रितः, इदानीं निर्भिन्नं ते रहस्यम्। किमिति लज्जितव्ये भद्रजनस्यावमाननमाचरसि?

हरिधनस्तु भीतो रोदनोन्मुखः प्रोवाच, "किमिति किं मयाऽस्यावमाननं विहितम्। अनेनैव मिथ्यावादीत्यभिहितोऽस्मि। अहं तावत्—"

भूपालमहोदयः क्रोधेन कम्पमानोऽवदत्, पुनरपि भाषसे। जोषमास्स जाल्म। रे तेओयारि!

"किमाज्ञापयत्यार्यः" इत्युक्त्वा तदीयो दौवारिकस्तेओयारी तत्र समुपस्थितः।

भूपालमहोदयेनादिष्टम्, एतस्य शय्यापेटिकावस्त्रच्छत्रोपानहादिकं यत् किमपि वर्त्तते सर्वमत्रानय इति। अपरमपि भृत्यमाहूयोवाच भारिकद्वयमाहूयताम् इति।

कियतश्चित् कालादनन्तरं हरिधनस्य द्रव्यजातं तत्राऽऽनीतम्। भूपालमहोदयेनोक्तम्, पेटिकामुन्मोच्यैतस्य पञ्चाशद्रूप्यकान् प्रत्यर्पय।

हरिधनोऽवदत्, रूपकास्तु—इदानीं न सन्ति इति।

भूपालमहोदयः परुषकण्ठं प्रोवाच रूपकाणां किं वृत्तम्?

"आर्य, तानि रूप्यकाणि—तानि रूप्यकाणि व्ययितानि।"

"व्ययितानि? नहि नहि। उद्घाटय पेटिकां पश्यामि।"

तथाऽपि हरिधनो दोलायमानमतिरासीत्।

भूपालमहोदयोऽवदत्, कल्याणमिच्छसि चेच्छीघ्रं रूप्यकाणि पेटिकातो गृहीत्वा दीयन्ताम्। अन्यथा सपद्येव रक्षिकमाह्वास्यामि, दौरात्म्यं तु दूरीकरिष्यामि।

हरिधनो रुदन्नुद्घाटितवान् पेटिकाम् । रूप्यकाणि च गणयन्नुवाच, अस्य मुद्रैकाऽपि नावशिष्यते, सर्वैव व्ययिता । इमास्तु पूर्वत एवासन् मम, स्वदेशादानीताः ।" गणनायां प्रमादः सञ्जातः पुनरपि गणयित्वा रूप्यकाणि रासविहारिमहोदयस्य पादयोर्न्यस्तवान् ।

अत्रान्तरे भारिकावपि समागतौ । भूपालमहोदयोऽवदत्, रे भारिकौ, वस्तून्युत्तोलयतम् । ततश्च हरिधनाभिमुखो भूत्वोवाच, अस्मिन्नेव मुहूर्त्ते गृहान्मे दूरमपसर । न खलु पुनरपि ते मुखं द्रष्टुमिच्छामि ।

रासविहारिमहोदयो रूप्यकाणि कञ्चककोषे निक्षिप्योऽत्थायावोचत्, अहो किं कर्तुमुद्यतो भवान् । मुच्यतां कोपानुबन्धः । यत् किमप्ययमाचरतु, अयं भवदीयो भ्रातैव । अरे भारिकौ गच्छतं गच्छतं युवाम् । साधयाम्यहं भोः । नमो भवते ।

भूपालमहोदयो भारिकावुवाच, उत्तोलयतं वस्तूनि । किं तावत् पश्यथः । नेओयारि, त्वं तावदिमं निष्कास्य द्वारं पिधेहि । पुनरपि नायं प्रवेष्टव्यः । एवमुक्त्वाऽसावुत्थायान्तःपुरं प्राविशत् ।

गृहाद्विनिर्गत्य हरिधनः ष्टेषणाभिमुखं प्रतस्थे । कियन्तं चिन्मार्गमागत्यापश्यत् भद्रमहोदयोऽसौ पथि शिरीषवृक्षच्छायामाश्रित्य तिष्ठतीति ।

हरिधनस्तु दृष्टिपातमात्रमप्यकृत्वा गन्तुमुद्यत आसीत् । रासविहारिमहोदयोऽवदत्, भोस्तिष्ठ । श्रूयतां तावत् ।

हरिधनस्तत्रैवातिष्ठत् । भद्रमहोदयः सस्नेहकण्ठमपृच्छत्, कुत्रेदानीं गमिष्यसि ?

स्वदेशं गमिष्यामि ।

अपि शकटशुल्कं ते पार्श्वे वर्त्तते ?

न हि ।

तर्हि ?

पेटिकायां कञ्चुकमेकं प्रावरणञ्चैकं वर्तते । द्रक्ष्यामि यदि ष्टेषणे कस्मा अपि विक्रीय शुल्कं संग्रहीतुं प्रभवेयम् ।

भद्रमहोदयोऽसौ कञ्चुकशेषे पाणिं विन्यस्योवाच ।

अलमनेन व्यवसायेन । गृहाणेदम् । अनेन शुल्कपत्रं क्रीत्वा गम्यताम् । एवमुक्त्वा हरिधनस्य पाणौ पञ्च मुद्रा अर्पितवान् । ततश्च प्रसार्य छत्रं स्नानाय कष्टहारिणीतीर्थाभिमुखं शनैः शनैः प्रतस्थे ।

हरिधनः स्वदेशं सम्प्राप्य पल्लीष्वजल्पत्, मुङ्गेरेष्वार्यस्य भूपालस्य गृहे ख्रिस्तोचितस्य भावस्य तथा प्राबल्यं यथा हिन्दुसन्तानेन तत्र जातिधर्मः परिरक्षितुं नैव सुकरः । तेन हि सन्ध्ययोरुभयोरपि कुक्कुटमांसमद्यतेऽपराह्णे च लघुभोजनार्थमप्युपयुज्यते । तथाऽपि महतायासेन स्वहस्तदहनपूर्वकं भक्षयित्वा कथमपि जातिधर्मं परिरक्षितवान् । यदा तु प्रत्यक्षीकृतवानार्यस्य माहम्मदीयः सूदहतक आर्यस्य कृते गोमांसमुपक्रीयाऽऽनीतवान् तदाऽसह्यमिव मे संवृत्तम् । तदात्व एव भारिकमाहूय वस्तुजातं सर्वं संगृह्य निरगच्छम् । आर्येण खलु भूयो भूयो निबद्धम्, प्रातरवस्थाय निर्वर्त्य भोजनविधिं गन्तव्यम्, अन्ततो गत्वा किञ्चिन्मिष्टान्नं मुखे समर्प्य सलिलं निपीय गन्तव्यम् इति । मयोक्तम्, न हि । तिष्ठतु तावत् । न खलु सञ्जाता मे तृष्णेति । कामं तत्र शरीरं मेऽतिमात्रं स्वस्थं सञ्जायते स्म । इतोऽपि मासद्वयावस्थानेन सर्वथोल्लासतामुपगत्य प्रत्यावर्तितुं शक्नुयाम् । परं किं वा क्रियतां महात्मानः । न खलु धर्मात् प्राणा विशिष्यन्ते, अतोऽनिच्छतोऽप्यागमनम् आवश्यकीभूतम् ।

समाप्तम्

# वेदापौरुषेयत्ववादः

( पूर्वतोऽनवृत्तः )

"अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदः ।"
"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ।" इति ।
"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥"

इति स्मृतिश्च ।

उत्पत्तिमत्त्वेन वेदस्य न नित्यत्वम्, परन्तु दृष्टो ह्युत्पत्तिमत्स्वपि बहुकालावस्थानमात्रेण नित्यपदप्रयोगः। यथा—"आकाशवत् सर्वगतश्च नित्यः" इति युक्तं बहुकालावस्थायित्वान्नित्यत्वं वेदानाम्। एतत्तु "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इत्युक्तदिशा प्रलयकालपर्यन्तस्थायित्वाभिप्रायकम् ।

ननु उत्पन्नो गकार इत्यादिप्रत्ययो भवति लोके । स च वेदनित्यत्वपक्षे कथमुपपद्यते, वेदानां पदवाक्यत्वापन्नत्वरूपवर्णसमूहात्मकत्वादिति चेत्, उच्यते । अयन्तु प्रत्ययः प्रमाणत्वाप्रमाणत्वेनोभयथाऽपि व्याख्यातुं शक्यते । अप्रमाणत्वपक्षे प्रमाणं सोऽयं गकार इति प्रत्यभिज्ञा । प्रमाणत्वपक्षे तु सोपाधिकैव नित्यस्य ग-वर्णस्योत्पत्तिरित्यवधारणीयम् । वर्णाभिव्यक्तिजनकध्वनिगतोत्पत्तिनिरूपितपरम्परासम्बन्धविषयत्वेनैव गकार उत्पन्न इति प्रत्ययो भवति । एतत्तु भगवत्पादैः श्रीशङ्कराचार्यैः ब्रह्मसूत्रप्रथमाध्याये देवताधिकरणे "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्यामि"ति सूत्रस्य व्याख्यानावसरे सुष्ठु आलोचितम् । तत्रैव हि भाष्ये "नहि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात् । द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते नाऽऽकृतयः । आकृतिभिश्च

शब्दानां सम्बन्धो न व्यक्तिभिः, व्यक्तीनामानन्त्यात् सम्बन्धग्रहणानुपपत्तेरि"ति आकृतिनित्यत्ववाद आदृतः। अत एव गकाररूपव्यक्तेरुत्पत्तावपि गकारजातेर्नित्यतायां न काऽप्यनुपपत्तिः।

"अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेद" इत्यादिवाक्याद् वेदस्याऽऽपातत एव पौरुषेयत्वप्रतीतिः। सा तु पौरुषेयत्वविचारनिरूपण-वेलायां वेदान्तपरिभाषाकारैरेव परमेश्वरस्य पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकवेदवक्तृत्वकथनादेव निराकृतेति द्रष्टव्यम्।

ननु परिभाषाकाराणामेतन्निर्देशः स्वकपोलकल्पित एव, अतो न वयं श्रद्दध्महे, प्रामाण्याभावादिति चेत्? अत्राभिधीयते—अयमाक्षेपः प्रमाण-मूढानामेव, नायं वेदान्तविदां स्वकपोलकल्पितः, भवति चात्र प्रमाणं श्रुति-स्मृतीतिहासप्रसिद्धम्। तथाच मन्त्रवर्णः,—

"यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन्नृषिषु प्रविष्टाम्"। याज्ञिका यज्ञानुष्ठानेन वेदलाभाय योग्यतां प्राप्य ऋषिषु प्रविष्टां पूर्वतः स्थितामेव वाचं ( वेदमित्यर्थः ) न त्वाकस्मिकीमजानन्निति।

महाभारते शान्तिपर्वणि वैयासिकवचनञ्च—

"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥"

तथाच शिक्षायामपि—

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥"

इति स्वरादिमात्रेणाप्यन्यथाभावं वेदस्य न सहते श्रुतिः। अत एव सर्वथाऽपि कल्पान्तरीयवेदस्यानुऽऽपूर्वी एतत्कल्पीयानुपूर्वीतोऽभिन्नेति वेदोत्पत्तौ पुरुषोच्चारणमात्रनिमित्तकप्रयत्नसत्त्वेऽपि वस्तुगत्या पुरुष-स्वातन्त्र्याभावात्तत्र तदवच्छेदकत्वेनैव च पौरुषेयत्वस्य वक्तुं युक्तत्वात् सर्वथैव वेदस्य पौरुषेयत्वासम्भवः। एतच्च दार्शनिकगुरुपादैर्वाचस्पति-मिश्रैरपि शास्त्रयोनित्वाधिकरणे भामतीव्याख्यायां विस्तृतमालोचितम्।

तदपि विचारगाम्भीर्येण प्रमाणप्राबल्यमावहदेतत्पक्षं द्रढयति। तत् सर्वमुपरिष्टादुपनिबध्यते।

"येऽपि तावद् वर्णानां नित्यत्वमास्थिषत, तैरपि पदवाक्यादीनामनित्यत्वमभ्युपेतव्यम्। आनुपूर्वीभेदवन्तो हि वर्णाः पदम्। पदानि चानुपूर्वीभेदवन्ति वाक्यम्। व्यक्तिधर्मश्चानुऽऽपूर्वी, न वर्णधर्मः। वर्णानां नित्यानां विभूनाञ्च कालतो देशतो वा पौर्वापर्यायोगात्। व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या? पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता। तस्मान्नृत्यानुकरणवत् पदाद्यनुकरणम्। यथा हि यादृशं गात्रचलनादिकं नर्त्तकः करोति, तादृशमेव शिक्ष्यमाणा अनुकरोति नर्त्तकी, न तु तदेव व्यनक्ति, एवं यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता, तादृशीमेवानुकरोति माणवकः, न तु तामेवोच्चारयति, आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात्। तस्मान्नित्यानित्यवर्णवादिनां न लौकिकवैदिकपदवाक्यादिपौरुषेयत्वे विवादः, केवलं वेदवाक्येषु पुरुषस्वातन्त्र्यास्वातन्त्र्ययोर्विप्रतिपत्तिः। यथाहुः—

'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता।'

तत्र सृष्टिप्रलयमनिच्छन्तो जैमिनीया वेदाध्ययनं प्रति अस्मादृशगुरुशिष्यपरम्परामविच्छिन्नामनादिमाचक्षते। वैयासिकन्तु मतमनुवर्त्तमानाः श्रुतिस्मृतीतिहासादिसिद्धसृष्टिप्रलयानुसारेण अनाद्यविद्योपाधानलब्ध-सर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यम्, पूर्वपूर्वसर्गानुसारेण तादृशानुपूर्वीविरचनात्। तथाहि यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्त्ता अपि न सर्गान्तरे विपरीयन्ते। न हि जातु कचित् सर्गे ब्रह्महत्या अर्थहेतुरनर्थहेतुश्चाश्वमेधो भवति, अग्निर्वा क्लेदयति, अपो वा दहन्ति, तद्वत्। यथाऽत्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुः, अन्यथा तदेव वाग्वज्रतयाऽनर्थहेतुः, एवं सर्गान्तरेष्वपीति, तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्व-

पूर्वसर्गानुसारेण वेदान् विरचयन् न स्वतन्त्रः। पुरुषस्वातन्त्र्यमात्रञ्चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि। तच्चास्माकमपि समानमन्यत्राभिनिवेशात्।"

सिद्धमेतावति विप्रकृष्टे पौरुषेयत्वापौरुषेयत्ववादस्य तात्पर्यम्। वेदनित्यत्वेऽसंमतौ मीमांसकपक्षः तदपौरुषेयत्वसंमतौ च नैयायिकपक्षो यद्यपि पर्युदस्येते वेदान्तवादिभिस्तथाऽपि वेदस्य प्रावाहिकनित्यत्वाभ्युपगमात् कथमपि स्वमतसिद्धौ तुष्टैर्मीमांसकैस्ते गाढमालिङ्ग्यन्ते। नैयायिकस्तु एकाकी नितरां विषीदन्नुपान्ते निषीदति। तत्साहाय्यार्थञ्चातः परं सांख्या रणभूमिमवतरन्ति। प्रथमं तावत् शब्दस्य तस्यार्थस्य तदुभयसम्बन्धस्य चौत्पत्तिकत्वं यज्जैमिनिनोक्तं तन्न तादृशं समाद्रियन्ते। "स तपोऽतप्यत तस्मात्तपस्तेपानात् त्रयो वेदा अजायन्त"इत्यादिश्रुतिवाक्यानि प्रमाणत्वेन पुरस्कृत्य वेदस्य नित्यत्वञ्च तैः पराहतम्। तदुक्तं कपिलेन "न नित्यत्वं वेदानां कार्यत्वश्रुतेः" (सांख्यदर्शनम्—सू० ५।४५)। वेदनित्यतावाक्यानि च यान्युपलभ्यन्ते तानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपरत्वेन व्याख्येयानीति सांख्या वदन्ति। भवतु तावत्, यत एभ्यो वेदनित्यतावादो मीमांसकेभ्य इव न रोचते, ततः कथञ्चिदस्माकं मनोरथसिद्धिः, स्थाने खलु नितान्तनिःसहायानां नः परमो लाभ इति समाश्वस्ता इव नैयायिका उल्लसन्ति। परन्तु, अत्रान्तरे सांख्या ईश्वराभिधेयस्य कस्यचित् पुरुषस्य प्रमाणत्वावच्छेदेनास्तित्वाभावात्, मुक्तामुक्तयोरपि अन्ययोः कयोश्चन यथासंख्यं वीतरागत्वासर्वज्ञत्वात्, सर्वथैवैतादृक्पौरुषेयत्वस्वीकारे स्वमतहानिप्रसङ्ग इति खलु महतीं विपदं गणयन्ति। तदुक्तं पुनः कपिलेन—"न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात्", "न मुक्तामुक्तयोरयोग्यत्वात्" (सांख्यदर्शनम्—सू० ५।४६-४७)। आदिपुरुषोच्चरितत्वे वा पौरुषेयत्वं स्यादित्याशङ्क्यागत्या वेदानामपौरुषेयत्वमनादेर्महतो भूतान्निःश्वसितमिव पुरुषप्रज्ञानाधीनचेष्टाविरहत्वेनोपपद्यते इति वेदान्तपक्षस्यैव वचो-

भङ्ग्या तैरत्र समाधानं क्रियते। एतत् सर्वं दृष्ट्वा तु नैयायिकाः पुनः परं विषादमापन्ना अचिरमेव समूलच्छिन्नजयाशा रणभूमिमवतस्थिरे।

अत्रान्तरे वैयाकरणाः—फणिभाष्यकारास्तु प्रश्नस्यास्य समाधानं वेदगतवर्णानुपूर्वीणां तदर्थानाञ्च विवेचनपुरःसरं कुर्वन्ति। 'अर्थो नित्यः, वर्णानुपूर्वी अनित्ये'ति स्फुटनिर्देशात् वेदनित्यत्वं तद्गतार्थमभिप्रेत्यैव न तु तस्य वर्णानुपूर्वीमपि। वर्णानुपूर्वीणां नित्यत्वे काठकं कालापकं मौदकं पैप्पलादमिति विभिन्ना वेदशाखा न सुष्ठूपपद्यन्ते। अनित्यत्वे तु तत्र काऽप्यसङ्गतिर्नोपलभ्यते। शब्दार्थयोरौत्पत्तिकत्ववादिनान्तु मीमांसकानामेतत् सर्वथैवासङ्गतम्। पतञ्जलिस्तावत् कथमेकस्यैव वेदस्य पूर्वोक्तानेकशाखाभेदः सर्वोऽपि बहुमतस्तन्नित्यवर्णानुपूर्वीमत्ते सम्भवतीति यथापूर्वं चोदयति। महाभाष्यकारैः वेदस्य विविधशाखाभिन्नत्वं युगान्ते मन्वन्तरादौ च जीवद्भिरेव ऋषिभिः स्वस्वस्मृत्यनुसारेण विरचननिमित्तकं मन्यते इति तद्व्याख्यातारः कैयटनागोजीभट्टाद्यो वर्णयन्ति। महाभाष्यवाक्यं तु—

"ननु चोक्तं नहि च्छन्दांसि क्रियन्ते नित्यानि छन्दांसीति। यद्यप्यर्थो नित्यः, या त्वसौ वर्णानुपूर्वी साऽनित्या। तद्भेदाच्चैतद् भवति काठकं कालापकं मौदकं पैप्पलादकमिति।"

नागेशोऽपि स्वरचितटीकायामावृत्तिं करोति—

"प्रतिमन्वन्तरं चैषा श्रुतिरन्याऽभिधीयते।" अपि च "धाता यथापूर्वमकल्पय"दिति ऋग्वचनं स्वमतसाधकत्वेनैवोपयोजयति। एतन्मतानुसारेण हि प्रतिकल्पं वेदा भिन्नास्तेषां भिन्नत्वं हि रचयितृबुद्धिभेदात् सम्भवति। परन्तु एतादृग्भेदवन्तोऽपि वेदा अर्थतो नित्या एवं कदाऽपि कल्पान्ते तदर्थस्य विपर्ययासम्भवात्। एक एवाभिन्नार्थवान् वेदः पूर्वस्मिन् सर्गे पितापितामहादिपरम्पराक्रमेण यथाप्राप्तं स्वप्रज्ञानुसारेण कठाद्यृषिभिः कल्पान्ते तथैव विरचित इति सिद्धं तत्तच्छाखाकर्तृकत्वेन काठकादिसमाख्यानम्।

अत्रेदं तावद्दार्शनिकानां परस्परविसंवादबीजं चिन्त्यम्, ये खलु वादिनः "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" ( बृ० ३।४।१० ) इति बृहदारण्यकश्रुतिवचनान्निःश्वसितोक्तेरनायासाबुद्धिपूर्वकत्वरूपार्थद्वयात्मिकाया अप्यबुद्धिपूर्वकत्वस्य प्रकृते निरर्थकत्वादनायासमात्रे तात्पर्यं मन्यमाना दृष्टादृष्टस्थूलसूक्ष्ममूर्त्तामूर्त्तचेतनाचेतननिखिलार्थावभासकस्य वेदस्याचिन्त्यशक्तिरेव परमेश्वरः स्वतन्त्रः कर्त्तेति वदन्ति, तेषां मते वेदस्य पौरुषेयत्वम्। यैश्चानैरेतस्याः श्रुतेरनायासमात्रे अबुद्धिपुरःसरत्वे चोभयथाऽपि तात्पर्यं मन्यते तेषां मते वेदस्यापौरुषेयत्वमिति सर्वं सुष्ठुपपन्नम्।

आधुनिककाले तु पाश्चात्यानां मध्ये शर्मण्यदेशीयाध्यापकप्रवरेण भट्टमोक्षमूलराभिधेयेन प्राच्यविद्याविशारदेन स्वकीयवेदान्तविषयिभाषणेषु ( Three Lectures on the Vedānta Philosophoy ) अस्माकं वाङ्मयः ज्ञानरूपो वेदः प्रतीच्यालेक्जन्द्रीयपण्डितगोष्ठीनां ( Alexandrian School of the West ) पारमेश्वरोक्तेः ( Divine Logos—*as represented by the Hellenized Jew Philo* ) तुल्यत्वेन निर्दिष्टः। अपरोऽपि पाश्चात्यविद्वद्वर्यो जन्मूर्नामाभिधेयः स्वरचित-"मौलिकसंस्कृतसाहित्येषु" ( Original Sanskrit Texts—Part, II 1st Ed. ) उत्तरभारतवर्षीयभाषाविषयकालोचनप्रसङ्गे वेदविषयकं विविधमालोचनं कृतवान्। तत्र च तेन ऋग्यजुःसामाथर्ववेदानां परस्परतुलनया तद्रचनानामुत्तरत्वाधरत्वमृषिप्रणीतत्वञ्चोक्तम्। ऋषयश्च तत्तत्कालप्रचलितलौकिककक्ष्यामवलम्ब्यैव वेदान् विरचयामासुरिति। यद्यप्यृग्वेदे ऋषीणां चोदयितृत्वेनेन्द्राग्निवाग्देवतानामुपपत्तिः कथमपि स्यात्, तथाऽपि ते पुराणाः कवयस्तत्तत्सूक्तानि स्वकीयमानससृष्टानीति प्रायशो भाषन्ते। अस्य च अन्यथात्वमसम्भवम्। ऋषय एव तद्रचनाकर्त्तार इत्यर्थः। ( पूर्वोक्तग्रन्थस्य २२१ पृष्ठं द्रष्टव्यम् )। "धियं ध्यानेन निष्पन्नां स्तुतिमतक्षमकार्षम्", "अथा सोमस्य प्रयती युवभ्या-

मिन्द्राग्नी स्तोमं जनयामि नव्यम्" इत्याद्यृग्वचनमुदाहरतस्तस्य वेदस्य स्वातन्त्र्येण ऋषिप्रणीतत्वस्थापनं स्फुटमभिप्रेतम्। श्रुतिषु तावत् परस्परं विवदमानं वाक्यं तद्रचनावैचित्र्यञ्च सर्वेषामेव तेषां मोक्षमूलरादिपाश्चात्त्य-पण्डितानां मनसि कमपि विस्मयं नोत्पादयति, यतस्तत्र सर्वत्रैव ते क्रमविकाशमानैतिहासिकदशाविशेषाणामस्तित्वं प्रमाणीकृत्य कथञ्चित् सामञ्जस्यं विदधानास्तृप्तिं भजन्ते। तैश्च प्रायेण सर्वैर्वेदानामतीव प्राचीनत्वस्वीकारेऽपि तत्पौरुषेयत्वमेव खलूक्तम्। वेदनित्यत्ववादेऽपि तेषां सम्यगेव समादराभाव इत्यपि तत्रैव स्फुटम्।

एतद्देशीयानां मध्येऽपि स्वर्गलोकप्रस्थितेन महामहोपाध्यायादि-विरुदाङ्कितेन मुम्बयीयन्त्रालयप्रकाशितग्वेदसम्पादकेन परमश्रद्धेयेन राजारामशास्त्रिपादेन एतद्विषयस्य मौलिकगवेषणापूर्णमालोचनं कृतम्। इदानीन्तु वेदा नित्या अपौरुषेयाश्चेत्यस्माकं दर्शनकाराणां मतं पूर्वोक्त-युक्त्या यथार्थं न प्रतिभाति। तत्र वेदेष्वेव तेन तेन तस्य तस्य पुत्रेण वा ते निर्मिता इति बहुषु स्थलेषु दृश्यते। इन्द्रवरुणसोमादित्यादयो यद्यपि ऋषीणां चोदयितारस्तथापि तेषां कर्तृत्वासम्भवो न भवति। वस्तुतो वेदगतपर्यालोचनया तद्गतवाक्यादिपरीक्षणेन च कोऽपि पक्षो निर्णेतुं न शक्यते कुत्रचिद् वाङ् नित्या क्वचिच्च देवैर्दिव्या वाङ् निर्मिता ; क्वचिद् वेदो महापुरुषप्रभवः ; क्वचिद् वा 'देवत्तः' ( देवैर्दत्तः, यथा—ब्रह्म देवत्तं गायते'त्यत्र ), क्वचिच्च वेदा देवैर्निर्मिता ऋषिभिश्च दृष्टा इति बहुशो विवदमानानि वाक्यानि वेदेष्वेवोपलभ्यन्ते। अतो वेदनित्यतावादः प्राचीनस्तस्य दिव्योत्पत्तिश्चापि तथैवेति मन्यामहे। ततश्च दृष्टादृष्टस्थूल-सूक्ष्ममूर्त्तामूर्त्तचेतनाचेतननिखिलार्थावभासकस्य वेदस्यालौकिकदृष्टि-सम्पन्नत्रिकालज्ञर्षिप्रणीतत्वेनातिपौरुषेयत्वम्, तादृशर्षीणामतिपुरुषत्वात्, अस्मादृशसाधारणविवेकसम्पन्नपुरुषाणाञ्च वेदरचनासम्भवादेषामपौरुषेय-त्वमित्युक्तिरेव सिद्धान्तं मत्वाऽस्माभिर्विरमितुं युज्यत इत्यलं विस्तरेण।

---

वररुचिविरचिता

# लिङ्गवृत्तिः

ॐ स्वस्ति । श्रीगणेशाय नमः ।

लिङ्गं[1] जिज्ञासुनाचार्यः पृष्टः शिष्येण केनचित् ।
इदं वररुचिस्तस्मै प्रोवाच हितकाम्यया ॥१॥

## यावान् कश्चित् त्रान्तः शब्दस्तु नपुंसके बोद्धव्यः ।

यावान् इति परिमाणवाची शब्दः । कश्चिदित्यनिर्दिष्टनामधेयः । त्र अन्ते यस्य स त्रान्तः । शब्द्यन्ते अनेनार्था इति शब्दः, व्युत्पाद्य इत्यर्थः । स च शब्दश्चतुर्विधः ।* जातिशब्दो गुणशब्दः क्रियाशब्दो यदृच्छाशब्दश्च । तत्र जातिशब्दः—गौरश्वः पुरुषो हस्ती शकुनिर्ब्राह्मण इत्यादिः । गुणशब्दः नीलः शुक्लो हरित इत्यादिः । क्रियाशब्दः—पचति पठति गच्छतीत्यादिः । यदृच्छाशब्दः—डित्थ आलवञ्जः वालवञ्जः । इत्यादिः ॥ स त्रान्तशब्दो नपुंसके बोद्धव्यः । तुशब्दोऽवधारणे । नपुंसकमिति (?) । तद्यथा— इदं शास्त्रम् । इदं पवित्रम् । श्रोत्रम् । गोत्रम् । चित्रम् । मात्रम् सूत्रम् । नेत्रम् । पात्रम् । पोत्रम् । नक्षत्रमित्यादि ।

---

१ हरतु हरस्तव दुरितं कनकरजःपुञ्जपिञ्जरे शिरसि ।
घोराहुतिरिव हुतभुजि निपतति भागीरथी यस्य ॥
श्लोकोऽयं फ्राङ्कमहोदयेन प्रथमश्लोकरूपेण समुद्रितः । अस्मत्पुस्तके पुनर्नोपलभ्यते ।

* द्रव्यक्रियाजातिगुणभेदात्ते च चतुर्विधाः ।
यदृच्छाशब्दमप्यन्ये डित्थादिं प्रतिजानते ॥ भामह० ६।२१
तथाच महाभाष्यम्—चतुष्टयी शब्दानां प्रवृत्तिः। "जातिशब्दाः क्रियाशब्दा गुणशब्दा यदृच्छाशब्दाश्चतुर्थाः ।" यथाक्रममुदाहरणानि—गौः शुक्लश्चलो डित्थः ।

यद्येवं तर्हि सर्वेषामेव त्रान्तानां नपुंसकता स्यादित्याशङ्क्याऽऽह—अन्यत्र हीत्यादि।

## अन्यत्र हि वृत्रामित्रपुत्रमन्त्रेभ्य आम्नायात् ॥१॥

कथमेतज् ज्ञायत इत्यत आह—आम्नायात्। आम्नाय आचार्यक्रमपाठः, पूर्वाचार्योपदेशः। के आचार्याः? हरिहरहिरण्यगर्भादयस्तेषामाम्नायात् त्रान्ता अपि वृत्रादयः पुंसि भवन्ति। यथा—अयं वृत्रो दानवः। अयममित्रो रिपुः। अयं पुत्रः। अयं मन्त्रो होमवाच्यो वेदः। हिशब्दोऽनुक्तसमुच्चयार्थः। तेन छत्र-च्छात्र-विष्णुमित्रादीनां पुंलिङ्गता भवन्ति। अयं छत्रो नर्त्तकः। आतपत्राण[वाचक]शब्दस्य नपुंसकत्वं भवति। इदं छत्रं वर्षातपनिवारणम्। अयं छात्रोऽध्येता। अयं विष्णुमित्रः ॥१॥

## यात्रामात्राभस्त्रादंष्ट्रा विद्यात् स्त्रियां वरत्रां च।

यात्रादिशब्दान् स्त्रियां स्त्रीलिङ्गं विद्याज्जानीयादित्यर्थः। तद्यथा—इयं यात्रा देवकुलागमनम्। इयं मात्रा अक्षरावयवः स्तोकश्च। इयं भस्त्रा लोहधमनी॥ इयं दंष्ट्रा दशनविकारः। इयं वरत्रा त्रिगुणीकृता रज्जुः।

## ईदूदन्तं यच्चैकाच् शरद् दरद् दृषत् प्रावृषश्चैव ॥२॥

ईदूदन्तमिति। ईश्च ऊश्च ईदूतौ अन्ते यस्य तदिदं शब्दरूपम्। ईदूदन्तशब्दः प्रत्येकमभिसंबध्यते। एकोऽच् यस्य स एकाच् एकस्वर इत्यर्थः। यच्च एकाच् प्रातिपदिकम्, तस्य स्त्र्यधिकारात् स्त्रियां तच्छब्दरूपं भवति।

इयं स्त्री योषित् इयं श्रीः देवताविशेषः। इयं भ्रूः नेत्रयोः पक्ष्म। एकाजिति किम्? इह मा भूत्—सेनानीः, ग्रामणीः। शरदादयः स्त्रियां

भवन्ति। इयं शरद् ऋतुः। इयं दरद् ग्रावस्थानम्*। इयं दृषत् शिला। इयं प्रावृट् जलदसमयः। एवकारश्चकारौ पादपूरणे ॥२॥

**स्थूणोर्णे स्त्रीयोगे स्तो गृहशशपूर्वयोर्नपुंसकता।**
**सर्वस्याक्षिनाम्नो जलनाम्नश्चैव मुक्त्वाऽपः ॥३॥**

स्थूणा च ऊर्णा च स्थूणोर्णे स्त्रीयोगे स्तः, स्त्रीलिङ्गे भवत इत्यर्थः। इयं स्थूणा काष्ठमयी द्विकर्णिका। इयम् ऊर्णा मेषलोम। स्थूणोर्णयोर्गृहशशपूर्वयोर्नपुंसकताऽस्तीति। इदं गृहस्थूणम्। इदं शशोर्णम्। गृहशशपूर्वयोरिति किम्? इह मा भूत्—इयं शालास्थूणा, इयं स्थूणा, इयं मेषोर्णा।

सर्वमक्षिनाम जलनाम च नपुंसकं भवति। [अक्षिनाम] यथा—इदमक्षि लोचनं नेत्रं दर्शनम् ईक्षणं नयनमित्यादि। जलपर्यायाश्च। यथा—इदं जलं तोयं सलिलं अम्बु पानीयं नीरं वारि उदकम् इत्येवमादि। मुक्त्वा अप इति। जलवाचिशब्दानां नपुंसकतायामपस्त्यक्त्वा अन्ये जलवाचका नपुंसका भवन्ति। तेन इमा आपः, नित्यं बहुवचनान्तः ॥३॥

**जलकुसुमनाम सर्वं नपुंसकं स्यात्, पद्मस्तु विभाषया।**

जलकुसुमनाम सर्वं निर्विशेषं नपुंसकलिङ्गं भवति। तद्यथा—इदं कमलं पङ्कजं कोकनदं कह्लारं कुशेशयमित्यादि।

जलकुसुमद्वारेण नपुंसकत्वे प्राप्ते पद्मस्य विभाषा क्रियते—पद्मस्तु विभाषया इति। इदं पद्मम्। अयं पद्मः। उक्तञ्च—

वसन्ते शीतभीतेन कोकिलेन वने रुतम्।
अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः ॥

---

* दरत् स्त्री म्लेच्छजातिरित्यमरव्याख्याने क्षीरस्वामी। दरद्रोमकदेशः इति तरङ्गिण्यां स एव। "दरत् स्त्रियां प्रपातेऽपि मेघपर्वतयोरपि" इति मेदिनी।

## अभ्राहतेऽम्बुदाख्या हि केशनखदन्तसंज्ञाश्च ॥४॥

ऋतेशब्दो वर्जनार्थे वर्त्तते। अभ्रशब्दमेकं वर्जयित्वा अम्बुदा मेघास्तेषामाख्या संज्ञा पर्याय इत्यर्थः, ते अम्बुदाख्याः शब्दाः पुंसि भवन्ति।

तद् यथा—इमे अम्बुदाः मेघाः पयोधराः घनाः जीमूताः जलधराः बलाहकाः कन्धराः। इत्येवमादयः। इमे केशाः। इमे दण्डाः। इमे नखाः।

## कण्ठस्तनबाहूनां संज्ञाः पुंसि स्त्रियां भवेद् ग्रीवा।

कण्ठसंज्ञाः स्तनसंज्ञाः बाहुसंज्ञाश्च पुंसि भवन्ति। तद् यथा—अयं कण्ठो गल इत्यादिः। स्तनसंज्ञाः अयं स्तनः कुचः पयोधर इत्यादिः। बाहुसंज्ञाः। अयं बाहुः, भुजः, तरणः, धरणः, चालनः, इत्यादिः। कण्ठशब्दत्वाद् ग्रीवाशब्दस्यापि पुंसि प्रयोगः प्राप्नोतीत्याह—स्त्रियां भवेद् ग्रीवेत्यादि। ग्रीवाशब्दस्यापि (?) स्त्रीलिङ्गता भवति। इयं ग्रीवा शिरोधरा कन्धरा इत्येवमादयः।

## पृष्ठललाटांसोदरजत्रूणि नपुंसकानि स्युः ॥५॥

पृष्ठादयः शब्दा नपुंसके स्युर्भवेयुरित्यर्थः। तद्यथा इदं पृष्ठं पार्श्वयोर्यष्टिः। इदं ललाटं भ्रुवोरुपरि स्थानम्। इदमंसं स्तनोपरिस्थानम्। इदमुदरं जठरः। इदं जत्रु स्कन्धसन्धिः ॥५॥

## ऊर्मिध्वन्यञ्जलयः पुंस्योष्ठकपोलगुल्फसंज्ञाश्च।

ऊर्मिश्च ध्वनिश्च अञ्जलिश्च, ऊर्मिध्वन्यञ्जलयः। एते शब्दाः पुंसि भवन्ति। अयमूर्मिस्तरङ्गः। अयं ध्वनिः। अयमञ्जलिः करपुटः। ओष्ठकपोलगुल्फसंज्ञाश्च। संज्ञाशब्दः प्रत्येकमभिसंबध्यते। ओष्ठश्च कपोलश्च गुल्फश्च ओष्ठकपोलगुल्फाः, एतेषां संज्ञाः पर्यायास्ते पुंसि

भवन्ति। अयमोष्ठः अधरः दन्तच्छदः। अयं कपोलः गण्डः। इत्येवमादयः। गुल्फसंज्ञाश्च। अयं गुल्फः पादग्रन्थिः घुण्ट इत्येवमादयः।

## घञैरच् ऋदोरप् च स्याद्बहुलमन्धकारश्च ॥६॥

घञ् च "एरच्" [ पा० ३।३।५६ ] च "ऋदोरप्" च [पा० ३।३।५७ ]। घञिति प्रत्ययः। "पदरुजविशस्पृशो घञ्" [पा० ३।३।१६] इत्येवमादिना प्रकारेण घञ् विहित इति। "येन विधिस्तदन्तस्य" [पा० १।१।७२] (?)घञ्प्रत्ययान्ताः शब्दाः पुंसि भवन्ति। तद् यथा—पादः, रोगः, वेगः, स्पर्शः, पाकः, त्यागः, योगः, प्रासादः, भेदः, छेदः, दाहः, दोषः, प्रकारः, विकार इत्येवमादयः। एरच्। इवर्णान्तादच्प्रत्ययः। अयं जयः नयः (?)। तथाप्प्रत्ययान्ताः शब्दाः पुंसि भवन्ति। तत्र ॠदन्तात्। अयं करः, गरः, भरः, शरः, नरः। इत्येवमादयः। ऊवर्णान्तात्। अयं लवः, पवः, भवः इत्येवमादयः। घञन्तत्वादन्धकारशब्दस्य नित्यं पुंलिङ्गता स्यादित्याह —बहुलमन्धकारश्च। अन्धकारशब्दो बहुलं पुंलिङ्गे भवति। विभाषा भवतीत्यर्थः। इदमन्धकारम्, अयमन्धकारः। तथाचोक्तम्—

नेहागमोऽस्ति शलभस्य न मारुतस्य स्नेहक्षयोऽपि न भवेत् प्रथमे प्रदोषे।
प्रत्यग्रनूपुररवप्रतिबोधितेन पारावतेन पतता कृतमन्धकारम्॥६॥

## प्राण्यङ्गमिदन्तं वस्तिकुक्षिपाणीन् विमुच्य सर्वं स्त्री।

प्राणो नाम वायुरस्यास्तीति प्राणी। तस्याङ्गं प्राण्यङ्गम्। इकारोऽन्ते यस्य तदिदन्तम्। तत् सर्वं स्त्रीलिङ्गं भवति। तद् यथा—इयं कटिः, श्रोणिः, अंगुलिः, पार्ष्णिरित्यादिः। वस्तिकुक्षिपाणीनामपि इदन्तत्वात् प्राण्यंगत्वाच्च स्त्रीत्वे प्राप्ते बाधः क्रियते। एतान् विमुच्य वर्जयित्वेत्यर्थः। पुंसीत्यधिकारात्तेषां पुंस्त्वमेव भवति। अयं वस्तिर्नाभेरधः। अयं कुक्षिरुदरः। अयं पाणिः हस्त इति।

**जङ्घाशिरास्नुषानासिकाचूडावसाश्चैव [1] ॥७॥**

जङ्घादयः शब्दाः स्त्रियां भवन्ति। इयं जङ्घा जानुनोरधस्तात् पादस्य उपरिष्टाच्च। इयं शिरा देहधारिणी। इयं स्नुषा पुत्रवधूः। इयं नासिका गन्धहारिणी। इयं चूडा शिखा। इयं वसा शोणितविकारः। स्नेहश्च ॥७॥

**स्रक्स्रुक्स्फिक्त्वग्वाग्योषितो हि विद्यात् स्त्रियां द्युनावौ च।**

स्रगादयः शब्दाः स्त्रियां भवन्ति। तद् यथा—इयं स्रक् माला। इयं स्रुक् यज्ञोपकरणभाण्डम्। इयं स्फिक् कटिप्रदेशः। इयं त्वक् बहिश्चर्म। इयं वाक् वाणी। इयं योषित् बाला। द्यौश्च नौश्च द्युनावौ स्त्रियां भवतः। इयं द्यौः स्वर्गः। इयं नौः जलतरणिः। हिशब्दः पादपूरणे।

**दीधितिमेकां मुक्त्वा रश्म्यभिधानं तु पुंस्येव ॥८॥**

दीधितिमेकां वर्जयित्वा रश्मिवाचकाः शब्दाः पर्यायाश्च ये ते पुंसि भवन्ति। तद् यथा—इमे रश्मयः प्रग्रहाः किरणाः अंशवः पादा मयूखाः अभीषवः गभस्तयः घृणयः इत्येवमादयः। दीधितिशब्दः स्त्र्यधिकारात् स्त्रियां भवति। इयं दीधितिः। तु शब्दः पादपूरणे ॥८॥

**मूर्द्धोक्षतक्षमज्जश्लेष्मात्माश्मयुवपूषभी रहितम्। द्व्यच्कं सर्वं नान्तं नपुंसकं पुंसि वा भवेद् ब्रह्मा ॥९॥**

मूर्धन् उक्षन् तक्षन् मज्जन् श्लेष्मन् आत्मन् अश्मन् युवन् पूषन् इत्येतैः शब्दै रहितं वर्जितं यदन्यद् द्व्यच्कं द्विस्वरं च नान्तं प्रातिपदिकं तत् सर्वं

---

१ "वसा स्त्री" इति पाठान्तरम्।

नपुंसकं भवति। यथा—इदं वर्म कवचम्। इदं चर्म। शर्म। भस्म। सद्म। लोम। इत्यवमादयः। मूर्द्धादयो नान्ता द्व्यचूकाः, अतस्तेषामपि नपुंसकताप्नोति इति प्रतिषेधः कृतः—मूर्द्धोक्षतक्षा इत्यादि। पुंलिङ्गाधिकारात् पुंसि भवन्ति। यथा—अयं मूर्द्धा शिरः। उक्षा वृषभः। मज्जाऽस्थिसारः। तक्षा वार्धुकिः। श्लेष्मा धातुविकारः। आत्मा शरीरस्थः। अश्मा नीलः। युवा तरुणः। पूषा आदित्यः। पुंसि वा भवेद् ब्रह्मेति। द्व्यच्कत्वान्नान्तत्वाच्च ब्रह्मन्-शब्दस्य नपुंसकत्वे प्राप्ते पुंस्त्वं वा विधीयते। ब्रह्मन्-शब्दो वा नपुंसकलिङ्गो भवति। इदं ब्रह्म वेदाध्ययनम्। अयं ब्रह्मा प्रजापतिः। यद्येवं। यद् द्व्यच्कं नान्तं तन्नपुंसकं भवति। एवं सति। राजन्-शब्दस्यापि नपुंसकता स्यात्। पुंस्यन्तर्भावो द्रष्टव्यः। तेन राजन्शब्दस्य पुंस्त्वम्॥९॥

## त्रुटिसीमासन्ध्यारात्रयः स्त्रियां धूलिवेणीखार्यश्च।

एते शब्दाः स्त्रियां भवन्ति। इयं त्रुटिः स्वल्पः कालः। इयं सीमा ग्राममर्यादा। इयं सन्ध्या दिवसावसानम्। इयं रात्रिः शर्वरी। इयं धूलिः पांशुः। इयं वेणी केशरचना। इयं खारी परिमाणविशेषः।

## पुंसि निशीथो ज्योत्स्नादयाशलाकाः स्त्रियां नित्यम्॥१०॥

निशीथशब्दः पुंसि भवति। अयं निशीथोऽर्द्धरात्रः। ज्योत्स्नादयाशलाकाः स्त्रियां भवन्ति। इयं ज्योत्स्ना चन्द्रप्रभा। इयं दया करुणा। इयं शलाका लोहधमनी। नित्यग्रहणं विभाषानिवृत्त्यर्थम्॥१०॥

## पुंयोगे कर्णहनू नपुंसके श्मश्रु जानु गुदश्च।

पुंसो योगः पुंयोगः तस्मिन् कर्णहनू भवतः। यथा—अयं कर्णः श्रोत्रम् कुन्तीपुत्रश्च। अयंहनुः...कपोलप्रदेशश्च। श्मश्रुजानुगुदशब्दा नपुंसके भवन्ति। इदं श्मश्रु मुखैकदेशरोमराजिः। इदं जानु जङ्घामध्यस्थानम्। इदं गुदमपानम्।

## एकाभिधानता स्यादस्राश्रुणोर्नित्यम् ॥११॥

अभिधीयते अनेनेति अभिधानम्। एकञ्च तदभिधानं चेति वाक्यम्। तस्य भावः कर्म वा एकाभिधानता स्याद् भवेदित्यर्थः। अस्राश्रुणोर्नित्यम् सन्ततमित्यर्थः। नपुंसकता भवति। इदमस्रं रुधिरम्। इदमश्रु नेत्रजं वारि नयनजलमिति। एक एवार्थः, नित्यवचनं पूर्वत्रानित्यत्वार्थम् ॥११॥

## घुसकिरुपसर्गपूर्वः पुंस्यन्योपपद एवैषौ वा स्त्री।

घु इति। "दाधाघ्वदाबिति" [पा० १।१।२०] षण्णां धातूनां *घुसंज्ञा विहिता, सह किना वर्त्तत इति सकिः। "उपसर्गे घोः किः" [पा० ३।३।९२] इत्यादिना + विहितः किप्रत्ययो गृह्यते। उपसर्गाः प्रादयः "उपसर्गाः क्रियायोगे" [पा० १।४।५९] इति। उपसर्गः पूर्वो यस्य स एव पुंलिङ्गो भवति। यथा— अयमादिर्निधिः। प्रणिधिः। आधिः। सन्निधिः। इत्येवमादयः। अन्योपपदे "कर्मण्यधिकरणे" [पा० ३।३।९३] इति किप्रत्ययः। अयमम्भोधिः। जलधिः। उदधिः। तोयधिः। शरधिः। इत्येवमादयः। इषुशब्दोपपदे वा स्त्री। इयमिषुधिः। अयमिषुधिः। तूणीरम्।

## येभ्यो नञ् तान् पुंस्युक्तान् याच्ञां विना विद्धि ॥१२॥

येभ्यो धातुभ्यो नङ्प्रत्ययस्तान् पुंस्युक्तान् विद्धि जानीहि। याच्ञाशब्दं वर्जयित्वा। "यजयाचयतविच्छप्रच्छरक्षो नङ्" [पा० ३।३।९०] इति नङ्प्रत्ययः। अयं यज्ञः। यत्नः। विश्नः। प्रश्नः। रक्ष्णः। एवं तर्हि याच्ञाशब्दस्यापि नङन्तत्वात् पुंस्त्वं स्यादित्यत आह—याच्ञां विनेति। याच्ञाशब्दः स्त्र्यधिकारात् स्त्रियां भवति। इयं याच्ञा अभ्यर्थना ॥१२॥

---

* डु दाञ् दाने (१०९१), दाण दाने (९३०), दो अवखण्डने (११४८), देङ् रक्षणे (९६२) डु धाञ् धारणपोषणयोः (१०९२), धेट् पाने (९०२) इति षट्।

+ आदिशब्देन "कर्मण्यधिकरणे च" (पा० ३।३।९३) इत्यस्य संग्रहः।

## तनुकायशरीराणि स्त्रीपुंनपुंसकेषु जानीहि ।

एतान् शब्दान् यथासंख्यं स्त्रीपुंनपुंसकेषु विद्धि। इयं तनुः। अयं कायः। इदं शरीरम्।

## दधिसक्थ्यस्थीनि स्युर्नपुंसके स्त्री तु कक्षा स्यात् ॥१३॥

दधि-सक्थि-अस्थिशब्दा नपुंसके स्युर्भवेयुरित्यर्थः। यथा—इदं दधि क्षीरविकारः। इदं सक्थि ऊर्वोर्मध्यम्। इदमस्थि कीकसम्। कक्षाशब्दः स्त्रियां भवेत्। यथा—इयं कक्षा बाहुमूलम्। अन्यच्च। तथाच—

जघनाभरणे स्त्रीणां करिणां मध्यबन्धने।
अवस्थासु च हर्म्याणां नित्यं कक्षा व्यवस्थिता ॥१३॥

## सुमनोऽप्सरोविरहितमद्व्यच्कमसन्तं पुंसि स्यात् ।

सुमनस् अप्सरस् इत्येताभ्यां विरहितमुज्झितमित्यर्थः। अस् अन्ते यस्य तदिदमसन्तं, न विद्येते द्वावचौ यस्य तदद्व्यच्कम्। बह्वच्कमसन्तं पुंसि भवेदित्यर्थः। अयमङ्गिराः। चन्द्रमाः। स्थूलशिराः। पुरूरवाः। उच्चैःश्रवाः। दुर्वासाः। पृथुयशाः। इत्यादयः। सुमनसोऽप्सरसः स्त्र्यधिकारात् स्त्रियाम्। इमाः सुमनसः कुसुमानि। इमा अप्सरसः दिव्यस्त्रियः।

## द्व्यच्कं पुनर्नपुंसकं प्रकृतादन्यत्र वै जरसः ॥१४॥

द्व्यच्कं पुनर्नपुंसकं भवति। इदमोजः। तेजः। वर्चः। शिरः। यशः। अन्धः। रक्षः। स्रोतः। चेतः। पयः। अम्भः। जरस्शब्दस्यापि नपुंसकता स्यादित्यत आह—अन्यत्र वै जरसः। नपुंसकात्

प्रकृताच्च पुंलिङ्गादन्यस्मिन् जरसूशब्दो भवति स्त्रियाम्। इयं जरा वृद्धभावः ॥१४॥

## पुंसि क्षुरखुरबिन्द्विक्षुपायुमणिकीलकेलिकलि-बलयः।

एते शब्दाः पुंसि भवन्ति। तद् यथा—अयं क्षुरः नापितोपकरणः। अयं खुरः पशुपादः। अयं बिन्दुर्विसर्जनीयावयवः। अन्यच्च। अयम् इक्षुः शस्यजातिः। अयं पायुः कटिसंपुवनम्। अयं मणिः रत्नविशेषः। [ अयं ] कीलः शङ्कुः प्रहरणविशेषः। अयं केलिर्हासः। अयं कलिः कलहः। अयं बलिर्दैत्यः राजग्राह्यदेवतोपहारौ च।

## निघसङ्घोद्घोपघ्नौघविघ्नघर्मार्घवर्णाश्च ॥१५॥

निघादयः शब्दाः पुंसि भवन्ति अयं निघः पर्वतः। अयं सङ्घः समूहः। अयमुद्घः प्रशस्तः। अयमुपघ्नः आश्रयः पर्वतश्च। अयमोघो नदीवेगः पुरुपारम्भश्च। विघ्नः कर्मविघातः। घर्मो निदाघः। अर्घः पूजा मूल्यविशेषश्च। वर्णो हरित्पीतादिः ब्राह्मणादिश्च, अकारादीनि चाक्षराणि ॥१५॥

## पणगुणगणकणशोणाः किणफणघुणशाणबाण-चूर्णाश्च पुंसि।

पणादयः शब्दाः पुंसि भवन्ति। अयं पणो विंशतिगण्डकः। अयं गुणः संख्याख्यः; शुक्लादिः पाटलादिश्च। अयं गणः सङ्घातः अयं कणः परिमाणः। शोणो नदः। किणो निकषः। फणो भुजङ्गफटा। घुणः कीटविशेषः। शाणः पाषाणविकारः। बाणः शरः, असुरः षष्टिका च। अयं चूर्णः शकलः खण्ड इत्यर्थः।

## नपुंसके श्वभ्रतृणरणऋणानि ॥१६॥

एते नपुंसके भवन्ति। इदं श्वभ्रं गर्त्तः। इदं तृणं गृहच्छादनद्रव्य-विशेषः। रणं युद्धम्। ऋणमुद्धारः। अधमर्णश्च।

## नित्यं हि पुंसि पन्था बाष्पोष्माध्वानश्च विज्ञेयाः।

एते शब्दाः पुंसि विज्ञेया बोद्धव्याः। अयं पन्था मार्गः। अयं बाष्पोऽश्रु। अयमुष्मा घर्मः। अयमध्वा मार्गः।

## वीणातूणाघोणाघृणास्तु विद्यात् स्त्रियां नियतम् ॥१७॥

एतान् शब्दान् स्त्रियां नियतं निश्चितं विद्यात् जानीयात्। इयं वीणा वाद्यविशेषः। तूणा इषुधिः। इयं घोणा नासिका। इयं घृणा दयाबुद्धिः। तुशब्दः पादपूरणे।

## यदनन्तमकर्त्तरि तन्नपुंसके विद्ध्यनिः स्त्रियामेव।

अन् अन्ते यस्य तदिदमनन्तम्। अकर्त्तरि अन्प्रत्ययान्तं यत् प्रातिपदिकं तन्नपुंसके विद्धि जानीहि। "नपुंसके भावे क्तः" [ पा० ३।३।११४] इत्यनुवर्त्तमाने "ल्युट् च" [पा० ३।३।११५] इति ल्युट्। "युवोरनाकौ" [पा० ७।१।१ ] इत्यनादेशः। इदं वचनम्। भजनम्। भाजनम् पात्रम्। आसनम्। प्रयाणम्। शासनम्। अधिकरणमित्यादि। अकर्त्तरीति किम्? नन्द्यादिभ्यो ल्युः। नन्दनः। रमणः। मदनः। कुलदमनः। शत्रुदमनः। सङ्कर्षणः। मधुसूदनः। जनार्दन इत्यादि। अनिः स्त्रियामेव। एवकारोऽवधारणार्थः। "आक्रोशे नञ्यनिः" [पा० ३।३।११२]। यथा—इयमभोजनिः। अकरणिः। अहरणिः। अखादनिः। अशरणिरित्येवमादिः।

## यौ भावे णापौ तौ पुंस्युक्तौ मन्युमृत्यू च ॥१८॥

ण च अप् च णापौ तौ पुंस्युक्तौ। "णौ ण च" [पा० ३।३।६०] इति णप्रत्ययः। न्यादः। "उपसर्गेऽदः" [पा० ३।३।५९] इत्यप्प्रत्ययः। निघसः प्रघसः। किञ्चान्यौ मन्युमृत्यू पुंसि भवतः। अयं मन्युरदया शोकश्च। मृत्युर्नाशः।

## पटपुटकटकुटघटवण्टवाटजूटवटा हि पुंस्युक्ताः। अवटखटपट्टकिराटकीटाश्च

एते पटादयः शब्दाः पुंसि भवन्ति। अयं पटः प्रावरणः। पुटः पत्रस्य। कटस्तृणस्य। कुटो...गजकुम्भश्च। घटः कुम्भः कलशः। वण्टः फलनिबन्धनम्। वाटः मार्गः। जूटः केशबन्धनम्। वटो वृक्षविशेषः। अवटः कूपः। खटः शिरसि प्रहारः। पट्टः राजप्रासादः। किराटो वणिक्। कीटः क्रिमिः।

## कूटतटयोर्नपुंसकता ॥१९॥

कूटतटशब्दौ नपुंसके भवतः। इदं कूटं द्रव्यस्य। इदं तटं नदीकूलम् ॥१९॥

## घण्टाजटाशटानां प्रथमा प्रकृतिर्वसाशिफानां च। स्वर्नाम्नां पुंयोगस्त्रिविष्टपं स्यादुभयहीनम् ॥२०॥

एते घण्टादयः शब्दाः स्त्रियां भवन्ति। प्रथमा प्रकृतिः स्त्रीलिङ्गमित्यर्थः। इयं घण्टा वाद्यविशेषः। इयं जटा केशविन्यासः। इयं शटा केशरः। इयं वशा मेदः। इयं शिफा कन्दः। अयं स्वर्गः नाकः त्रिदिवः। स्वर्गादिनामत्वात् पुंस्त्वं त्रिविष्टपशब्दस्यापि प्राप्नोतीत्याह—त्रिविष्टपं स्यादुभयहीनम्। न स्त्री न पुमानित्यर्थः। इदं त्रिविष्टपं स्वर्गः ॥२०॥

## संवत्सरगिरिमासर्णवर्त्तुदेवासुराभिधानानाम् ।
## नित्यं पुंयोगः स्याच्छरासिपङ्कारिनाम्नां च ॥२१॥

अभिधानशब्दः प्रत्येकमभिसंबध्यते । संवत्सराभिधायिनां शब्दानां संवत्सरपर्यायाणां गिर्यादिपर्यायाणां पुंयोगः स्यात् इत्यर्थः । तद् यथा—अयं संवत्सरः, हायनोऽब्दः इत्यादिः । अयं गिरिः, पर्वतः, धरः, शैलः इत्यादिः । मासाभिधायिनाम्—अयं मासः, द्विपक्षः । मासविशेषोऽपि पुंसि । चैत्रः । वैशाखः । ज्यैष्ठः । आषाढ इत्यादिः । अर्णववाचिनाम्—अयमर्णवः, समुद्रः, सागरः, पारावारः, सरित्पतिरित्यादिः । ऋतुः । वसन्तः, ग्रीष्मः, हेमन्तः, इत्यादि । देववाचिनाम्—देवः, सुरः, अमरः । असुरवाचिनाम्—असुरः, दैत्यः, दानव इत्यादि । शराभिधायिनाम्—शरः, काण्डः, मार्गणः इत्यादि । असिवाचिनाम्—अयमसिः, खड्गः, मण्डलाग्रः, इत्येवमादिः । पङ्कवाचिनाम्—अयं पङ्कः, कर्दमः, जम्बालः, इत्येवमादिः । अरिवाचिनाम्—अयमरिः, शत्रुः, वैरी, रिपुः, विपक्षः, अमित्रः, सपत्नः, जिघांसुरित्यादिः ॥२१॥

## भाः कच्छुकशारज्ज्विष्टकाश्च नित्यं स्त्रियामीषिका च ।

एते शब्दाः स्त्रियां नित्यं भवन्ति । इयं भाः दीप्तिः । कच्छुः पामा । कशा दमनी । रज्जुः कुशमयी । इष्टका पक्वमृत्तिका । ईषिका वीरणशलाका पष्टिका च ।

## विद्युद्दिग्भूम्यभिधानं वल्लिसरितां च विज्ञेयम् ॥२२॥

विद्युदादीनामभिधानं स्त्रियां भवति । यथा—इयं विद्युत । तडित् । चञ्चला । शतह्रदा । क्षणप्रभा । सौदामिनी । ऐरावती । इत्येवमादयः । दिगभिधानम्—[ इयम् ] आशा काष्ठा ककुप् विदिक् इत्यादयः । भूम्यभिधानम्—इयं भूमिः । धरा । रसा । पृथ्वी । क्ष्मा । इत्यादयः । वल्ल्यभिधानम्

—इयं वल्ली । व्रतती । प्रतानिनी इत्यादयः । सरिदभिधानम् —इयं सरित् । नदी । कुल्या । स्रवन्ती । निम्नगा । तटिनी इत्यादयः ॥२२॥

**छायासुरानिशावालुकाः स्त्रियां स्युश्चमूकथेराश्च ।**

छायादयः शब्दाः स्त्रियां स्युर्भवेयुरित्यर्थः । यथा—छाया वृक्षादेः प्रतिबिम्बः । सुरा मदिरा । निशा रात्रिः । वालुका सिकता । चमूः सेना । कथा प्रसिद्धा । इरा जलभूमिः ॥२३॥

**आपत्सम्पद्विपत्समिद्विप्लुषश्चैव ॥२३॥**

एते शब्दाः स्त्रीलिङ्गे भवन्ति । यथा—इयमापत् व्यसननम् । सम्पत् धनम् । विपत् दुःखम् । प्रतिपत् तिथिविशेषः । समित् काष्ठम् । विप्लुट् बिन्दुः ॥२३॥

**कुशकूबरकुञ्जाङ्कुरकुठारकुन्दकुतुपा हि पुंस्युक्ताः ।**

एते शब्दाः पुंलिङ्गे उक्ताः कथिताः । यथा—अयं कुशः दर्भः । कूबरो रथस्कन्धदेशः । कुञ्जः गहनः । अङ्कुरो बीजप्रादुर्भावः । कुठारः परशुः । कुन्दः पुष्पजातिः । कुतुपश्चर्ममयं पात्रम् ।

**कुलकूलकुङ्कुमानि तु नपुंसकान्येव जानीयात् ॥२४॥**

एतानि नपुंसकानि जानीयात् । एवकारोऽवधारणे । इदं कुलं द्विजातीनाम् । कूलं नदीतटम् । कुङ्कुमं काश्मीरम् ॥२४॥

**लोहमुखपर्णवनधनसंज्ञाश्च नपुंसके प्रोक्ताः ।**

संज्ञाशब्दः प्रत्येकमभिसम्बध्यते । लोहादिसंज्ञा नपुंसके भवन्ति । इदं लोहं कालायसम् आयसम् । इदं मुखं, लपनम् तुण्डमाननमित्यादि । इदं पर्णं पलाशमित्यादि । इदं वनं विपिनं काननमित्यादि । इदं धनं

**शीरार्थौ पुंस्यक्तावटवी तूक्ता स्त्रियामेव ॥२५॥**

शीरार्थौ शब्दौ पुंसि भवतः। अयं शीरः अलंकारः। अर्थो द्रव्यम्। अटवी तूक्ता स्त्रियामेव। इयमटवी वनम्॥२५॥

**राशिपलाण्डुकमण्डलुगण्डुतूलमुहूर्त्तपर्शुशङ्कूनाम्।**
**दृति-सीधु-कंटकानाञ्च पुंसि गदितः प्रयोगो हि ॥२६॥**

एषां प्रयोगः पुंसि गदितः कथितः। राशिर्धान्यानाम्। पलाण्डुर्लशुनजातिः। कमण्डलुः काष्ठमयं जलपात्रम्। गण्डुः कुब्जम्। तूलः कार्पासादेः। मुहूर्त्तो द्वादशात्मकः। पर्शुर्वृक्षभेदः। शङ्कुश्चिह्नं कीलश्च। दृतिश्चर्म। अयं सीधुः सुरा। अयं कण्टको हस्तिकवचम्॥२६॥

**शालामालादोलावेलाफेलाशिलातुलालीला।**
**सेनापालिबलिदद्रुवागुराश्च स्त्रियामुदिताः॥२७॥**

इयं शाला गृहविशेषः। माला स्रक्। वेला कूलं समुद्रस्य। दोला क्रीडासाधनम्। फेला भुक्तोच्छिष्टं धानाश्च। शिला अश्मा। तुला पलशतमुन्मानम्। लीला विदग्धचेष्टा। सेना हस्त्यश्वरथपदातिसमुदायः। पालिः पंक्तिप्रदेशः। बलिः करः, उपहारः। दद्रुः कुष्ठविशेषः। वागुरा मृगबन्धनी रज्जुः॥२७॥

( क्रमशः )

# विशेषतो द्रष्टव्यम्

विविधप्रतिबन्धकवशात् परिषत्पत्रिकायाः प्रकाशने भूयान् विलम्बः समजनि, तेन चातिमात्रं प्रकुपिता अस्याः प्रणयिमहाभागाः। अत एव यथाकालं प्रकाशनमभिलष्यद्भिरस्माभिरविगणय्य द्रविणव्ययं तृणीकृत्य च शरीरस्वास्थ्यं युगपदेव संख्याचतुष्टयसंमुद्रणायाऽऽस्थितः प्रयासः। स चास्माकं प्रयासः सफलत्वमापन्न इति निवेदयन्तः कमपि प्रमोदातिशयमनुभवामः। इतः परं च प्रतिमासमेव यथावसरं प्रकाशमासादयेत् संस्कृतसाहित्यपरिषत्, आख्यानाख्यायिकाप्रत्नतत्त्वज्योतिस्तत्त्वादिनानाविधहृदयङ्गमविषयसन्निवेशाच्च नितरामावर्जयेत सचेतसां चेतांसीति सुदृढमाशंसामहे। एवञ्च त्वरातिशयात् सहकारिसम्पादक-शोध्यपत्रसंशोधकादीनां च कलिकातायामनुपस्थित्या सञ्जाताः कतिचन प्रमादा मर्षयितव्याः पाठकमहाभागैरिति प्रार्थ्यते। माघसंख्यायां प्रकाशिते गङ्गास्तोत्रसप्तमपद्ये लिपिकरप्रमादवशादेवादर्शेषु 'शान्तनव'शब्दस्य वकारो नोपलभ्यते, पादपूरणार्थं स्वपेक्ष्यत एव, अत एव न खलु तत्र लेशतोऽपि च्युतिसंस्कृतदोषस्य सम्भव इति सर्वमवदातम्।